॥ श्रीजगदम्बायैनमः ॥

॥ श्रीगणाधिपतयेनमः ॥

॥ मरुधराधीशराजचिन्हम् ॥






राजचिन्हे वंशबोधार्थं भगवान्सूर्यः। मरुधराधीशस्य सूर्य
वंश्यत्वात्। कान्यकुब्जराज्यस्थितिदानपत्रेषु सूर्यवंशोद्भव

इष्टबोधार्थं च श्येनः । एषां कुलदेवी मनसानाम्नी बभूव। मनसाशब्दश्च भार्यायामिच्छापरपर्यायः। अस्याभिप्रायश्च, निजेच्छया संसारस्रष्ट्री । सा च विन्ध्याचलवासकरणाद्विन्ध्यवासिनीतिनाम्ना प्रसिद्धिमगमत् । ततश्च तया कदाचिच्छ्येनरूपं विधाय राष्ट्ररक्षाऽकारीति राष्ट्रश्येनेतिनाम्ना प्रख्यापयतेस्म । मेदपाटदेशे एकलिङ्गनामा भगवान्पार्वतीपतिर्विराजते । यस्य वरदानतो गहलोतजातीयो बापानामक्षत्रियो विक्रमीयचतुरशीत्यधिकसप्तशततमे ७८४ वर्षे चित्रकूटाधिपतिरभवत् । अधुना तद्वंश्या एव राणापदं दधानाश्चित्रकूटं प्रशासति । एकलिङ्गमहिमद्योतकमेदपाटेश्वरमहाराणाकुम्भाकारितैकलिङ्गमाहात्म्यस्यैकादशेऽध्याये राष्ट्रश्येनाशब्दस्य निरुक्तिरुक्ता–

" श्येनारूपं सम्यगास्थाय देवि !
राष्ट्रं त्राहि त्राह्यतो वज्रहस्ता ॥
दुष्टान्दैत्यान् राक्षसान्वै पिशाचान्
भूतान्प्रेतान् योगिनीजृम्भकेभ्यः ॥१६॥" इति ॥

तत्रैव च तस्यैवाध्यायस्य द्वाविंशे पद्येऽपि

"राष्ट्रश्येनेतिनाम्नीयं मेदपाटस्य रक्षणम् ॥
करोति न च भङ्गोऽस्य यवनेभ्यो मनागपि ।२२।" इति ॥

मेदपाटदेशे एकलिङ्गस्य मन्दिराद्दक्षिणतो भगवत्या राष्ट्रश्येनाया मन्दिरमस्ति । राजराजेश्वरपूर्वजो रावधूहड़नामा मरुदेशस्य खेड़नामपुरातनराजधानीतः स्वस्य कुलदेव्या

राष्ट्रश्येनायाः पादाब्जमवलोकयितुं दक्षिणाशायां स्वपूर्वजराजधानीं कल्याणिनगरीमियाय॥ स च भगवत्याश्चरणारविन्दमभिमृश्य तां मूर्तिं शकट आरोप्य मरुदेशमानिनाय। स च शकटो मरुदेशान्तर्गतनागांनाग्रामे चलन्नवरुद्धः। ततश्च भगवत्याः स्थितिं तत्रैवाभिलषितां विदित्वा तां तत्रैवातिष्ठिपत्। पुरा मरुदेशे नागवंशीयाः क्षत्रिया राज्यमकुर्वन्। तन्निर्मितोऽयं नागांनाग्रामः। तत्संबन्धाच्च राष्ट्रश्येनानाम नागांनेचीति पर्यवर्तत। नागांनेचीतिशब्दोऽप्यधुनाऽपभ्रश्य नागणेचीति प्रथितः। दक्षिणदेशे संबन्धसूचकः "ची" प्रत्ययोस्ति॥

हरिहरयोश्चक्रशूलवद्राष्ट्रवराणां मुख्यं शस्त्रं खड्ग इति तद्बोधार्थं खड्गः॥

कार्यस्य बोधार्थं "रणवंकाराठौड़ (*)" इति जनश्रुतिः॥

संज्ञा तु प्रधानपुरुषस्य स्वेष्टदेवस्य कार्यस्य देशस्य ग्रामस्य च संबन्धाद्भवति। तत्र सूर्यस्य मूलपुरुषत्वाद्राजराजेश्वरकुलं सूर्यवंश्यमित्युच्यते॥ सूर्यवंशे च रघोरतिप्रसिद्धत्वादेतत्कुलं राघवमित्यपि भण्यते॥ अस्य कुलस्य राष्ट्रश्येनेष्टदेवीति "राष्ट्रश्येनाया इदं राष्ट्रश्येनीयम्" इति व्युत्पत्त्या राष्ट्रश्येनोपासकत्वाद्राष्ट्रश्येनीयमिति संज्ञा बभूव। "नामैकदेशे नामग्रहणम्" इति वचनात् "भीमो भीमसेनः, रामो रामचन्द्रः" इतिवद्राष्ट्रश्येनीया एव राष्ट्राख्यया प्रसिद्धिमागताः। ततश्च त एव सुष्ठुकार्यकरणान्महाराष्ट्रा राष्ट्रकूटा राष्ट्रवरा इति संज्ञाविशेषमधिगताः। राष्ट्रवर्यशब्दश्च राष्ट्रवरापरपर्यायः। वर-मणि-महत्-छत्र-तिलक-शिखर-दीपक-अव-

* "रणवंका राष्ट्रवराः" इति संस्कृतम्॥

तसादयः शब्दाः श्रेष्ठत्वबोधकाः। यथा—"महादेवः, मुनिवरः" इत्यादिशब्देषु। कूटशब्दश्च शिखरापरपर्यायः। महाराष्ट्राणां शिलालेखा अनुमानतो द्विसहस्रवार्षिका भाजागुफा-कार्ली-गुफा नानाघाटादिस्थानेषु पर्वतीयपाषाणोत्कीर्णा दाक्षिणात्यदेशेष्वद्याप्युपलभ्यन्ते॥ राष्ट्रकूटानामनेके प्राक्तनाः शिलालेखा दानपत्राणि च वरीवृतति। दक्षिणदेशाधीशराष्ट्रकूटकृष्णात्मजेन्द्रनृपस्याष्टशतं सेनागजा आसन्। तद्राजधानी कुत्राभूदिति न विज्ञातम्। स चालुक्यैर्विजित इति चालुक्य-(सोलंखी) प्रशस्तौ जयसिंहवर्णने लिखितम्—

"यो राष्ट्रकूटकुलमिन्द्र इति प्रसिद्धं
कृष्णाह्वयस्य सुतमष्टशतेभसैन्यम्॥
निर्जित्य दग्धनृपपञ्चशतं बभार
भूयश्चुलुक्यकुलवल्लभराजलक्ष्मीम्॥" इति॥

तस्मिन्समये चालुक्या वल्लभराज इति पदेन प्रथिताः। नयपालवंशावलिपुस्तकेऽपिदमुपलभ्यते—"रुद्राष्ट (८११) शकसंवत्समरसयुगाङ्क (६४६) विक्रमवर्षे कर्णाटकवंशसंस्थापको नान्यदेवो दक्षिणदेशादागत्य सकलं नयपालमण्डलं विजिग्ये। कर्णाटकषड्भूपाला नयपाले राज्यमकार्षुः" इति॥ दाक्षिणात्यराष्ट्रकूटेषु नान्यदेवः कनिष्ठात्मज इति संभाव्यते॥ राष्ट्रवराणां च क्वचित्क्वचिच्छिलालेखा बहूनि च दानताम्रपत्राणि प्राप्यन्ते। राष्ट्रवरशब्दस्यापभ्रंशो "राठौड़" इति शब्दः। वैक्रमे भूशरकरचन्द्रेऽब्दे १२५१ राजनीपतिपठानान्तर्गतगोरीजातीयशहाबुद्दीनयवनेन सह युध्यमानो गजारूढो जय-

चन्द्रमहाराजोऽर्द्धचन्द्रशरेण कृत्तकंधरोऽपि शरवृष्टिकरणात्कबन्धसंज्ञामवाप । तत एव च तद्वंश्याः कबन्धजसंज्ञामलभन्त। कवन्धजसंज्ञापभ्रंशः कमंधजेतिशब्दः। मूर्द्धच्छेदानन्तरं युद्धक्रियाकारिकलेवरं कबन्ध इत्युच्यते । "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम् ।" इत्यमरः ॥ राजराजेश्वरकुलं देशसंबन्धात् "मारवाड़ा" इति ग्रामसंबन्धाच्च "कन्नौजा, खेड़ेचा, मण्डोवरा, जोधपुरा" इति संज्ञया प्रोच्यते ॥




## ॥ प्रस्तावना ॥

अस्थिरेऽस्मिन्संसारे स एव श्लाघ्यजन्मा यस्य नाम स्थिरीभवेत्। नाम्नः स्थिरीभावे च मारवीयं जनश्रुतिः। "गीतड़ा कै भींतड़ा" इति। गीतडेति काव्यम्। भींतडेति देवालयजलाशयदुर्गादिनिर्माणम्। संसारस्यानादित्वादत्राव-तारश्चक्रवर्त्तिमहाराजाश्चासंख्या एव बभूवुः। अवताराणा-मसंख्यत्वं च श्रीमद्भागवते प्रतिपादितम्—

"अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः" ॥इति॥

न चाधुना खलु तेऽसंख्यावताराश्चक्रवर्त्तिमहाराजाश्च नाम्नापि विज्ञायन्ते। वाल्मीकीयरामायणग्रन्थाद्रघुकुलकेतो-र्दशरथसुतश्रीरामचन्द्रावतारस्य, श्रीमद्भागवतग्रन्थाद्यदुवंश-शिरोमणेर्वसुदेवसूनुश्रीकृष्णचन्द्रावतारस्य, महाभारतग्रन्था-त्कौरवकुलकलशमहाराजयुधिष्ठिरस्य च नामाद्यापि सकुटुम्बस्य स्थिरत्वमायातं स्थास्यति च सर्वकालम्। एव-मन्येषामपि ॥

इममेव सिद्धान्तं पोषयन्मेदपाटेश्वरमहाराणाराजसिं-हः स्वनिर्मापितराजसमुद्रतडागतटवर्त्तिप्रासादगवाक्षपाषा-णोत्कीर्णप्रशस्तौ लिलेख—

"रामः क्वापि च लक्ष्मणः क्व च हली कृष्णश्च रामायणे,
श्रीमद्भागवते च चेन्न कवयेद्व्यासश्च वल्मीकिभूः॥
को ध्यायेदनयोः स्वरूपमथवा संपूजयेद्वेद वा,
नाम स्थावरयद्भिरत्र सुजनैः पूज्याः कवीशाङ्घ्रयः"
॥ १ ॥ इति ॥

प्राङ्मौर्यवंश्यचत्त्रिया बभूवुः। मौर्यशब्दापभ्रंशो

"मोरी" इति लोके प्रथितः । तेषु चित्राङ्गमौर्येण स्वनाम्ना चित्राङ्गाभिधो दुर्गो निरमायि । स च लोकभाषायां "चित्तौड़" इति नाम्ना प्रसिद्धः । मौर्या मेदपाटमालवादिजनपदेषु सुचिरं राज्यमशासुः । तत्र मानमौर्येण विक्रमार्कस्य सप्तत्युत्तरसप्तशततमे (७७०) वर्षे चित्राङ्गदुर्गे मानसरोवराभिधं सरो निर्मापितम् । साम्प्रतं मौर्याणां निःशेषत्वेऽपि तन्निर्मितदुर्गसरोवराभ्यां चित्राङ्गमानमौर्ययोर्मौर्यवंशस्य चाद्यापि नाम्नः स्थिरत्वमनुभूयते, स्थास्यति च चिरम् ॥

मनुजस्य मर्त्यलोके यावत्कीर्तिप्रसारस्तावत्स स्वर्गसुखमनुभवति । तदुक्तं महाभारतस्योद्योगपर्वणि पञ्चत्रिंशाध्याये—

"यावत्कीर्तिर्मनुष्यस्य पुण्या लोके प्रगीयते ॥
तावत्स पुरुषव्याघ्र ! स्वर्गे लोके महीयते ॥" इति ॥

उत्तमजना निजनामस्थैर्याभिलाषिण इत्यस्मत्स्वामिना महाराजाधिराजराजराजेश्वरयशवन्तसिंहेनालंकारविषयकनूतननिबन्धनिर्माणसूचनं व्यधायि । तदाज्ञया च मया नूतननिबन्धनिर्माणारम्भ एव चिन्तितम् । "गीर्वाणभाषायां नरभाषायां चालंकारविषयकानेकनिबन्धसत्त्वात्पिष्टपेषणं व्यर्थमिति कापि नवीनैव युक्तिरुन्नेया, येन विद्वांसोऽस्य ग्रन्थस्यावलोकने दत्तचित्ताः, विद्यार्थिनश्चास्य पठनाद्विलक्षणलाभभाजो भवेयुः" इति । ततश्च राजराजेश्वरस्य पुण्यप्रभावाच्चन्द्रालोकस्य—

"स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयम् ॥"

इत्येतत्कारिकास्मरणादियं स्फूर्तिरुद्भूता " इतरकवयोऽलंकाराणां नामान्येव लक्षणानीति नाबोधिषुः। तत एव च सर्वे नामातिरिक्तलक्षणानि व्यदधुः। केवलं जयदेवकविः स्मृतिभ्रान्तिसंदेहेत्यलंकारत्रिकस्यैव नामरूपलक्षणमज्ञासीत्। किंतु " तदङ्गालंकृतित्रयम् " इति कथनाज्जयदेवमतेऽपि तदतिरिक्तालंकाराणां नामरूपलक्षणं नेति सिद्धम्। किं च, जयदेवस्येदं मतमतोऽपि सिध्यति, एतदलंकारत्रयस्य नामरूपलक्षणमुक्त्वा तदतिरिक्तसमस्तालंकाराणां नामेतराणि लक्षणानि कथितानीति। तथा च कविकृतनाम्नां सार्थकत्वान्नामान्येव कुतो न लक्षणानि " इति॥ ततश्च प्रत्येकालंकारस्यानेकोदाहरणदर्शने नाम्नामवयवार्थविचारे च श्रीपरमेश्वरप्रसत्तेः समस्तालंकाराणां नामान्येव लक्षणानीति सिद्धं नः संकल्पितेन॥

अस्य यशवन्तभूषणस्य सप्ताकृतयो भवन्ति। तत्र प्रथमाकृतावुपोद्घातः, द्वितीयाकृतौ काव्यस्वरूपम्, तृतीयाकृतौ शब्दालंकारः, चतुर्थाकृतावर्थालंकाराः, पञ्चमाकृतौ रसवदाद्यलंकाराः, षष्ठाकृतावन्तर्भूतालंकाराः, सप्तमाकृतौ च ग्रन्थसमाप्तिः समकालिकभूपालगणना पारितोषिकं चेति वर्णितम्॥

रसिकविद्वांसो गुणग्राहकदृशेमं प्रबन्धं पश्येयुरिति सप्रश्रयमाशासे॥

कविराजा—मुरारिदानः॥

## ॥ सूचीपत्रम् ॥

॥ श्रीगणाधिपतये नमः ॥

॥ श्रीजगदम्बायै नमः ॥




# ॥ यशवन्तभूषणम् ॥

वन्दे वाञ्छितदातारं विघ्नहर्तारमीश्वरम् ॥
अर्चितं सुरनाथाद्यैर्गजाननमहर्निशम् ॥ १ ॥
श्रीमान् राष्ट्रवरोत्तंसो यशवन्तनरेश्वरः ॥
चिरं शास्तु महीं ध्यायँश्चन्द्रचूडपदाम्बुजे ॥ २ ॥
आस्ते मरुमहेन्द्रस्य सभायां प्रतिभायुतः ॥
ख्यातः सर्वगुणोपेतो मुरारिः कविशेखरः ॥ ३ ॥
कविना तेन विचित्रो नरभाषायां व्यधायि सुमनोज्ञः ॥
यशवन्तयशोभूषणनामाऽलंकारसंदर्भः ॥ ४ ॥
तत्सारभूत एष संक्षिप्तोऽलंकृतिग्रन्थः ॥
यशवन्तभूषणाख्यो मनुजगिरायां मुरारिणा वि-
हितः ॥ ५ ॥
आसोपारामकर्णाह्वो दाधीचो बलदेवभूः ॥
अनुवादं करोत्यस्य सुरवाण्यां नृपाज्ञया ॥ ६ ॥

---

बहवो बहुधोपास्य(*) यस्य पारं न लेभिरे ॥
वन्दे तं परमात्मानं मुरारिः कविराडहम् ॥ ७ ॥

---

* यमिति कर्मपदमध्याहार्यम् ॥

कुले कवीनां किल चारणाना-
मवाप्तरूपा नवलक्षधा प्राक् ॥
शक्तिस्ततोऽभूत्करणीति नाम्ना
चकार वीका(*)ख्यमियं नृपालम् ॥ ८ ॥

प्रमादेनावकाशो मे वोधः सिद्धान्त(†)दर्शनैः ॥
दत्तो यैः पण्डितैः प्राच्यैर्वन्दे तानुपकारिणः ॥ ९ ॥

यां शास्त्याङ्गलमेदिनीं वसुमतीं या भारतीं रक्षति
भानुर्गच्छति यत्र यत्र धरणी सा सा च यस्या वशे ॥
नैवं पूर्वभवाः प्रजाः सुखभुजोऽभूवन्यथा साम्प्रतं
विक्टोर्या नृपतीश्वरी विजयते सेयं प्रजाभा-
ग्यतः ॥ १० ॥

यस्याः श्रीयशवन्तसिंहनृपतिः सेनागणैर्भ्रातृभिः
साहाय्यस्य विधिं विधातुमनिशं बद्धादरो वर्तते ॥
सा चायं मरुवल्लभश्च जगतां रक्षाविधौ दक्षिणौ
भूयास्तां पृथिवीतले चिरतरं यावच्छशाङ्को
रविः ॥ ११ ॥

---

* विक्रमार्कस्य षोडशे शतके आदिशक्तिः करणीनाम्ना चारणजातावंशेनावततार। योधपुरदुर्गनिर्माणारम्भे तामाहूय मण्डोवरदुर्गाधीशो रावयोधाख्यस्तत्करकमलेन खातपूर्तिं चकार। सा च प्रयान्ती तत्सकाशात्तस्य कुमारं वीकाख्यमर्थयित्वा निनाय। तं च स्वप्रभावेण जाङ्गलदेशाधिपतिमकार्षीत्। तेनाधासितं वीकानेरनामकं नगरं तद्वंश्या अद्यावधि प्रशासति। तस्मान्नगराद्द्वियोजने देशणोकसंज्ञके ग्रामे करणीदेव्या मन्दिरं वरीवर्ति। सन्ति च वीकानेरभूपालास्तस्या भक्ताः ॥

† वादिप्रतिवादिभ्यां निर्णीतोऽर्थः सिद्धान्तः ॥

# ॥ अथ राजवंशवर्णनम् ॥

---

भुवनस्यावतंसोऽसौ रविवंशो विराजते ॥
अवातरद्रमाकान्तो यत्र रामात्मना पुरा ॥ १२ ॥
ततः कतिपये कालेऽवधौ प्राप्ते पुरातनम् ॥
तस्माद्रघु(*)कुलात्स्वीयमयोध्यानगरं च्युतम् ॥१३॥
धारयित्वा श्येनरूपं राष्ट्ररक्षा कृता यतः ॥
मनसा(†)कुलदेव्यास्तु राष्ट्रश्येनाऽभिधाऽभवत् ॥१४॥
ख्याताश्च राष्ट्रश्येनीयास्ततो रघुकुलोद्भवाः ॥
देव्याः प्रसादात्तेऽभूवन् महावैभवशालिनः ॥१५॥
नामैकदेशग्रहणे नाम्नो हि ग्रहणं भवेत् ॥
ततस्तु राष्ट्रश्येनीयाः प्रसिद्धा राष्ट्रनामतः ॥१६॥
पुनः प्राप्ता विशेषत्वं राष्ट्राः सत्कार्ययोगतः ॥
केचित्तत्र महाराष्ट्रा राष्ट्रकूटाः परेऽभवन् ॥ १७ ॥
मरुदेशेऽस्ति नगरी हस्तिकुण्डीति नामतः ॥
राष्ट्रकूट(‡)शिलालेखस्तत्र प्राप्तः पुरातनः ॥ १८ ॥

---

* सूर्यवंशे रघुमहाराजो महाप्रतापशाली बभूवेति तद्वंश्या राघवाख्यया प्रथिताः । तत एव च रामचन्द्रस्य राघव इति नामान्तरम् ॥

† मनसानाम्नी कुलदेवी, तस्याः ॥

‡ अयं शिलालेखो गुणशरखचन्द्र १०५३ मितविक्रमवर्षीयो राष्ट्रकूटधवलराजविषयकः । मरुदेशवासिनो धवलराजवंश्या वर्तमानसमये हस्तिकुण्डीसंबन्धेन "हतूंडिया" इति नाम्ना लोके प्रख्याताः ॥

आसन् राष्ट्रवरेत्याख्या मरुदेशेशपूर्वजाः ॥
तेषु राष्ट्रवराः केचित्प्रययुर्दक्षिणां दिशम् ॥ १९ ॥
तत्र कोङ्कणकर्णाटादीन्देशान्प्राप्य वीर्यतः ॥
कल्याणीनगरे राज्यमकुर्वन्निश्चलाश्चिरम् ॥ २० ॥
ख्यातिभिर्दानपत्रैश्च येषां नामानि भूभुजाम् ॥
ज्ञातानि तेषां लिख्यन्ते नामानि क्रमशो मया ॥ २१ ॥
आसीदस्मिन्कुले श्रीमान् यशोविग्रहभूपतिः ॥
तनयोऽस्य महीचन्द्रस्ततो राज्यमपालयत् ॥ २२ ॥
प्रतापतापितारातिः श्रीचन्द्रस्तत्सुतोऽभवत् ॥
कन्नौजपत्तनं प्राप स्वस्य बाहुबलेन सः ॥ २३ ॥
पश्चान्मदनपालोऽभून्मदनेन समाकृतिः ॥
ततो गोविन्दचन्द्रोऽभूद्गोविन्दप्रतिमो बले ॥ २४ ॥
सूनुर्विजयचन्द्रोऽस्य विजेता सर्वभूभुजाम् ॥
जयचन्द्रमहाराजस्तनयस्तस्य भूपतेः ॥ २५ ॥
सर्वतो विपुलान्देशान्काश्यादीन्स महाबलः ॥
समाक्रामद्वैभवेन बभूव मघवोपमः ॥ २६ ॥

निवेशदेशावधि निर्गमस्थला-
त्प्रयाणकाले बलमस्य पङ्गुवत् ॥
जगाम संलग्नतया निरन्तरं

पदं ततोऽभूद्दल(*)पङ्गुलाभिधम् ॥ २७ ॥
कलौ युधिष्ठिरान्येन राजसूयो महाक्रतुः ॥
न कृतस्तं विधायैष वेदशास्त्रविदां वरः ॥ २८ ॥
अनेकांस्तर्पयामास मखभुग्द्विजवन्दिनः ॥
तेन ख्यातिं परां लेभे सर्वत्र जगतीतले ॥ २९ ॥

युग्मम् ॥

सुल्तानपदमापन्नानष्टौ यवनभूपतीन् ॥
प्रगृह्यैकदिने पश्चात्तत्याजोग्रपराक्रमः ॥ ३० ॥
अतो हेतोरयं राजा सुल्तानग्रहमोचनः ।
इतीह पदवीं प्राप दुर्लभामितरैर्नृपैः ॥ ३१ ॥

युग्मम् ॥

इन्दुबाणाक्षिशीतांशु(१२५१)मिते विक्रमवत्सरे ॥
सुलताञ्शाह (†) बुद्दीनयवनो योद्धुमागतः ॥ ३२ ॥
युद्धेऽर्द्धचन्द्रबाणेन कृत्तमूर्द्धा भवन्नपि ॥

---

(*) जयचन्द्रमहाराजो दलपङ्गुलेतिपदभाग्बभूव ॥ दल (सैन्यं) पङ्गुरिव यस्येति ॥ दलशब्दो लोकभाषायां सेनावाची ॥ अत्रायमभिप्रायः ॥ यथा, अपङ्गोः पादेन चलने व्यवधानं भवति तथा पङ्गोश्चलने न भवति । पङ्गुस्तु भूमिं स्पृष्ट्वैव सर्पति । अतोऽविच्छिन्नैका रेखा संपद्यते । तथैव जयचन्द्रमहाराजस्य सैन्याधिक्येन निर्गमस्थलान्निवेशस्थानपर्यन्तमविच्छिन्नैकश्रेणिरासीदिति ॥

(†) यावनीभाषायां राजा सुलतान्पदवाच्यः । सुलतान् शाहबुद्दीनयवनो गजनीनगरीपतिरभवत् ॥

निषङ्गावकरोद्रिक्तो कंचित्कालं गजे स्थिरः ॥ ३३ ॥
कबन्धेति पदं लेभे ततोऽसौ धरणीपतिः ॥
ततः कबन्ध(*)जान्प्राहुर्वंश्यानस्य महीपतेः ॥ ३४ ॥
च्युताः कन्नोजनगरात्तदीयाः पतयोऽभवन् ॥
गोविन्ददुर्गस्याद्येतच्छमशाबादिति कथ्यते ॥ ३५ ॥
वरदा(†)यिश्येननामा जयचन्द्रात्मजोऽभवत् ॥
मृतो राज्याप्तिपूर्वं वा पश्चाद्वेति न निर्णयः ॥ ३६ ॥
सेतुरामा(‡) भिधस्तस्य तनयः सनयोऽभवत् ॥
न चोपलब्धं चरितं चिरकालतयैनयोः ॥ ३७ ॥
सीहामहीपतिः पश्चादासीत्सिंहपराक्रमः ॥
चक्रे दिग्विजयं वीरो द्वारकायात्रया सह ॥ ३८ ॥
तदात्मजनुरास्थानभूपालोऽभवदुत्तमः ॥
पाताभूच्छुल्कमादाय पालीपत्तनवासिनाम् ॥ ३९ ॥

(*) कबन्धजशब्दापभ्रंश "कूमधज" इति ॥ "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमर ॥

(†) एतन्नामार्थस्तु राष्ट्रश्येनादेव्या लभ्यमानवर । विग्रहस्तु "वरदायिनी श्येना यस्मै स वरदायिश्येन । अत्रापि राष्ट्रश्येनानाम्न एकदेशस्य ग्रहणम् । राष्ट्रवरेत्यत्र राष्ट्रश्येनीयशब्दस्य पूर्वार्द्धस्य ग्रहणमिह तूत्तरार्द्धस्य ॥

(‡) सेतुराम इति नामाक्षरार्थ सेतुबन्धको राम इति । शाकपार्थिवादित्वान्मध्यमपदलोपी समास । परशुरामादितो भेदप्रदर्शनाय 'सेतु' इति विशेषणम् । एतन्नामकरणप्रयोजन तु सेतुबन्धकरामसदृशो भूयादिति ॥

ततो गुहिल(*)भूपालान्निराकृत्य मरुस्थले ॥
राज्यं संस्थापयामास खेड़पुर्यामयं निजम् ॥ ४० ॥
पालीपुर्यां तु यवनैर्वेष्टितायां महाबलैः ॥
नियुध्य तैः समं स्वीयमार्पयच्छंभवे शिरः ॥ ४१ ॥
ततो धूहड़भूपालः साभिमानोऽतिविक्रमः ॥
कन्नोजनगरं गत्वा युयुधे यवनैः सह ॥ ४२ ॥
ततो मण्डोवराधीशैः प्रतीहारैः सुदुर्मदैः ।
क्षत्रियैः सह संयुध्य जगाम विबुधालयम् ॥ ४३ ॥
रायपालस्ततो राज्यं चकारातुलविक्रमः ॥
रक्षन्प्रजाः स दुर्भिक्षे भूमा(†)विन्द्रपदं गतः ४४ ॥
कनपालोऽथ जालन्सीसंज्ञश्च पृथिवीभुजौ ॥
युद्ध्वा यवनभूपालैः स्वस्वकाले दिवं गतौ ॥ ४५ ॥
चाहुमानैः सिवाने(‡)शैर्युद्ध्वा छाडामहीपतिः ॥
त्यक्त्वा देहमितः स्वर्गमारुरोह रणोत्सुकः ॥ ४६ ॥
यवनानां महानीकः समायादुग्रविक्रमः ॥
सिवानादुर्गमादातुं चाहुमानधरापतेः ॥ ४७ ॥
साहाय्यार्थं तदा तस्य गतस्तीडामहीपतिः ॥

(*) चित्रकूटाधीशमहाराणासजातीया गुहिलाः खेडपुरीं पालयामासुः । आस्थाने निराकृताश्चैतद्वंश्या अधुना गुर्जरभूमौ पालीताणाभावनगराख्यनगरयोरधीशा ।

(†) रायपालो दुर्भिक्षे प्रजापालनेन महीरेलणपदं प्राप्तः । मरुभाषायां महीरेलणशब्द इन्द्रस्य वाचकः । महीरेलणशब्दार्थस्तु वारिप्रवाहेण भूमेराप्लावयिता ॥

(‡) मरुदेशवर्तिदुर्गस्येदं नाम ।

युद्ध्वा बहुविधं तत्र त्रिदिवेशालयं ययौ ॥ ४८ ॥
ततः सलखभूपालं सामन्तः(*) शरणं गतः ॥
कृतापराधो दिल्लीशे तदर्थं सोऽत्यजच्छिरः ॥ ४९ ॥
शरणागतदल्ला(†)ख्ययवनेशस्य कारणात् ॥
देशं त्यक्त्वा तत्प्रसङ्गाद्वीरमाख्यो दिवं ययौ ॥ ५० ॥
शाखास्ति प्रतिहाराणामींदाव्हा तद्भटोत्तमाः ॥
निहत्य यवनान्दुर्गं जिग्युर्मण्डोवराभिधम् ॥ ५१ ॥
तत्त्राणकरणेऽशक्तान् स्वान् विज्ञाय विचक्षणाः ॥
चूँडानृपाय तद्वा(‡)दुर्वलिने कन्यया सह ॥ ५२ ॥
एवं मण्डोवरं दुर्गं भाग्याच्चूँडामहीपतिः ॥
संप्राप्य बहुलां भूमिमार्जयद्बाहुविक्रमात् ॥ ५३ ॥
ततोऽहिपत्तने(§)मुलतान्यवनैः परिवेष्टिते ॥
तैः संयुध्य महावीरस्त्रिदिवेशालयं ययौ ॥ ५४ ॥
ततोऽभूद्रणमल्लाख्यः क्षत्रियाणां शिरोमणिः ॥
हितार्थं भागिनेयस्य मोकलूराणामहीपतेः ॥ ५५ ॥
मरुदेशान्मेदपाटं गत्वाऽसौ भूरिविक्रमः ॥
अजयन्मालवाधीशं महमूद्यवनं रणे ॥ ५६ ॥

युग्मम्

(*) सामन्तसिंहाख्यः । अयं चाहुमाननृपो जालोरपुराधीशः ।

(†) अयं दिल्लीशापराधं कृत्वा शरणमायातः ।

(‡) ईंदाक्षत्रियनायको रायधवलः स्वसुतामुद्वाह्य यौतुके मण्डोवरं दुर्गमर्पयामास ।

(§) नागोरनगरे ॥

हन्तारौ भागिनेयस्य मेरा(*)चाचकनामकौ ॥
संक्रुद्धः प्रेषयामास द्रुतं वैवस्वतान्तिकम् ॥ ५७ ॥
कुम्भकर्णो ततो बालं(†) मोकलराणाधरापतेः ॥
चित्रकूटाधिपं कृत्वा प्रबन्धमकरोत्स्वयम् ॥ ५८ ॥
अभूदसुव्यय(‡)स्तेन तत्रैवास्य महीपतेः ॥
सतां सर्वाणि वस्तूनि परार्थाय भवन्ति हि ॥ ५९ ॥
तदात्मजो योधसिंहो(§) मरुभूमौ स्वकीर्तये ।
स्वनाम्ना नगरं दुर्गं कारयामास यत्नतः ॥ ६० ॥
समये तीर्थयात्राया योधसिंहो महीपतिः ॥
यवनेन्द्रस्य साहाय्या(¶)द्गयाकर(**)ममोचयत् ॥ ६१ ॥
सूजारावस्तनूजोऽस्य हर्षनिर्भरमानसः ॥
द्विवारं यवनैर्युद्ध्वा बभूव ज्ञातविग्रहः ॥ ६२ ॥
बाघनामा सुतस्तस्य व्याघ्रतुल्यपराक्रमः ॥
अधृत्वैव सितच्छत्रं गतः कर्मवशाद्दिवम् ॥ ६३ ॥

---

(*) मेदपाटेश्वरमहाराणाक्षेत्रसिंहनृपते रेतसो खर्दकसुदरोत्पन्नौ मेराचाचकनामानौ लाखानृपस्यौरसपुत्रं मोकलनृपं निहत्य चित्रकूट( चित्तोड )दुर्गमहार्षीम् ॥

(†) अल्पवयस्कम् ॥

(‡) राणाकुम्भकर्णो वैक्रमे पञ्चदशशततमेऽब्दे शुचिमासे चित्रकूटदुर्गे सुत राय-मल्लश्च छुरिकाभिश्छेदयामास ॥

(§) रावयोधसिंहो वैक्रमे पञ्चदशोत्तरपञ्चदशशततमे वर्षे स्वनाम्ना योधपुरं नाम नगरमा-स्थापयामास । दुर्गं च व्यदधात् ॥

(¶) साहाय्यं विधाय ।

(**) गोपाद्रिं दिल्लीपतिपातिसाहमहम्मदकृतआक्रमणात् सर्वतोऽस्य मोचयामास ॥

तदात्मजो गङ्गनामाऽभवन्मरुधराधिपः ।
गुर्जराधीशयवनं ईडराख्यपुरीं बलात् ॥ ६४ ॥
जहार तस्य बन्धुभ्यस्तां विजित्य ददौ पुनः ।
बन्धूपकारकर्तृत्वात्कीर्तिपात्रं बभूव सः ॥ ६५ ॥
युग्मम् ॥

ग्रामाणां नवसाहस्रं(*) सादिनां चायुताष्टकम् ॥
यस्यासीन्मालदेवोऽसौ सुतोऽभूद्गङ्गभूपतेः ॥ ६६ ॥
एतदन्ता महीपालाः स्वातन्त्र्येण निजां धराम् ॥
पालयन्तो महाभागा भोगान् संबुभुजुस्ततः ॥ ६७॥
संसेव्योदयसिंहाख्यः दिल्लीशं त्वकवराभिधम् ।
गतं देशं पुनः प्राप लेभे राजपदं ततः ॥ ६८ ॥
सवाय्राजपदं प्राप सूरसिंहस्तदात्मजः ।
राज्येऽस्मिंस्तत्कृतैरद्यापि प्रबन्धैः प्रवृत्यते ॥ ६९ ॥
गजसिंहस्ततो राजा गजेन्द्रान्प्रददौ बहून् ।
द्विपञ्चाशद्रणेष्वेष विजयाद्विश्रुतोऽभवत् ॥ ७० ॥
कदाचित्कवचं नैव दधौ विक्रमसागरः ।
पदं दिल्लीश्वराल्लेभे दलस्तम्भनसंज्ञकम् ॥ ७१ ॥
दत्त्वा कविवरेभ्योऽसौ ग्रामाँश्च विभवान्बहून् ।

(*) नवसहस्रग्रामाणामाधिपत्यादानमालदेवो लोके "नवसहँसा" इति पदमाप्तवभूव । सहस्रशब्दस्यापभ्रंशः "सहँस" इति । अत एव मरुभाषाकवितायां मरुधराधीशमद्यापि "नवसहँसा" इति विशेषणपूर्वकं स्तुवन्ति ॥ अधुना तु योधपुरराज्याधिकारे द्विशताधिकचतुःसहस्रं ग्रामाः ॥

स्वदेशान्स्वेन तान्कृत्वा ख्यातोऽभूद्धरणीतले ॥ ७२ ॥
यशवन्तमहाराजः संजातस्तदनन्तरम् ॥
आसन्सुरालयास्तावत्स्थिरा यावज्जिजीव सः ॥ ७३ ॥
स्वमतस्य प्रचारार्थं दिल्लीशौरङ्ग(*)वाञ्छितः ॥
उद्योगः सफलो नाभूत्तद्बाहुबलवैभवात् ॥ ७४ ॥
खड्गेन बलवानेष काबुल्भूमिं सुदुर्गमाम् ।
कृतवान्पान्थसंचारयोग्यां दिल्लीशशासनात् ॥७५॥
तत्र संरचयन्नित्यं रणं स समराङ्गणे ॥
तत्रत्यमुण्डमालाभिस्तोषयामास शंकरम् ॥ ७६ ॥
दिल्लीयवनभूपानां स्थापनोत्थापने क्षमः ।
अव्याहतमनोवृत्तिरजमल्ल(†)स्तदात्मभूः ॥ ७७ ॥
जिग्ये बाहुबलात्स्वीये देशदुर्गे गते पुनः ॥
दिल्लीपतेः पुरीं जह्रे रम्यां शाकंभरीं(‡)हठात् ॥७८॥
राजराजेश्वरपदं लब्ध्वा दिल्लीन्द्रकल्पितम् ॥
अमोचयज्जेजया(§)ख्यं दण्डं वैदिकधर्मिणाम् ॥७९॥
जयसिंहो जगत्ख्यातो जयपत्तनभूपतिः ॥

(*) औरङ्गजेबनामको दिल्लीशो मुगल्जातीयो यवन आसीत् ॥

(†) अजितसिंहः ॥

(‡) सांभर इति लोकभाषायाम् ॥

(§) यवनधर्ममस्वीकुर्वद्भ्य आर्येभ्यो यो वार्षिकः कर आदीयते सोऽरबीभाषायां "जेजया" इत्युच्यते ॥

षण्मासाञ्शरणेऽनेन रक्षितो बलशालिना ॥ ८० ॥
बख्तसिंहस्तत्सुतोभून्निपुणो न्यायनिर्णये ॥
मितव्ययी महावीरः शत्रूणामन्तकोपमः ॥ ८१ ॥
ततो विजयसिंहोऽभूद्धरिभक्तो दयानिधिः ॥
आत्मवत्सर्वभूतानि पश्यन्हिंसाविवर्जितम् ॥ ८२ ॥
निजं जनपदं चक्रे पुत्रवत्पालयन्प्रजाः ॥
उपमा(*) तेन कालेन लोकैरद्यापि दीयते ॥ ८३ ॥
युग्मम् ॥
सिन्धुदेशाधिपश्चाब्दुल्नव्याख्यः शरणं गतः ॥
तत्पट्टपाय मरुपो ददात्यर्द्धासनं निजम् ॥ ८४ ॥
सूनुर्गुमानसिंहोऽस्यानभिषिक्तो दिवं गतः ॥
अभवद्वसुधाख्यातो मानसिंहस्तदात्मजः ॥ ८५ ॥
आबाल्यादेष भूपालः स्वदेशपरदेशयोः ॥
अकरोत्सङ्गरक्रीडां मत्तमातङ्गविक्रमः ॥ ८६ ॥
कुरुराजसमो माने दाने कर्णसमस्तथा ॥
अदाद्ग्रामान्गजानश्वान्कवीन्द्रेभ्यो यथेप्सितम् ॥८७॥
संगीतादिसमस्तानां गुणानां रसिकः परम् ॥
कर्ता(†) नवीनग्रन्थानां राजनीतिविचक्षणः ॥ ८८ ॥

(*) यत्र सुराज्यं वरीवर्ति तत्रेदमुच्यते "विजैवारा वरते है" इति ॥ अस्यार्थस्तु विजयवेला वर्तते इति ॥

(†) अनेन महाराजेन नाथचरित्रनामकोऽस्तिमनोहरो भाषाग्रन्थो निर्मितः । अन्ये च सहस्रशो गीतकवित्तदोहागजलरेखताख्यालठुमरीटप्पाप्रभृतयः प्रणीताः । राजराजेश्वरमानसिंह कवितायां स्वोभिधानं रसराज इति लिलेख ॥

ददौ नागपुरेशाय(*) तथेन्दोर(†)पतिस्त्रियै ॥
शरणं बलवानेष क्षात्रधर्मपरायणः ॥ ८९ ॥
ऋणावशेषवान्नाभूत्सुहृदामथ विद्विषाम् ॥
अन्ते संन्यस्य धर्मात्मा कृतवान्सफलां जनिम् ॥ ९० ॥
औरसापेक्षया भक्तः पितुस्तखत(‡)नरेश्वरः ॥
दत्तपुत्रोऽदधाच्छत्रं मानसिंहादनन्तरम् ॥ ९१ ॥
भटामात्यकवीन्द्राणां प्रजानां च प्रियोऽभवत् ॥
कलौ कृष्णावतारोऽयमितिख्यातोऽत्र मण्डले ॥९२॥
यानि यानि च भोग्यानि निखिलान्यत्र भूतले ॥
तानि तानि सुभुक्तानि राज्ञाऽनेन सुरैरिव ॥ ९३ ॥
महाशक्तगवर्न्मेण्टराज्येऽप्यस्य नरेशितुः ॥
बाहुवीर्येण सर्वेषां राज्ञां मानं सुरक्षितम् ॥ ९४ ॥
विस्तराद्गतभूपानां वर्णने ग्रन्थविस्तरः ॥
भवेदतः प्रसङ्गेन संक्षेपाद्गणना कृता ॥ ९५ ॥
अब्ध्यङ्कदिक्पालनिशाधिनाथ(१८९४)-
मिते शुभे विक्रमराजवर्षे ॥

(*) नागपुरस्य राजा महाराष्ट्रो मधुराजदेवो भौंसलाजातीय आसीत् ॥ स च गवर्नमेण्टकारागृहान्नि सृत्य महाराजस्य शरणमायात ॥

(†) इन्दोरनगरस्य राजा जसवन्तरावो हुल्करजातीय, तस्य भार्याया अभिधा "तुलाछाबाई" इति ॥ सा च खस्ताब्दे १८६०मितविक्रमवर्षे आङ्गलै सह युध्यमानेन महाराजजसवन्तरावेण महाराजमानसिंहस्य शरणं प्रहिता । तद्विजयदिनादेवाङ्गला भारतं स्वाधिकारगतं मन्यन्ते ॥

(‡) तख्तसिंह नृप ॥

इषे सिते शंभुतिथौ(*) हि जातो
महीमहेन्द्रो यशवन्तसिंहः ॥ ९६ ॥
ग्रहाक्षिरत्नेन्दु(१९२९)मिते तु वर्षे
छत्त्रं सितं फाल्गुनमास्यधत्त ॥
बहून्बहुभ्यः प्रददाति चादा-
दसौ गजग्रामतुरङ्गमादीन् ॥ ९७ ॥
निवार्य चौराञ्जगतो निरास्य-
द्भीतिं करानप्यमुचद्बहूँश्च ॥
बहूंस्तडागान्विरचय्य देशे
मरुस्थलं वै सजलं करोति ॥ ९८ ॥
कृत्वा सभां न्यायविनिर्णयार्थं
बाष्पस्य योगाच्छकटं प्रयान्तम् ॥
तन्त्रीमरंवृत्तनिवेदिनीं च
विधाय देशं व्यदधात्कृतार्थम् ॥ ९९ ॥
व्यधत्त मैत्रीं निखिलैर्नृपालै-
रुदारतायामयमद्वितीयः ॥
प्रीतिः समस्तेषु गुणेषु नित्यं
रिक्तो न यात्येनमुपेत्य कोऽपि ॥ १०० ॥
प्रतापसिंहोऽस्य सहोदरस्तु
कायेन वाचा मनसा धनेन ॥

(*) अष्टम्याम् ॥

कुर्वन्सदा स्वामिहितं बलाढ्यो
धीमानमात्योऽस्ति नरेश्वरस्य ॥ १०१ ॥
अदाद्दयालुः परमेश्वरोऽस्मै
पुत्रं गुणाढ्यं सरदारसिंहम् ॥
वसुंधरा कामधुगस्य जाता
मनोरथः कोऽपि न चावशिष्टः ॥ १०२ ॥
कदापि सामन्तकवीन्द्रमन्त्रि-
संवेष्टितो राजसभानिविष्टः ॥
धृतातपत्रः सितचामराभ्यां
संवीज्यते वासववाञ्छितश्रीः ॥ १०३ ॥
कदाप्यमात्यैः सह संनिविष्टः
कार्यं स्वराज्यस्य करोति नीत्या ॥
कदाप्यभिज्ञैः कविभिः सभायां
प्रमोदते काव्यरसै रसज्ञः ॥ १०४ ॥
कदापि वेगे मरुता समानं
संकोचिताङ्गं हरिणेन तुल्यम् ॥
आरुह्य चापल्यगुणप्रसिद्धं
हयं मनोज्ञं परितोषमेति ॥ १०५ ॥
कदापि नावा निजकारितेषु

ऱ्हदेषु लीलां विहरन्करोति ॥
कदापि चारामविहारशीलो
दधाति शोभां कुसुमायुधस्य ॥ १०६ ॥
कदापि मल्लाजिनिरीक्षणेच्छुः
कदापि युद्धे करिणां प्रहृष्टः ॥
कदापि हर्म्येषु सुरेन्द्रतुल्यं
करोति रम्यां मधुपानलीलाम् ॥ १०७ ॥
कदापि संगीतकलां शृणोति
तथैव नृत्यं च निरीक्षतेऽसौ ॥
आलोक्य यच्चित्रतरं नभस्था
ऱ्हीणा भवन्त्यप्सरसोऽतिमात्रम् ॥ १०८ ॥
कदापि कान्तारमहीधरेषु
भ्रमन्नसौ केसरिणां किटीनाम् ॥
आखेटलीलां रचयन्बलाढ्यो
मनोविनोदं कुरुते महीशः ॥ १०९ ॥
कदापि सेनाभटवीरकेलिं
निरीक्षते वीररसे निलीनः ॥
कदापि देशेष्वटनं विधाय

जानाति सर्वस्य रहस्यवृत्तम् ॥ ११० ॥
कुर्वन् प्रजापालनमेष नित्य-
मित्थं कृतार्थान् दिवसान्करोति ॥
यस्योपमानं कविभिः प्रदातुं
न शक्यतेऽसौ सुचिरं हि जीव्यात् ॥ १११ ॥
खबाणनेत्राङ्क(९२५०)मितैरिदानीं
क्रोशैरुपेताऽस्ति वशेऽस्य भूमिः ॥
खव्योमशून्येषुकरेषुनेत्रै(२५२५०००)
मिताः प्रजाः सन्ति मरुस्थलेऽस्य ॥ ११२ ॥
आयोऽस्य सर्वदेशस्य द्वे कोटी प्रतिवत्सरम् ॥
अस्त्यस्य योधनगरं राजधानी सुशोभना ॥ ११३ ॥
यशवन्तमहाराजश्छत्रं धारयतेऽमलम् ॥
सूनुः सर्दारसिंहोऽस्य वयसाल्पो गुणैर्महान् ॥११४॥
जयचन्द्रकुलोद्भूताः सन्ति लक्षैर्मिता भटाः ॥
वर्धन्ते च सदा वीरास्तेयामि कृपयेशितुः ॥११५ ॥

राजराजेश्वर जी. सी. ऐम्. आई. महाराजाधिराज

श्रीयशवन्तसिंहस्य सभार्हवेषचित्रम् ॥



राजराजेश्वर जी. सी. ऐम्. आई. महाराजाधिराज

श्रीयशवन्तसिंहस्य साधारणवेषचित्रम् ॥



राजराजेश्वर जी. सी. ऐम्. आई. महाराजाधिराज

श्रीयशवन्तसिंहस्य सभाईवेषचित्रम् ॥



राजराजेश्वर जी. सी. ऐस्. आई. महाराजाधिराज

श्रीयशवन्तसिंहस्य साधारणवेषचित्रम् ॥



राजराजेश्वर जी. सी. ऐस्. आई. महाराजाधिराज

श्रीयशवन्तसिंहस्य सभार्हवेषचित्रम् ॥



राजराजेश्वर जी. सी. ऐस्. आई. महाराजाधिराज

श्रीयशवन्तसिंहस्य साधारणवेषचित्रम् ॥



| | |
|---|---|
| १ यशोविग्रहः | २० चूंडोः |
| २ महीचन्द्रः | २१ रणमल्लः |
| ३ श्रीचन्द्रदेवः | २२ जोधोः |
| ४ मदनपालः | २३ सूजोः |
| ५ गोविन्दचन्द्रः | २४ वाघोः |
| ६ विजयचन्द्रः | २५ गांगोः |
| ७ जयचन्द्रः | २६ मालदेवः |
| ८ वरदायिश्येनः | २७ उदयसिंहः |
| ९ सेतुरामः | २८ सूरसिंहः |
| १० सीहाः | २९ गजसिंहः |
| ११ आस्थानः | ३० यशवन्तसिंहः |
| १२ धूहडः | ३१ अजितसिंहः |
| १३ रायपालः | ३२ वख्तसिंहः |
| १४ कनपालः | ३३ विजयसिंहः |
| १५ जालनसीः | ३४ गुमानसिंहः |
| १६ छाडोः | ३५ मानसिंहः |
| १७ तीडोः | ३६ तख्तसिंहः |
| १८ सलखोः | ३७ यशवन्तसिंहः (वर्तमानः) |
| १९ वीरमः | ३८ सरदारसिंहः (महाराजकुमारः) |

# कविवंशवर्णनम् ॥

मदीयमपि वृत्तान्तं राजल्लोकप्रथावशात् ॥
संक्षेपेण वदाम्यत्र ग्रन्थकर्तृत्वहेतुना ॥ १ ॥
कीर्तेः संचारकरणाच्चारणा इति संज्ञया ॥
ख्याताः स्मस्त्रिषु लोकेषु गणिता देवजातिषु ॥ २ ॥
श्रीमद्रामायणे साक्ष्यं भारते च प्रदृश्यते ॥
तद्वदन्यपुराणेषु श्रीमद्भागवतादिषु ॥ ३ ॥
मुन्यृषीतिपदैरुक्ता ईश्वर्याः समुपासकाः
पूज्यन्ते दानमानाद्यैरद्यापि क्षत्रियैरिमे ॥ ४ ॥
यशवन्तनृपालोऽति दत्वा ग्रामगजादिकम् ॥
कुर्वाणो हितमेतेषां जीव्याद्बहुयुगावधि ॥ ५ ॥
आसिया(*)कुलमस्माकं भीमोऽत्र प्रथितः पुमान् ॥
पदं वळहठमल्लेति(†)प्रापान्नस्य प्रदानतः ॥ ६ ॥
पितामहो मम ख्यातो बाँकीदासः कवीश्वरः ॥
अभूदयाचकश्चासौ मानसिंहमहीपतेः(‡) ॥ ७ ॥

---

(*) अस्माकमासानामको मूलपुरुषो बभूव। तद्वंश्या. "आसिया" इति कथ्यन्ते ॥

(†). मरुभाषायां "वळ" इति शब्दो भोज्यवस्तुपरपर्यायः। "हठ" शब्दो हठार्थकः। मल्लशब्दो बलवद्वाची। "वळहठमल" इति समुदायार्थस्तु लोकान् भोजयितुं हठकरणे बलवानिति ॥

(‡) अत्र ल्यब्लोपे पञ्चमी। तेन मानसिंहं परित्यज्येत्यर्थो बोध्यः। मानसिंहादन्यं न याचते इत्यर्थः ॥

गुणग्राहितया तस्मै मानो मरुमहीश्वरः ॥
कविराजपदं प्रीत्या लक्षदानं च दत्तवान् ॥ ८ ॥
तख्तसिंहमहाराजस्तत्तनूजमहर्निशम् ॥
अमानीद्भारतीदाननामानं जनकं मम ॥ ९ ॥
मह्यं मुरारिदानाय यशवन्तनरेश्वरः ॥
राज्याभिषेकवेलायां प्रादाल्लक्ष(*)मुदारधीः ॥१०॥

चारणा देवसृष्टावुत्पन्नाः । तदुक्तं श्रीमद्भागवतस्य तृतीयस्कन्धस्य दशमेऽध्याये—

देवसर्गश्चाष्टविधो विबुधाः १ पितरो२ ऽसुराः ३ ॥
गन्धर्वाप्सरसः४ सिद्धा, यक्षरक्षांसि५ चारणाः६ ॥२७॥
भूतप्रेतपिशाचाश्च ७ विद्याध्राः, किन्नरादयः८ ॥
दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ।२८। इति

समानस्वभावानामेकः सर्गः । यथा गन्धर्वाप्सरसामेकः सर्गः । यक्षरक्षसामेकः सर्गः । सिद्धचारणविद्याधराणामेकः सर्गः । भूतप्रेतपिशाचानामेकः सर्गः । भूतप्रेतपिशाचाश्चाशुद्धाचारतया विबुधादिभिरादावेव परित्यक्ताः । अतएव विबुधादिभिः सहैषां वर्णनं क्वचिदपि न विद्यते । देवास्तु सुमेरुगिरौ निवासमकुर्वन्त ॥

तदुक्तं श्रीमद्भागवतस्य पञ्चमस्कन्धस्य षोडशेऽध्याये—

(*) लक्षदानम् ॥

मेरोर्मूर्द्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीम् ॥ १ ॥ इति ॥

सुमेरुगिरौ देवानां पृथक्पृथङ्नगर्यस्तत्र चारणानामपि पृथग्लोकः ॥ तदुक्तं तत्रैव—

अधस्तात्सवितुर्योजनायुते स्वर्भानुर्नक्षत्रवच्चरतीत्येके॥
ततोऽधस्तात्सिद्धचारणविद्याधराणां सदनानि तावन्मात्र एव ॥ ४ ॥ इति ॥

सिद्धचारणविद्याधराणामेकसर्गत्वादेकगणत्वम् । अत्र सुमेरोरुच्चतामानमुपरिष्ठात्सूर्येण विहितम् । आङ्गलविद्वांसस्तु महीधराणामुच्चतामानमधस्तात्समुद्रतलादवस्यन्ति । सर्वपितामहेन धात्राऽऽरम्भाच्चारणदेवताकार्यं विष्ण्वादिदेवानां स्तुतिपाठकत्वमकारीति ते चारणसंज्ञया प्रथिताः । चारणशब्दव्युत्पत्तिस्तु "चारयन्ति कीर्तिम्" इति ॥ तथाहि मत्स्यपुराणस्योनपञ्चाशोत्तरद्विशततमेऽध्याये—

स्तूयमानं समन्ताच्च सिद्धगन्धर्वचारणैः ॥
आम्नायैर्मूर्तिमद्भिश्च स्तूयमानं समन्ततः ॥ ३५ ॥
सव्यबाहूपधानं तं तुष्टुवुर्देवदानवाः ॥
कृताञ्जलिपुटाः सर्वे प्रणताः सर्वतोदिशम् ॥३६॥ इति ॥

स्वर्गस्य भोगभूमित्वात्तत्र मर्त्यलोकार्जितमहासुकृतोपभोगः । कर्मभूमिस्तु मर्त्यलोक एवेति भगवदाराधनाय देवा

अपि मर्त्यलोके जनिमभीप्सन्ति । मर्त्यलोकेऽप्यार्यावर्तः पुण्यभूमिः ।

"आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः ॥"

इत्यमरः ॥ कतिपयचारणदेवा मोक्षसाधनाय सदारा देवलोकादागत्य हिमालयमध्यूषिवांसः । तैः सह कतिचित्सिद्धदेवा अपि समायाताः ॥ तदुक्तं वाल्मीकीयरामायणस्य बालकाण्डेऽष्टचत्वारिंशे सर्गे—

"इममाश्रममुत्सृज्य सिद्धचारणसेविते ॥ ३३ ॥
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥" इति ॥

कृतयुगादारभ्य कलियुगावतीर्णश्रीकृष्णसमयान्तं तत्पश्चादपि च ते चारणा हिमगिरावन्यासु च तपःस्थलीषु च तप आचरन्तो लक्षशो हायनान्यृषिमुनिमहर्षिमहात्मपदैरुदिताः। तत्प्रमाणानि चाग्रे प्रदृश्यन्ते। देवलोके निवसन्तश्चारणा देवचारणा इत्युक्ताः । अधुनापि च देवलोकवासिनश्चारणा देवचारणा इति कथ्यन्ते । तत्र प्रमाणं तु ब्रह्मपुराणस्य षट्त्रिंशेऽध्याये—

"गन्धर्वाप्सरसः सर्वे नागा यक्षाः सराक्षसाः ॥
औदकाः खेचराश्चान्ये किन्नरा देवचारणाः।६६।" इति।

महादेवस्य पार्वतीपरिणयावसरे ब्रह्मणो हिमालये नवनगरनिर्माणम् । तत्रत्यं पद्यमिदम् ॥ ये च चारणा देवलोकं विहाय मर्त्यलोकमुपागत्य हिमगिरिमध्यूषुस्तत्संततेस्तत

ईषदूनतया देवकल्पत्वेन वर्णनम्। "देवकल्पा महर्षयः" इति महाभारते ॥ देवकल्पा देवसदृशाः ॥ "कल्पः स्वसदृशे" इति चिन्तामणिः ॥ लङ्कां प्रज्वाल्य बहिरागत्य सर्वमग्निसाद्‌ धवलोक्य हन्त वैदेह्यपि दग्धा स्यादिति चिन्तयमानो हनूमान् "जानकी न च दग्धा" इति चारणमुनिवचनमश्रौषीत् ॥ तत्प्रसङ्गे भगवता वाल्मीकिमुनिना चारणा महात्मान इत्युक्ताः। तथाहि वाल्मीकीयरामायणस्य सुन्दरकाण्डे पञ्चपञ्चाशे सर्गे—

शुश्राव हनुमांस्तत्र चारणानां महात्मनाम् ॥ २९ ॥
जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥३२॥ इति ॥

लङ्कायाः प्रतिनिवृत्य समुद्रवेलानिविष्टानङ्गदादीन्प्रति तदुदन्तं कथयतः पवनात्मजस्य तत्रैवाष्टपञ्चाशे सर्गे इदं वचनम्

"ऋषिवाक्यैश्च दृष्टार्थैरभवद्धृष्टमानसः ॥१६५॥" इति।

मृगयासक्तः पाण्डुर्मुनिंशापाद्धिमगिरिमधिष्ठाय चारणान्तिके तप आचरन्पञ्चत्वमवाप । तस्य यवीयसी धर्मपत्नी माद्री सहगमनमकामयत । ततश्च युधिष्ठिरादिडिम्भपञ्चकोपेतां तज्ज्येष्ठपत्नीं कुन्तीमवलोक्य चारणा विचारणामकार्षुः। तत्प्रसङ्गे महाभारतस्यादिपर्वणि षड्विंशाधिकशततमेऽध्याये पद्यमिदम्—

"ते परस्परमामन्त्र्य देवकल्पा महर्षयः॥" इति ॥

तदुत्तरं चार्भकपञ्चकसमवेतया कुन्त्या सह चारणमुनयो हस्तिनापुरमागतास्तद्विषये तत्रैव—

"तं चारणसहस्राणां मुनीनामागमं तदा ॥
श्रुत्वा नागपुरे नृणां विस्मयः समपद्यत ॥११॥" इति।

कृतयुगे हरिणा पृथुनाम्नाऽवतीर्य जगतो मर्यादा निरूप्य संशोधनमकारि । तस्मिन्ननेहसि हिमालयाधिष्ठितचारणा वस्तुतो देवानां स्तुतिपाठका आसन् । पृथुमहाराजप्रशंसां जगति सुस्थिरत्वमासादयेदिति विचिन्त्य ब्रह्मर्षयस्तेषां मध्यादेकं चारणमानीय पृथोः स्तुतिपाठकं व्यदधुः । नृपतिना च स तैलङ्गदेशदानेन तुष्टिं प्रापितः । अस्मिन्विषये पद्मपुराणस्य द्वितीये भूमिखण्डेऽष्टाविंशेऽध्याये—

"चारणाय ततः प्रादात्तैलङ्गं देशमुत्तमम् ॥" इति ॥

पृथोरधिगततैलङ्गदेशश्चारणो हिमगिरिं विहाय तैलङ्गदेशमध्युवास । तत्संततिश्च राज्ञां राजपुत्राणां च स्तुतिमातन्वती तत्स्तुतिपाठकतामवाप । अद्यावधि च वयं चारणा राज्ञां राजपुत्राणां च स्तुतिमाचरन्तः कवीति पदेन प्रथिताः स्मः ॥ हिमालयोषितदेवकल्पतपस्विचारणमध्यादेकः पृथुमहाराजस्य कविरभवदिति तत्संततिरपि मर्त्यलोकवासिमनुष्याणां राज्ञां राजपुत्राणां च कविधर्मीरीकरणात्सर्वथाऽपगतदेवभावा मानुषचारणेतिपदभाग्बभूव ॥ तत्र प्रमाणं तु महाभारतस्य शान्तिपर्वणि मोक्षधर्मे एकसप्तत्युत्तरद्विशततमेऽध्याये—

"देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः ॥
धार्मिकान्पूजयन्तीह न धनाढ्यान्न कामिनः ।५५।
इति ॥

सर्वशक्तिमन्तं जगदीश्वरं केचिज्जनकरूपतया केचिच्च जननीरूपतया मन्यन्ते । अस्मत्पूर्वजाश्च हिमालये तपस्यन्तस्तं जननीरूपेणोपासांचक्रुः । तदुक्तं महाभारतस्य भीष्मपर्वणि द्वाविंशेऽध्यायेऽर्जुनस्तुतौ—

"तुष्टिः पुष्टिर्धृतिर्दीप्तिश्चन्द्रादित्यविवर्द्धनी ॥
भूतिर्भूतिमतां संख्ये वीक्ष्यसे सिद्धचारणैः ॥" इति ॥

अत्र टीकाकारो नीलकण्ठः " संख्ये, सम्यक्ख्यानं प्रकाशनं यत्र तस्मिन्नात्मानात्मविवेकरूपे समाधौ " इति व्याचख्यौ ॥ तथैव परंपरयाद्याप्यस्माकं सकलचारणजातेर्देवी परमोपास्यदेवता । तत एवञ्च वयं सर्वे "जयमातः" इत्युक्त्वा परस्परं प्रणाममाचरामः ॥

अत्रेदं नाशङ्कनीयम्, चारणा देवाश्चेन्मनुष्येषु कथं मिलिता इति । कुत इति चेदसुरा राक्षसाश्च देवसृष्टौ गणिताः ॥ एकदा सर्वे देवा मिलित्वा क्षीराब्धिं ममन्थुः । तस्माच्च पीयूषादिचतुर्दशरत्नान्यलभन्त । तत्रामृतस्य कृते देवासुरयोर्मिथस्तुमुलयुद्धमवर्तत । तत्र राक्षसानामसुरपक्षनिविष्टत्वाद्देवानामसुरराक्षसानां च विद्वेषानलोऽतिशयितां वृद्धिमाससाद । तदानीमसुरराक्षसा देवलोकापहारेण मर्त्यलोकमध्यूषुः ॥ असुरा दैत्या इति पर्यायान्तरम् ॥

"असुरा दैत्यदैतेय–"इत्यमरः ॥ दैत्येषु बलिहिरण्यकशिपुप्रभृतयो मर्त्यलोकमहाराजा बभूवुः। रक्षःसु च लङ्केश्वरो रावणो लोकरावणो बभूव। दैत्या राक्षसाश्च ससैन्या बहुशो मर्त्यलोकाद्देवलोकमाक्रम्य लुलुण्टुर्देवराजं महेन्द्रं च विजिग्युः ॥ महाभारतावधि मर्त्यलोके दैत्यराक्षससंततिरासीत्। श्रीकृष्णचन्द्रेण तृणावर्ताघासुरादयो बहवो दैत्या निहताः। पाण्डुपुत्रो भीमसेनो हिडम्बाराक्षस्यां घटोत्कचमुदपादयत्। स च महाभारतरात्रिरणे वीरकर्म प्रदर्श्य तनुमत्यजत् ॥

वैदिकधर्मग्रन्थभागवतमहाभारतादिप्रणयनादर्वाग्जैनधर्मग्रन्थनिर्माणम्। तत्रापि मानुषचारणा उत्तमार्यत्वेन गणिताः। वेदानुयायिनो रामकृष्णादींश्चतुर्विंशतिमवतारान्मन्यन्ते, तथा जैनमतावलम्बिन ऋषभादींश्चतुर्विंशतितीर्थकृतः प्रतिपादयन्ति। कथयन्ति च विक्रमसंवत्सरप्रारम्भकालात्सप्तत्युत्तरचतुःशत४७०वर्षपूर्वं चतुर्विंशस्तीर्थकरो महावीरस्वामी बभूवेति। व्योमेषुनवेन्दु१९५०मितवर्तमानविक्रमसंवत्सरात्तु खनेत्राब्धियुग्मा२४२०ऽब्दा भवन्ति। महावीरस्वामिना मागधीभाषायामनेकानि सूत्राणि प्रणीतानि। तत्र पन्नवणाख्यसूत्रस्य प्रथमपदे मनुष्याधिकारे मनुजा द्विविधाः प्रज्ञप्ताः। म्लेच्छा आर्याश्च। आर्या द्विविधा भणिताः। ऋद्धिप्राप्ता अनृद्धिप्राप्ताश्च। ऋद्धिप्राप्तत्वं च तपोवैभवादिप्रतिष्ठार्हत्वम्। ऋद्धिप्राप्ताः षोढा गणिताः।

"अरिहन्ता; चक्कवट्टी, वलदेवा, वासुदेवा, चारणा,
विज्जाहरा" इति ॥

अरिहन्ता तीर्थंकराः ॥ मनुष्याधिकारत्वादरिहन्तादीनां मनुष्यजातित्वम् । इहाप्यतिपवित्रैः समर्थैश्चारिहन्तादिभिः सह मानुपचारणा गणिताः ॥

जैनसूत्रग्रन्थेभ्यः प्राक्तनो न कोपि काव्यप्रबन्ध उपलभ्यते । काव्येष्वपि प्रायो मानुपचारणानां वर्णनम् । काश्मीरेश्वरो हर्षदेवः कर्णाटराष्ट्राधीशपरमाण्डमहिषीचन्दलाचित्रमवलोक्येमां संधां व्यदधात् । "परमाण्डं विजित्य चन्दलाहरणं विनाऽपक्वकर्पूरो नोपभोग्यः" इति ॥ तदुक्तं कल्हणकृतकश्मीरराजेतिहासराजतरङ्गिण्याः सप्तमतरङ्गे—

"कृतापक्वित्रमकर्पूरपरित्यागं प्रतिज्ञया ॥
तं च स्तुतिमिषादेवं जहसुः कविचारणाः ॥११२२॥"
इति ॥

कविचारणाः स्तुतिमिषाद्धर्षदेवनृपमनिन्दन्निति भावः ॥

"संसारे सर्वमन्तवत्" इति नियतिकृतनियमेन चारणजातिरपि चिरन्तनतया शनैःशनैर्भारतभूमेरितरसकलप्रदेशेपूच्छेदमवाप । कतिचिच्चारणा वर्षसहस्रद्वयात्प्राङ्मरुदेशमागम्य न्यवसन् । तत्संततिश्च वृद्धिमासादयन्ती मरुदेशसंबन्धान्मारवचारणेतिसंज्ञया ख्यातिमापेदे । मारवचारणाश्चेदानीं विशेषतया राजपूतानाप्रदेशे, कतिचिद्गुर्जरभूमौ कतिचिच्च मालवदेशे निवसन्ति । मारवचारणानां च राजपुत्रैः सह स एव स्तुतिपाठकतादिपुरातनसंबन्धोऽद्यावधि वरीवर्ति ॥ वयं चारणाः पुरा देवसृष्टावुत्पन्ना इति राजानो राजपुत्राश्चेदानीमपि चारणान्पूजनीयान्मन्यन्ते । चारणाः

पूजनीया इति राजपुत्रेषु कथनप्रचारोऽपि । तथाहि, एतद्ग्रन्थश्रवणार्थं राजराजेश्वरयशवन्तसिंहेन स्वदेशविदेशवासिनो बहवो विद्वांस आहूताः । तन्मण्डलेन सहास्य श्रवणावसरे श्रोतृसमक्षं स्वाशयाऽयं मनोरथः प्रकटीकृतः "कविराजेनास्माकमयं ग्रन्थ ईदृशः प्रणीतः, यत्कविराजं स्वर्णेन तोलयित्वा तन्निर्मितकविराजप्रतिमा सदैव पूज्येत" इति ॥ इयं वार्तोक्तश्रोतृगणस्थठक्कुरमनोहरसिंहेन मह्यं लिखिता । तद्विषयं पत्रमन्ते द्रष्टव्यम् ॥ महान्तस्तदतिरिक्ताश्च सर्वेऽपि क्षत्रिया मारवचारणानामतीव सत्कारं वितन्वन्ति । योधपुराधीशाजितसिंहसूनुरभयसिंहो ज्येष्ठत्वात्तत्पट्टमधिष्ठाय पञ्चविंशतिवर्षाणि राज्यं शशास । तत्पट्टं च तदुत्तराधिकारी रामसिंहोऽधितस्थौ । तस्मान्मरुराज्यमपहृत्य तत्पितृव्यो वख्तसिंहो राज्यभारं बभार । अतएव वंशावल्यामभयसिंहो नोक्तः । अभयसिंहोद्देशेन कवियोपटाङ्किचारणकरणीदानेन सूर्यप्रकाशाख्यं भाषाग्रन्थं विनिर्माय स महाराजाय समर्पितः । ततो गुणग्राहितया महाराजः पुरातनराजधान्या मण्डोवरस्यारामे करणीदानाय लक्षदानं वितीर्य तं गजारूढं विधाय स्वयमश्वारूढोऽग्रे गच्छन् मण्डोवरात्त्रिकोशान्तराले योधपुरवर्त्तिचारणकविगृहमयात् ॥ तद्विषयं पद्यमिदम्—

अश्वारूढोऽभयो भूपो गजारूढः कविः पुनः ॥
याममेकं महाराजः प्रायादेवं कवेः पुरः ॥ १ ॥इति॥

कस्यचिद्राजकार्यस्य कृते योधपुरमहाराजवख्तसिंहेन

नियुक्तो रोहड़ियोपटङ्की तत्प्रतोलीपात्रं मूँदियाड़ाभिधेयाख्यस्थाधीशकरणीदानचारण उदयपुराधीशमहाराणाजगत्सिंहान्तिकं जगाम । जगत्सिंहश्च स्वराजधान्या बडीपोलाख्यद्वाराद्बहिः क्रोशाष्टमभागान्तरवर्त्तिजगदीशमन्दिरान्तं करणीदानसभाजनार्थमभ्यागमत् ॥ तद्विषयं पद्यमिदम्—

यद्गत्वाप्त्या दिल्लीशा मृत्युमवाप्ताः सहानुतापेन ॥
आतिथ्यं तत्कीर्त्यै कवेरकार्षीज्जगत्सिंहः ॥ १ ॥ इति ॥

महियारियोपटङ्कदेवाख्यचारणस्यातिवृद्धतया प्रतिगमनावसरे बुन्दीशशत्रुशल्यस्तं स्वकरावलम्बिनं कृत्वा प्रासादबहिःप्रदेशावधि तेन सह समायातः ॥ दृष्टिकाश्यात्तत्रोपानहमन्वेषमाणचारणचरणयोः शत्रुशल्यः स्वपाणिना योजयामास ॥ तद्विषयं पद्यमिदम्—

"गृहीत्वोपानहं पाणौ न्यस्यता तु कवेः पुरः ॥
त्वधा कृपणशीर्षेपूपानहत्ता सहस्रशः ॥" इति ॥

## ग्रन्थनिर्माणकारणम् ॥

भाषाभूषणसंज्ञस्य ग्रन्थस्य नृपसंनिधौ ॥
एकस्मिन्दिवसे जातः प्रस्तावो मां तदा नृपः ॥ १ ॥
ऊचे कीदृक्प्रबन्धोऽयं कविराज! तदाऽवदम् ॥
मरुपेन स्वयं पूर्वयशवन्तेन(*) निर्मितः ॥ २ ॥

* पूर्वयशवन्तसिंहमहाराजो वैक्रमे त्र्यशीत्यधिकषोडशशततमे वर्षे (१६८३) समुत्पन्नः ॥

भाषायां प्रथमो ग्रन्थो भरतस्य मतेऽस्त्यसौ ॥
अनेनालंकृतेर्बोधः साक्षान्नैव भवेदिति ॥ ३ ॥
उत्तराकर्णनात्प्राह हसन्मरुमहेश्वरः ॥
तदाऽन्यं रचय ग्रन्थं नवं कविवरेति माम् ॥ ४ ॥

चतुर्भिः कुलकम् ॥

वत्सरैः पञ्चदशभिः शनैः कृत्वा श्रमं मया ॥
निर्मितो निर्मलग्रन्थ आज्ञया मरुभूपतेः ॥ ५ ॥
अनेके रचिता ग्रन्था आकल्पादधुनावधि ॥
अल्पायुरहमेकोऽतः कथं सर्वं निरूप्यते ॥ ६ ॥
प्रबन्धानां प्रसिद्धानां सारं संगृह्य यत्नतः ॥
स्वस्य निर्मलया बुद्ध्या निर्धार्यायं विनिर्मितः ॥ ७ ॥
सन्ति बालप्रबोधार्थं प्रबन्धा बहवो भुवि ॥
अयं विबुधबोधार्थो भवेदेव न संशयः ॥ ८ ॥
संदर्श्यालंकारान्यशवन्तयशोऽत्र वर्णितं यस्मात् ॥
यशवन्तभूषणेति संज्ञा चास्य व्यधायि भूपाल! ॥ ९ ॥
यतो भूषणसंज्ञाऽस्य सप्तभिस्तु ततो मया ॥
पूर्तिराकृतिभिर्नीता ह्यौचित्येन नराधिप! ॥ १० ॥
प्रथमा भूमिका काव्याकृती राजन्! द्वितीयिका ॥
शब्दालंकाररूपा च तृतीया परिकीर्तिता ॥ ११ ॥
अर्थालंकाररूपा च चतुर्थी मनुजेश्वर! ॥
रसवन्मुखभावालंकाररूपा च पञ्चमी ॥ १२ ॥

अन्तर्भावाकृतिश्चेह षष्ठी राष्ट्रवरोत्तम! ॥
सप्तम्यां च विधिः पूर्तेर्ग्रन्थस्य समयस्तथा ॥ १३ ॥
वर्तमाननृपा भूप! कथितं पारितोषिकम् ॥
यशवन्तयशोभूषणग्रन्थात्सारं नृपाज्ञयादाय ॥
यशवन्तभूषणेतिसंदर्भोऽयं विनिर्मितः स्वल्पः ॥ १४ ॥

## नामलक्षणविचारः ॥

शुद्धस्वरूपानुसारं नामान्याह धुरंधरः ॥
राजराजेन्द्र! तत्स्पष्टं करिष्यामि पदे पदे ॥ १ ॥
धुरंधरोक्तालंकारनामान्येवात्र(*) लक्षणम् ॥
अलंकारस्वरूपं यत्स्पष्टं तैरेव जायते ॥ २ ॥
अत्र साक्षात्स्वरूपं हि विद्यते नृप! नामसु ॥
धुरंधरस्य नामार्थाच्च्युतः पङ्के निमज्जति ॥ ३ ॥
अत्यन्तस्फुटताहेतोर्नाम्नामर्थान्प्रचक्ष्महे ॥
लक्षणत्वेन ते नैव बोध्याः श्रीमरुनायक! ॥ ४ ॥

प्रथममलंकारादीन्संलक्ष्य तेषां यथार्थनामनिर्माताऽऽचार्योऽत्र धुरंधरपदेन व्यवहृतः । ते च बहवः । यस्य सिद्धान्तः परममाननीयत्वेनाभिमतस्तस्मिन्विषये स एव धुरंधरो विज्ञेयः । उक्तधुरंधरेभ्योऽर्वाचीना अस्माभिरर्वाचीनपदेनोद्दिष्टाः । मया त्वत्रार्वाचीनानां लक्षणानि खण्डयित्वा धुरंधराणां नामरूपाण्येव लक्षणान्यङ्गीकृतानि ॥ लोके परमात्मना

(*) अलंकारशास्त्रे ॥

प्रथमं पदार्थाः संसृष्टाः। पश्चाच्च तन्नामनिर्माणम्। तच्च श्रुतिस्मृतिषु प्रसिद्धम्। तथैव साहित्यशास्त्रे प्रथममुदाहरणानि ततश्च कविभिस्तेषु चमत्कारं संलक्ष्यालंकारादीनां नामानि निर्मितानीत्यनुभवसिद्धम्। यथा शब्दानुसारेण साधनिकासूत्रनिर्माणम्। रागरागिणीश्रवणान्मृगादिवच्छ्रवणसुखोद्भावेऽपि संगीतसंस्कारिणो जनस्यामुकोयं रागो रागिणी वा, अमुकोयं स्वरः, अमुकोऽयं ताल इत्यादौ विज्ञातेऽत्यन्तमानन्दोद्गमस्तथैव काव्यश्रवणमात्रेण चेतसः सुखोद्भावेऽपि साहित्यसंस्कारिणो जनस्यात्रामुकोऽयं व्यङ्ग्यादिरर्थः, अमुकोयमलंकारः, अमुकोऽयं रस इत्यादौ विज्ञातेऽत्यन्तमानन्दोद्गमः॥ न्यायादिशास्त्राणां प्रसिद्धाचार्यैर्गौतमादिभिरीश्वरकृतपदार्थानां लक्षणानि निर्मितानि। तथैव शैल्या साहित्यशास्त्रस्य प्रसिद्धाचार्येण भरतमुनिनाऽलंकारादीनां लक्षणानि निर्मितानि। साहित्यशास्त्रे च भरतप्रणीतनाट्यशास्त्रात्प्राचीनो न कोपि प्रबन्ध उपलभ्यते। ततश्च वेदव्यासप्रभृतयो भरतशैल्यनुसारेण लक्षणानि कुर्वन्ति स्म॥ परमात्मा पदार्थान्विरचय्य तेषां नामानि व्यवहारमात्रप्रयोजनेन निर्मितवान्। न तु कविकर्मणा। अत एव परमात्मकृतपदार्थविवेचकानां न्यायादिशास्त्रकाराणां तेषां साक्षात्स्वरूपप्रकाशनार्थं नामातिरिक्तलक्षणनिर्मितेरावश्यकत्वम्॥ यथा "वातीति वायुः" इति व्युत्पत्त्या पवनस्य वायुरिति नाम जगत्कर्त्रा निर्मितम्। परं त्वनेन नाम्ना पवनस्य साक्षात्स्वरूपं तादृक्स्फुटं न भवति, यादृक् "रूपरहितः स्पर्शवान्वायुः"

इति न्यायशास्त्रोक्तलक्षणेन भवति। गत्यर्थकानामन्येषामपि वस्तूनां मरणात्। अलंकारादिनामानि तु कविनिर्मितानि। तानि च कविकर्मणा निर्मितानीति कवीनां तु नामभिरेव तेषां स्वरूपस्य स्पष्टीकरणमुचितम्॥ णमधातोर्नामशब्दो निपातितः। "णमप्रह्वत्वे शब्दे च।" नमतीति नाम। तत्तद्वस्तुनाम्नां तत्तदर्थेषु नमनात्सार्थकत्वम्। अत्रायमभिसंधिः, तत्तन्नामकथनेन तत्तत्पदार्थस्य ग्रहणं स्यादिति। जगत्कर्त्राऽयं शब्दो व्यवहारमात्रप्रयोजनेन प्रयुक्तः। प्रथमं यैर्यैः कविभिरलंकारादिनामानि निर्मितानि, तानि तु तत्तत्स्वरूपस्य साक्षात्प्रकाशकत्वात्तादृशार्थबोधकानि। एतदेवाभिप्रेत्य धुरंधरकविर्नाम्नःपर्यायान्तरं संज्ञेत्याह। संज्ञाशब्दार्थस्तु सम्यग्ज्ञायतेऽनयेति। यया वस्तुनः सम्यग्ज्ञानं भवति सा संज्ञेतिभावः॥ लक्षणशब्दार्थस्तु "लक्ष्यतेऽनेन" इति॥ येन वस्तुपरिज्ञानं भवति तल्लक्षणमितिभावः॥ अलंकारादिस्वरूपबोधे लक्षणापेक्षया संज्ञाया अधिकमुपयोगित्वं चानयोर्व्युत्पत्त्यैव स्फुटतरम्॥ लक्षणे गौरवम्। नामसु च लाघवम्। लाघवाङ्गीकारश्च सर्वसंमतः॥ नाम्नाऽलंकारादिस्वरूपं बोधयित्वा पुनर्लक्षणेन ज्ञापने कवीनां पुनरुक्तिदोषापातः॥ आदौ नामकर्तृभिरन्यल्लक्षणं न निर्मितम्। नामभिरेवालंकारादीनां स्वरूपे स्पष्टेऽन्यल्लक्षणनिर्मितेरनावश्यकत्वात्। अन्यनिर्मितलक्षणानि कानिचित्स्वरूपावबोधकानि। कानिचिच्चाव्याप्त्यादिदोषग्रस्तानि। धुरंधरकृतनाम्नां क्वचित् संपूर्णसाक्षादर्थापरिज्ञानादितरार्थविज्ञानाद्वा क्वचिच्च

नामानुसारमन्यप्रकारकलक्षणनिर्माणप्रयत्ने तत्रालंकाराणां साक्षात्स्वरूपस्यासमावेशात्तथैव . क्वचित् परंपरागतोदाहरणानां संपूर्णसाक्षादभिप्रायापरिज्ञानादितराभिप्रायविज्ञानाद्वा तत्तदुदाहरणानुसारेण लक्षणनिर्मितिरिति बोध्यम् ॥ तादृशलक्षणानां खण्डनं नाम्नां मण्डनं च तत्तदलंकारप्रकरणे करिष्यते ॥

अखिलानामपि महतां खण्डनकरणापराधमपहाय ॥
पश्यन्तु पक्षरहिताः प्रबन्धमेतं हि कविराजाः ॥ १ ॥
संस्कृतग्रन्थकर्तॄणां खण्डनानि कृतान्यतः ॥
भाषाग्रन्थविनिर्मातृखण्डने न दृगर्पिता ॥ २ ॥

धुरंधरकृतनाम्नामवयवार्थविचारं विनाऽलंकाराणां साक्षात्स्वरूपमजानाना अर्वाचीना लभ्योदाहरणानुसारेण भिन्नभिन्नलक्षणानि व्यदधुः । तदेतद्भ्रमजालम् । यथा परब्रह्मणोऽपरिज्ञानविषये कश्चित्—

यैः स्पृष्टः खलु पाद एव भणितः स्तम्भाकृतिर्यैः पुनः
पुच्छे तैस्तु वरत्रया समगुणः शुण्डे च रम्भानिभः ॥
तुल्योऽसौ मुसलेन दन्त उत यैः कर्णे च शूर्पोपमः
पृष्ठे चापि च शैलगण्डसदृशो ह्यन्धैर्मतङ्गो महान् ॥ १ ॥
इति ॥

साहित्यशास्त्रस्य मुख्यप्रयोजनं तु मनोरञ्जकत्वम् । अतः कस्यचिन्नवीनमनोरञ्जकविषयस्य कथने, अमनोरञ्जकस्य खण्डने वा न कश्चिद्दोषः । उक्तं हि भगवता वेदव्यासेनाग्निपुराणे—

अपारे काव्यसंसारे कविरेव प्रजापतिः ॥
यथा वै रोचते विश्वं तथेदं परिवर्तते ॥ १ ॥ इति ॥

अपरः कश्चिदप्यर्वाचीनो नामैव लक्षणं नामन्यत । केवलं जयदेवकविश्चन्द्रालोके—

स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयम् ॥

इत्यलंकारत्रिकस्य नामरूपं लक्षणमाह ॥

लक्षणं द्विविधम् । स्वरूपलक्षणं तटस्थलक्षणं च । स्वरूपं स्वाकारस्वभावरूपवस्तुस्थितिः । तटस्थशब्दार्थस्तु तीरस्थित इति । स्वरूपाद्भिन्नमितिभावः ॥ चतुर्भुजत्वमिति विष्णोर्लक्षणमाकाररूपत्वात्स्वरूपलक्षणम् । चक्रपाणित्वमिति विष्णोर्लक्षणं विष्णोराकाराद्भिन्नमिति तटस्थलक्षणम् ॥ मम तु मतं, वस्तुनः साक्षाज्ज्ञानं यादृक्स्वरूपलक्षणाद्भवति, तादृक्तटस्थलक्षणान्न भवतीति । अत एव स्वरूपलक्षणस्य मुख्यत्वम् ॥ नाम च स्वरूपलक्षणम् ॥ तदितरल्लक्षणं तटस्थलक्षणम् । लक्षणे चातिव्याप्तिरव्याप्तिरसंभव इति त्रयो दोषा भवन्ति ॥

अतिव्याप्त्यादिदोषाणां नामान्येव हि लक्षणम् ॥
रम्यां गौरीं तथा भीतिजनिकां विद्धि नायिकाम् ॥ १ ॥

"मनोहरत्वं नायिकाया लक्षणम्" इत्युक्ते 'मनोहरत्वस्य नायकादिपदार्थान्तरेष्वपि सत्त्वात् "लक्ष्यातिरिक्ते लक्षण-

स्वेनाभिमतस्य व्यापनमतिव्याप्तिः ।" इति लक्षणलक्षितोऽतिव्याप्तिदोषः ॥ "गौरवर्णत्वं नायिकायां लक्षणम्" इत्युक्ते श्यामवर्णायां नायिकायां गौरवर्णस्याव्यापनात् "लक्ष्यैकदेशावर्तनमव्याप्तिः ।" इति लक्षणलक्षितोऽव्याप्तिदोषः ॥ शृङ्गारालम्बनत्वात्तस्या अपि नायिकात्वमिष्टमेव ॥ यथा—

"श्यामेयं सुन्दरी नारी भुजगीव नरान्दशेत् ॥ इति ॥

"भयजनकत्वं नायिकाया लक्षणम्" इत्युक्तेऽस्य लक्षणस्य कस्यांचिदपि नायिकायामसत्त्वात् "लक्ष्येऽत्यन्तासत्त्वमसंभवः" इति लक्षणलक्षितोऽसंभवदोषः ॥ रत्युत्पादकसुन्दर्या एव नायिकात्वव्यवहारात् ॥ धुरंधरकृतनामरूपलक्षणानामुक्तदोषत्रयराहित्यं स्वेवं रीत्या ज्ञेयम् ॥ कवेर्नवीनरूढनामप्रयोगाक्षमतया कविकृतनाम्नो यौगिकत्वान्नासंभवदोषावकाशः ॥ क्वापि सजातीये वस्तुनि नाम्नोऽवयवार्थस्य प्रवृत्त्यभावे उपलक्षणेन तस्यापि संग्रहादव्याप्तिदोषाभावः । उपलक्षणस्वरूपं च द्वितीयाकृतौ लक्षणाप्रकरणे दर्शयिष्यते । क्वचिच्च विजातीये वस्तुनि नामार्थस्य प्रवृत्तौ योगरूढयोर्मिश्रत्वाङ्गीकारात्प्रवृत्तिनिरोधेनातिव्याप्तिदोषाभावः ॥ न च वाच्यं, नामस्वव्याप्तिवारणार्थं न्यायमतानुसारं रूढ्यर्थविस्तारमकृत्वा लक्षणापर्यन्तमनुधावनस्य किं प्रयोजनमिति ॥ साहित्यशास्त्रे कवेर्नवीनरूढनामनिर्माणाक्षमत्ववत्प्रथमतः शिष्टप्रयुक्तसुरभूरुहकनकसौधादिनामेतरशब्देष्वप्यसमञ्जसतया रूढ्यर्थविस्तारस्याक्षमत्वात् ॥

नाम त्रेधा। यौगिकं रूढं योगरूढं च। तल्लक्षणानि न्यायमुक्तावल्याम्—

"यत्रावयवार्थ एव बुध्यते तद्यौगिकम् ॥"

अस्यायमाशयः। यत्र नाम्नः पृथक्पृथगवयवार्थेन वस्तुनो बोधस्तद्यौगिकम् ॥ यथा- "सुधांशुः।" अत्र सुधेत्यवयवार्थोऽमृतम्। अंशुरित्यवयवार्थः किरणः, सुधांशुरिति समुदितशब्दार्थोऽमृतमयकिरणवानिति। अत्र वस्तुनि नाम्नोऽवयवार्थस्य योगाद्यौगिकत्वम् ॥

"यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम् ॥"

अस्यायमभिप्रायः। प्रकृतिप्रत्ययाप्रतिपाद्यो व्युत्पत्तिरहितः शब्दः शिष्टैः कस्मिंश्चिदर्थे प्रयुक्तो रूढ्या तदर्थं प्रतिपादयतीति रूढत्वम् ॥ नामकर्तुरिच्छानुसारं प्रसिद्धी रूढिरित्युच्यते ॥ "रूढिः शिष्टप्रयोगे। प्रसिद्धौ। अनादिव्यवहारसिद्धे संबन्धविशेषे। मुख्यशब्दवृत्तेर्भेदे" इति चिन्तामणिः ॥ यथा—डित्थः ॥ नात्र कश्चिदवयवार्थः। केनचिच्छिष्टेन स्वेच्छामात्रेण काष्ठमयगजे डित्थशब्दः प्रयुक्त इति तस्य स एवार्थो नियतः ॥ "डित्थः काष्ठमये गजे" इति चिन्तामणिः ॥

"यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् ॥

यथा—पङ्कजम् ॥ पङ्क इत्यवयवार्थः कर्दमः। ज इत्यवयवार्थो जात इति ॥ इदं तु पङ्कजनाम्न्यवयवशक्त्या यौगिकत्वम्। तत्रावयवार्थे समुदायशक्तिस्तु पङ्कजनाम दिवसविकासिकमलस्यैव बोधकमिति ॥ इदमेव रूढत्वम् ॥ तदुक्तं न्यायमुक्तावल्याम् "रूढिज्ञानस्य केवलयौगिकार्थज्ञानप्रतिबन्धकत्वात्" इति ॥ यद्यपि रात्रिविकासिकमलस्य कुमुदस्यापि कर्दमोत्पन्नत्वादवयवशक्त्या तु कुमुदस्यापि पङ्कजेति नाम स्यात्। तथापि समुदायशक्त्या दिवसविकासिकमलस्यैव पङ्कजनामेति तस्यैव बोधो भवति। न तु कुमुदस्यापि। दिवसविकासिकमले एव शिष्टप्रयोगात् ॥ अत्रावयवार्थविचारं विना पङ्कजनामश्रवणमात्रेण दिवसविकासिकमलस्यैव बोध इति निष्कर्षः ॥

योगरूढशब्देषु कचिद्योगजन्यार्थस्य न्यूनाधिकतायां रूढ्या योगार्थस्य संकोचविकासौ क्रियेते। यथा नीरधिशब्दे नीरशब्दार्थो जलम्। धीत्यवयवार्थोऽधिकरणम्। जलाधिकरणरूपयोगार्थस्य घटवाप्यादौ विद्यमानत्वेऽपि घटादिव्यावृत्त्या नीरधिशब्दस्य समुद्रे नियमनं तु योगार्थस्य संकोचः। विकासस्तु क्षीरसमुद्रस्य क्षीराधारतया जलाधिकरणत्वाभावेऽपि क्षीरनीरधिशब्दस्य क्षीरसमुद्रेऽपि प्रयोगो यथा स्यात्॥ योगरूढनामस्वर्थस्य संकोचविकासार्थं रूढेरङ्गीकारः ॥ योगरूढनामान्यनेकानि। तत्र पाणिग्रहणनाम्नि पाणीत्यवयवार्थो हस्त इति। ग्रहणमित्यवयवार्थो धारणमिति। इदं त्ववयवशक्त्याऽत्र यौगिकत्वम्। तत्रावयवार्थे समुदायशक्तिस्तु पाणिग्रहणशब्दो

विवाहरूपमेवार्थं बोधयतीति। इदमेव रूढत्वम्। आकर्षणावलम्बनादिष्वपि करग्रहणरूपार्थस्य विद्यमानत्वेनाऽवयवशक्त्या त्वाकर्षणावलम्बनादीनामपि पाणिग्रहणमिति नाम स्यात्। तथापि समुदायशक्त्या पाणिग्रहणशब्देन विवाहरूपार्थस्यैव बोधः। न त्वाकर्षणादीनामपि। विवाह एव पाणिग्रहणशब्दस्य शिष्टप्रयोगात्॥ "पाणिग्रहणं विवाहे। विवाहो भार्याप्राप्तिहेतौ" इति चिन्तामणिः॥ अत्र रूढ्या योगार्थस्य संकोचः। एवमलंकारादिनामस्वपि योगरूढत्वाङ्गीकारः। तथाहि, अतिशयोक्तिरित्यत्रातिशयेत्यवयवार्थो लङ्घनम्। उक्तीत्यवयवार्थः कथनमिति। इदं त्वतिशयोक्तिनाम्न्यवयवशक्त्या यौगिकत्वम्। अतिशयोक्तिनाम्नोऽवयवार्थे समुदायशक्तिस्त्वतिशयोक्तिनाम लोकसीमातिलङ्घनरूपमेवार्थं बोधयतीति। इदमेव रूढत्वम्। आज्ञा-समुद्र-पर्वतादीनां लङ्घनेऽपि लङ्घनोक्तिर्भवतीत्यवयवशक्त्या त्वाज्ञादीनां लङ्घनोक्तेरप्यतिशयोक्तिरिति नाम स्यात्॥ तथापि समुदायशक्त्या लोकसीमातिलङ्घनस्यैवातिशयोक्तिरिति नामनिर्देशात्तस्यैवार्थस्य बोधः। न त्वाज्ञादिलङ्घनकथनरूपार्थस्य। आलंकारिकशिष्टैरतिशयोक्तिशब्दस्य लोकसीमातिलङ्घने एव प्रयुक्तत्वात्॥ अत्रातिव्याप्तिव्यावृत्तये रूढ्या योगार्थस्य संकोचः॥ एवमप्रस्तुतप्रशंसाद्यलंकारेषु स्वयमूहनीयम्॥ अस्मिन्नेव साहित्यशास्त्रे व्यभिचारीत्यत्र वीत्यवयवार्थो विविधमिति। अभीत्यवयवार्थ आभिमुख्यम्। चारीत्यवयवार्थः संचारकर्तेति। इदं तु व्यभिचारिनाम्न्यवयवशक्त्या यौगिकत्वम्। व्यभिचा-

रिनाम्नोऽवयवार्थे समुदायशक्तिस्तु व्यभिचारिनाम ग्लान्यादिसंचारिरूपमेवार्थं बोधयतीति। इदमेव रूढत्वम्। कवि-दानार्थिद्विज-दक्षिणनायकादिष्वपि तादृशसंचारकरणरूपार्थस्य विद्यमानत्वेनावयवशक्त्या तु कविप्रभृतयोऽपिऽव्यभिचारिनामवाच्या भवेयुः। तथापि समुदायशक्त्योक्तसंचारिणामेव व्यभिचारीतिनामनिर्देशात्तेषामेवावगमः। न तु कविप्रभृतीनाम्। शृङ्गारादिरसरसिकशिष्टैर्व्यभिचारिपदस्य ग्लान्यादिष्वेव प्रयुक्तत्वात्। अत्राप्यतिव्याप्तिवारणार्थं योगार्थस्य संकोचः॥

उक्तरीत्याऽतिव्याप्त्यादिदोषवारणसिद्धान्तस्तु नामस्वेव। न तु लक्षणेष्वपि। अत एव लक्षणेषूक्तदोषवारणार्थं शास्त्रकारा विशेषणादिद्वारा प्रयत्नं कृतवन्तः। धुरंधराणां नामरूपसर्वसंग्राहकलक्षणैरेवालंकारादीनां साक्षात्स्वरूपे स्पष्टे नामेतरलक्षणनिर्मितिस्तु भरतादीनां प्रमाद एव॥

भरतादिप्रमादो यो भोज(*)काले न निर्गतः॥
यशवन्तमहाराजभाग्यादद्य विनिःसृतः॥ १॥

* विक्रमार्कस्याष्टसप्तत्युत्तरसहस्रतमे १०७८ वर्षे भोजमहाराजः परमारजातीयः क्षत्रियो धारानगरीपतिर्बभूव। तस्यान्तिके कालिदासादयोऽत्युत्तमा विद्वांस आसन्। स्वयं च विद्वानासीत्। तन्निर्मितावलंकारविषये सरस्वतीकण्ठाभरणाख्यो ज्योतिषशास्त्रे च राजमृगाङ्काख्यः प्रसिद्धग्रन्थौ। अनेन संस्कृतविद्याऽतीवोन्नतिपथमानीता। प्रसिद्धं खलु नवीनोक्तिमत्पद्यरचयिता तस्माल्लक्षमुद्राः प्राप्नोतिस्मेति। अस्य प्रशंसावचनत्वेपि तस्य बहुलतरद्रव्यदानं स्फुटमनुमीयते। भोजराजसमये तस्य गुणग्राहितया संस्कृतविद्यायाः प्रचारं त्वावेदयति भारवाहादीनामपि तज्ज्ञताभिज्ञत्वम्। तथाहि कस्यचिद्भारवाहस्य शिरस्यधिकतरं भारं समीक्ष्य भोजमहाराजस्तं पप्रच्छ। "भारो न बाधति?" इति। बाधतेरात्मनेपदित्वाद्बाधतीत्यपप्रयोगमाकर्ण्य स राजानमाह। "भारो न बाधते राजन्! यथा बाधति बाधते॥" इति॥

अस्माभिर्भरतमुनिवेदव्यासदण्ड्याचार्यमहाकविमम्मटादीनां प्रमादं प्रदर्श्य लक्षणादीनां खण्डनं यशवन्तयशोभूषणे विस्तरेण विहितम्। स च ग्रन्थोऽस्माभिर्भाषाभूषणग्रन्थस्य प्रसङ्गेन राजराजेश्वराज्ञया विनिर्मित इति तत्सारभूतेऽस्मिन्यशवन्तभूषणाख्ये स्वल्पग्रन्थे केवलं भाषाभूषणमूलभूत-'चन्द्रालोकस्यैव प्रमाददर्शनेन लक्षणादिखण्डनं विधास्यते॥

प्रवादोऽनादिमानेष यशो भाग्यवशादिति॥
अन्यामपीदृशीं वार्तां वक्ष्ये मरुमहीपतेः॥ २॥
सरित्पञ्जावदेशीया(*) स्वच्छवारिमनोहरा॥
मण्डोवरपुरोपान्ते स्वच्छन्दं प्रावहत्पुरा॥ ३॥
चिन्हानि च प्रदृश्यन्ते तत्र तत्र स्थलेऽधुना॥
श्रीमदावड़शक्त्याख्या संजाता चारणान्वये॥ ४॥
तस्याः शापवशात्काले विक्रमस्य महीपतेः॥
त्यक्त्वा मण्डोवरोपान्तं नदी दूरं विनिर्गता॥ ५॥
तेन मण्डोवरप्रान्तो बभूव जलवर्जितः॥
मरुस्थलीति संज्ञास्य देशस्यासीत्ततः परम्॥ ६॥
मण्डोवरपुराधीशा बभूवुर्बहवो नृपाः॥
उत्तरोत्तरमुत्कृष्टा भोगभाजो महाबलाः॥ ७॥
भुक्त्वा भोगान्स्वके काले महीं त्यक्त्वा दिवं गताः॥
कंचित्कालं दधुश्छत्रं क्षत्रिया नागवंशजाः॥ ८॥

* पञ्जाबदेशस्य सरिन्मण्डोवरोपकण्ठे भूत्वा पश्चिमसमुद्रं गच्छति स्म॥ तस्यास्तीरे पाषाणमयानीक्षुपीडनयन्त्राण्यद्यापि क्रमेणोपलभ्यन्ते॥

ततो हेतोरयं शैलो नागाद्रिरिति कथ्यते ॥
परमारनराधीशा राज्यं चक्रुस्ततः परम् ॥ ९ ॥

वभूव तेषां धरणीवराहो(*)
महाप्रभावो मरुभूमिनाथः ॥
यो ह्यर्बुदादीन्नवरम्यकोटान्
विभक्तवान् दिङ्मितसोदरेषु ॥ १० ॥

नवकोटीति विख्याता तेन लोके मरुस्थली ॥
भुक्त्वा भोगान्सुविपुलाल्लीनास्तेपि नृपा भुवि ॥११॥
प्रतिहार(†)नृपाः पश्चाच्छशासुर्मरुमेदिनीम् ॥
तेषु नाहड़रावाख्य आसीद्भूपालभूपणम् ॥ १२ ॥
येन पुष्करतीर्थस्य विख्यातस्य महीतले ॥
जीर्णोद्धारविधानेन प्राप्तं पुण्यमनुत्तमम् ॥ १३ ॥
चित्रकूटाधिपो राहपभूमिपो गुहिलान्वयः ॥
दुर्गं जहार भूमिं च युद्ध्वा राणापदं तथा ॥ १४ ॥
चित्रकूटमहीपालाः पूर्वं रावल्पदं दधुः ॥

---

* धरणीवराहादिभिर्दशभिर्भ्रातृभिरेवं प्रकारेण नव कोटा विभक्ताः। यथा १ मण्डोवरः सामन्तस्य। २ अजमेरुः सिद्धस्य। ३ पुङ्गलाख्यो गजमल्लस्य। ४ लोद्रवाख्यो भाणाख्यस्य। ५ अर्बुदाचलोऽल्हपल्हयोः। ६ जालंधरो भोजराजस्य। ७ धाटाख्यो योगराजस्य। ८ पारकराख्यो हांसूनाम्नः। ९ किराडूनामा धरणीवराहस्य भागः। एते विभागाः प्रातिलोम्येन विहिताः। सर्वेभ्यः कनिष्ठ. सामन्तस्तस्य विभागे प्रधानकोटो मण्डोवरः। सर्वेभ्यो ज्येष्ठो धरणीवराहस्तस्य विभागे किराडूनामकः कोटः ॥

† अस्यापभ्रंशः पडिहार इति ॥

प्रतिहारजयादूर्ध्वं राणापदभुजोऽभवन् ॥ १५ ॥
षष्ट्यशीत्योरन्तराले शतके तु चतुर्दशे ॥
वैक्रमे राहपो राजाऽभवद्भूरिपराक्रमः ॥ १६ ॥
पश्चान्मुल्तानदेशीयं सैन्यं यवनभूपतेः ॥
आगत्य गौहिलाज्जह्रे दुर्गं वसु वसुंधराम् ॥ १७ ॥
शतके विक्रमार्कस्य लेभे पञ्चदशे ततः ॥
चूँडानरेशो मण्डोरदुर्गं राठौड़वंशजः ॥ १८ ॥
तदाप्रभृति राठौड़वंशीयाः क्षत्रियोत्तमाः ॥
मण्डोवरपुराधीशा बभूवुर्बलशालिनः ॥ १९ ॥
सहस्रद्वयसंख्याके कालेऽस्मिन्पर्वता इमे ॥
अत्रैव सरितश्चेमा अवर्तन्त समन्ततः ॥ २० ॥
निर्जलं सजलं कर्तुमुद्योगं चक्रिरे नृपाः ॥
सर्वे तथापि नो कश्चित्कृतार्थोऽभून्महीपतिः ॥ २१ ॥
यत्र यत्र कृतो यत्नो यशवन्तमहीभुजा ॥
प्रावर्तत जलं तत्र स्थातुं स्थिरतयाऽधुना ॥ २२ ॥
अद्यावधि मरुस्थल्यां तडागाः सप्त निर्मिताः ॥
अन्यानपि च निर्मातुं यत्नोऽस्ति बहुलोऽधुना ॥ २३ ॥
प्राच्यां दिशि योधपुरात्क्रोशानामेकविंशतेः पूर्तौ ॥
आस्ते महाँस्तडागो यशवन्तसमुद्र इत्यभिख्यातः ।२४।
चत्वारिंशत्करतोऽधिकं च गाम्भीर्यमस्य सरसोऽद्य ॥

पञ्चदशकोशानां प्रमिता चैव प्रदक्षिणा भणिता ।२५।
त्रयोदशानां लक्षाणामद्य यावद्व्ययोऽभवत् ॥
न स पूर्णो न वा जाता प्रासादानां विनिर्मितिः ॥२६॥

## प्राचीनग्रन्थकर्तृनामानि ॥

मूलं तु वेदास्तत्पश्चाद्भरतो वादरायणः ॥
भोज इत्यादयश्चक्रुर्व्याख्यानं वहुविस्तरम् ॥ १ ॥
श्रीयशवन्तनरेशो राष्ट्रवरेण्यो विनिर्मिमे पूर्वः ॥
नरभाषायामाद्यं भाषाभूषणनिवन्धमतिरम्यम् ॥ २ ॥

मयाऽलंकारग्रन्थानवलोक्यायं ग्रन्थो विनिर्मितस्तेषां तत्कर्तॄणां चैतानि नामानि—

भरतमुनिप्रणीतं नाट्यशास्त्रम् । अयं वेदव्यासात्प्राक्तनः ।

"भरतेन प्रणीतत्वाद्भारती रीतिरुच्यते" ॥

इत्यग्निपुराणे भरतोल्लेखात् ॥ १ ॥

वेदव्यासविहितमग्निपुराणम् । अग्निपुराणस्य त्रिशतान्वितचतुश्चत्वारिंशाद्यध्यायत्रयेऽलंकारा गदिताः । वेदव्यासो हि महाभारतसमकालिक इति तत्कालाच्चतुःसहस्रं वर्षाणि व्यतीतानीत्यनुमीयते ॥ २ ॥

दण्ड्याचार्यप्रणीतः काव्यादर्शः । अयं कविर्विक्रमार्कस्य सप्तमे शतके वभूव ॥ ३ ॥

वामनेन काव्यालंकारसूत्रमकारि । अयं विक्रमार्कस्याष्टमे शतके समजनि ॥ ४ ॥

'राजानकश्रीमदानन्दवर्द्धनाचार्येण ध्वन्यालोको रचितः । अयं कविर्विक्रमार्कस्य सप्तशराङ्क९५७संवत्सरसमीपे बभूव ॥ ५ ॥

रुद्रटकृतः काव्यालंकारग्रन्थः । अयं भोजमहाराजात्प्राक्तनः ॥ ६ ॥

धनंजयप्रणीतं दशरूपकम् । अयमपि भोजमहाराजात्प्राक्कालीनः ॥ ७ ॥

भोजराजेन सरस्वतीकण्ठाभरणमरच्यत । अयमष्टमुनिखेन्दु १०७८ मितविक्रमवत्सरे समभूत् ॥ ८ ॥

मम्मटकृतः काव्यप्रकाशः । अयं भोजमहाराजात्पश्चाद्रसेन्दुनेत्रविधु १२१६ वत्सराच्च पूर्वमजायत ॥ उक्तग्रन्थस्य कारिकाः प्राचीनाः । अस्य प्रतिष्ठितत्वाद्बहुभिरयं व्याख्यायत ॥ ९ ॥

जयदेवेन चन्द्रालोकरचनाकारि । अयं विक्रमार्कस्य द्वादशे शतके बभूवेति प्रसिद्धम् ॥ १० ॥

राजानकरुय्यक(रुचक)कृतोऽलंकारसर्वस्वग्रन्थः । अयं विक्रमार्कस्य द्वादशशतकोत्तरार्द्धे संजातं इत्यनुमीयते ॥११॥

शोभाकरमित्रेणालंकाररत्नाकरो रचितः । अयमलंकारसर्वस्वात्पश्चाद्भवः ॥ १२ ॥

वाग्भट्टेन वाग्भटालंकारो विहितः ॥ अयं गुणभूनेत्रेन्दु-१२१३ विक्रमवत्सरे बभूव ॥ १३ ॥

हेमाचार्यकृतं काव्यानुशासनम् । अयं नवाग्निनयनेन्दु-१२२६ मिते विक्रमवत्सरे परासुतामवाप ॥ १४ ॥

राजानकजयरथस्यालंकारोदाहरणम् । अयं कविर्वसुवेदाग्निविधु१२४८संवत्सरादर्वाक्तनः ॥ १५ ॥

विद्यानाथस्य प्रतापरुद्रीयग्रन्थः । अयं खमुनिगुणकु१३७० विक्रमवत्सरसमीपे बभूव ॥ १६ ॥

भानुदत्तेनालंकारतिलकाख्यमकारि । अयं वेदाष्टयुगेन्दु-१४८४विक्रमवत्सरात्प्राक्तनः ॥ १७ ॥

केशवमिश्रस्यालंकारशेखरः । अयमभ्राग्निरसेन्दु१६२० मितविक्रमवत्सरसमयसमीपे बभूव ॥ १८ ॥

अप्पयदीक्षितकृतः कुवलयानन्दग्रन्थः । अयं कविः खचन्द्ररसेन्दु१६१०विक्रमवत्सरे प्रादुर्भूतः ॥ अस्मिन्ग्रन्थे कारिकाश्चन्द्रालोकोद्धृताः ॥ १६ ॥

उक्तकविना चित्रमीमांसाप्रबन्धोपि प्रणीतः । स चापूर्णः २०

विश्वनाथविहितं साहित्यदर्पणम् । अस्य समयः खगुणरसेन्दु१६३०संवत्सरसमीपवर्ती ॥ २१ ॥

अनेनैव साहित्यसुधासिन्धुरपि प्राणीयत ॥ २२ ॥

जगन्नाथत्रिशूलिरचितो रसगङ्गाधरः । अयं 'सप्तदशशत-

तम१७००संवत्सरसमीपे बभूव । दिल्लीशशाहजहांयवनेनायं तैलङ्गब्राह्मणकविर्महापात्रपदवीप्रदानेनोज्जृम्भितस्तत्तुल्यतोलितहेमदानेनानुगृहीतोऽनेकशोऽनर्घरत्नैर्मुखेऽपूरि ॥ २३ ॥

विश्वेश्वरेणालंकारकौस्तुभो रचितः । अयं शराश्वमुनिशशि१७७५संवत्सरसमीपे संजातः ॥ २४ ॥

कृष्णशास्त्रिप्रणीता मन्दारमरन्दचम्पूः । अयं कविर्दाक्षिणात्यः ॥ २५ ॥

राजानकजयरथेन सर्वस्वव्याख्या विमर्शनी विहिता । इयं व्याख्याऽलंकाररत्नाकरात्पश्चात्संभूता ॥ अलंकारोदाहरणकर्तापिंयमेव ॥ २६ ॥

गोविन्दठक्कुरेण काव्यप्रकाशोपरि काव्यप्रदीपाख्या व्याख्या निरमीयत । अयं कविरष्टरसषड्विधु१६६८संवत्सरात्प्राक्समजनि ॥ २७ ॥

विमर्शनीकाव्यप्रदीपयोर्व्याख्यारूपत्वेपि प्रथमकक्षाकस्वतन्त्रग्रन्थतुल्यतयाऽत्र गणनम् ॥

## छन्दआदिविचारः ॥

छन्दांस्यनादीनि । वेदोपि च्छन्दोमयः । मनुस्मृतिरपि च्छन्दोबद्धा । छन्दसां मानं तु जिह्वा ॥ उक्तं हि केनाचिच्छन्दोविदा—

"जिह्वा(*)जाणादि च्छन्दः" इति ॥

छन्दसां तुला श्रवणम् ॥ तदुक्तं पिङ्गलसूत्रे—

(*) जिह्वा जानाति च्छन्दः ॥

"जेम(*)ण सहइ कणअतुलातिलतुलिअं अद्धअद्धेण।
तेम ण संहइ संवणतुला अवच्छन्दं छन्दभङ्गेण ॥"
इति ॥

प्रथमं जिह्वाया मानेन श्रवणतुलयैव च छन्दसां रचना जाता। ततश्च छन्दोऽनुसारेण मात्रावर्णगणान्विचार्य छन्दसां लक्षणनिर्माणमित्यनुभवसिद्धम् ॥ छन्दोवशात्कचिद्गुरुलघुव्यत्ययोपि भवति ॥ तदेवोक्तं पिङ्गलसूत्रे—

"जइ(†)दीहो विअ वण्णो लहुजीही पढइ सोवि लहू॥
वण्णो वि तुरिअपढिओ दो तिण्णि वि एक्क जाणेहु।१।"
इति ॥

अस्येदमुदाहरणम्—

"अरेरे(‡)वाहहि कान्ह नाव छोटि, डगमगकुगति ण देहि
तइ इथिं णदिहिं संतारदेइ, जो चाहसि सो लेहि.॥१०॥
दोहावृत्तम् ॥

अत्र "अरे रे" इति संबोधनद्वयम्। अनयोस्त्वरितं पाठे वृत्तभङ्गो न भवति ॥

---

(*) यथा न सहते कनकतुला तिलतुलितमर्द्धार्द्धेन ॥ तथा न सहते श्रवणतुला अपच्छन्दकं छन्दोभङ्गेन ॥ १ ॥

(†) यदि दीर्घमपि वर्णं लघुं जिह्वा पठति सोपि लघुः। वर्णौ ( वर्णा वा ) अपि त्वरितपठितौ द्वौ वा त्रयो वा एकं जानीत ॥ १ ॥

(‡) अरेरे वाहय कृष्ण! नावं सूक्ष्मां डगमगकुगतिं न देहि ॥ त्वमस्यां नद्यां संतारं दत्त्वा यदपेक्षसे तद्गृहाण ॥ १ ॥

ग्रन्थकारैः शब्ददोषा अर्थदोषाश्च भणिताः । ते च सहृदयहृदयोद्वेजकत्वाभावे त्वदोषा एव । एतस्य दिग्दर्शनमुपमाप्रकरणे दण्डयाचार्येण विहितम्—

"न लिङ्गवचने भिन्ने न न्यूनाधिकतापि वा ॥
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ १ ॥ इति॥

यथा—

याचे सज्जनसिंहभूप! भवतोऽनुज्ञां मुरारिः कवि-
र्भुक्तं स्वर्गसुखं त्वदीयभवने गौर्युत्सवेऽनुग्रहात् ॥
नाहं विस्मृतिमेमि मज्जति मनः कान्तावियोगाम्बुधौ
ज्योत्स्ना चैत्रभवा विना शशिमुखीं दैत्यो यथा भाति मे १

अत्रोपमेयज्योत्स्नायाः स्त्रीत्वमुपमानदैत्यस्य च पुंस्त्वमिति भिन्नलिङ्गत्वमप्युद्वेगजनकत्वाभावान्न दोषः । एवमन्यदपि स्वयमूहनीयम् ॥

केचित्समर्था महाकवयो रसोन्मत्ततया क्वचिच्छास्त्रमर्यादामुल्लङ्घ्य प्रवर्तन्ते । अत एव "निरङ्कुशाः कवयः" इति प्रसिद्धम् । यथा रघुवंशे (४-४५) कालिदासः—

"स सैन्यपरिभोगेण गजदानसुगन्धिना ॥
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ १ ॥

अत्र मल्लिनाथः "सुगन्धिना" इत्यत्र "गन्धस्येत्-" इत्यादिनेकारादेशः समासान्तः । यद्यपि "गन्धस्येत्त्वे तदेकान्तग्रहणं

कर्तव्यम् " इति नैसर्गिकगन्धविवक्षायामिवेकारादेशः । तथापि निरङ्कुशाः कवयः" इत्याह ॥

काव्यार्थपरिज्ञाने पितामहकविराजबाँकीदासकृतकविमतमण्डनभाषाग्रन्थोक्तनिम्नलिखितविषयस्यात्यावश्यकत्वम्॥ तद्विषयं पद्यमिदम्—

"उक्तिविशेष्यविशेषणमध्याहारस्तथान्वयः शब्दः ॥
अर्थः ख्यातिः कर्ता नायक एतेऽर्थबोधकाः सर्वे ।१।

इयं कस्योक्तिः । विशेष्यः कः । विशेषणं किम् । कस्यार्थस्याध्याहारः। कस्य शब्दस्य केन शब्देन सहान्वयः । शब्दः कीदृशः, रूढो यौगिको योगरूढो वा । अर्थः कः, वाच्यार्थो लक्ष्यार्थो व्यङ्ग्यार्थो वा । ख्यातिः, अत्र कः प्रसङ्गः । कर्ता काव्यनिर्माता । नायको वर्णनीयत्वेनाभिप्रेतः ॥

इति श्रीमन्मरुमण्डलमुकुटमणि-महाराजाधिराज-राजराजेश्वर जी. सी. एस. आई. यशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचितयशवन्तभूषणग्रन्थे भूमिकानिरूपणं नाम प्रथमाकृतिः समाप्ता ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीजगदम्बायै नमः ॥

# अथ काव्याकृतिप्रारम्भः ॥

कविरिति वेदैर्गीतं ध्यात्वा साक्षात्परात्परं देवम् ॥
कविकृतकाव्यस्यात्र स्वरूपमच्छं निरूप्यते भूप! ॥ १ ॥

काव्यस्यालंकारा निरूपणीया इति प्रथमं तावत्काव्यस्वरूपं लक्षयामः ॥

सर्वशक्तिमान्परमेश्वरोऽपि कविः ।

"कविर्मनीषी परिभूः स्वयंभूः"

इति श्रुतेः ॥ वेदस्य तद्विहितत्वात्काव्यत्वम् ॥ तत्र रसालंकारादिमयरमणीयरचना चोपलभ्यते । परिभूरित्यादिविशेषणैः परमात्मानं स्तुवतो वेदस्य कवीत्यपिविशेषणकथनात्कवेरतिश्लाघनीयत्वं सिद्धम् । वाल्मीकिमुनेरादिकवित्वेन प्रसिद्धत्वात्तन्निर्मितरामायणस्यादिकाव्यत्वम् । तच्च तत्रैव प्रतिसर्गमन्ते "आदिकाव्ये" इति लेखात्स्पष्टतरम् । भगवान्वेदव्यासोऽपि कविः ॥ तदुक्तम्-

जाते जगति वाल्मीकौ कविरित्यभवद्ध्वनिः ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ इति ॥

ततश्च व्यासरचितभारतश्रीमद्भागवतादिपुराणानामपि काव्यत्वम् ॥ तदुक्तं भगवता स्वयं व्यासेन महाभारतस्यादिपर्वणि प्रथमेऽध्याये—

उवाच च महातेजा ब्रह्माणं परमेष्ठिनम् ॥
कृतं मयेदं भगवन्काव्यं परमपूजितम् ॥ इति ॥

विभक्त्यन्तं पदम् । पदसमुदायो वाक्यम् । वाक्यसमुदायो महावाक्यम् । तथा च लघुतरमेकं वाक्यं वा, अनुष्टुप्छन्दो वा, अनेकपद्यसमुदायो वा कविविश्रान्तिपर्यन्तमेकं काव्यम् ॥

यथा—

आनीता नटवन्मया तव पुरः श्रीकृष्ण ! या भूमिका
व्योमाकाशखखाम्बराब्धिवसवस्त्वत्प्रीतयेऽद्यावधि ॥
प्रीतश्चेदसि संनिरीक्ष्य सहसा यद्वाञ्छितं देहि मे
नो चेद्ब्रूहि कदापि मानय पुनस्त्वं भूमिका ईदृशीः॥१॥

अत्रैकस्मिन्नेव पद्ये कवेर्विश्राम इत्येकपद्यात्मकं काव्यम् । माघरघुवंशादौ च ग्रन्थसमाप्तौ कवेर्विश्राम इति तदनेकसहस्रपद्यात्मकं काव्यम् ॥ काव्यं गद्यात्मकं पद्यात्मकमुभयात्मकं चेष्यते ॥

कुङ्धातोः कविशब्दो निष्पन्नः । " कुङ् शब्दे ॥ " तथा च शब्दकर्तृत्वं कवित्वम् । शब्दो द्विधा । ध्वन्यात्मको वर्णात्मकश्च । पशुपक्षिवादित्रादेः शब्दस्य

वर्णविवेकं विना केवलं ध्वनिरूपत्वाद्ध्वन्यात्मकत्वम्। सुरनरादेः शब्दस्याकारककारादिवर्णमयत्वाद्वर्णात्मकत्वम्॥ द्वयोरपि रमणीयारमणीयसाधारणभेदात्त्रैविध्यम्॥ तत्र गजगर्जनकोकिलस्वरयोः सुस्वरवादित्रादेश्च ध्वनी रमणीयः। "गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः" इति चौरकविः। खरकाकयोर्दुःस्वरवादित्रादेश्च ध्वनिररमणीयः। तन्मध्यवर्ती पारावतादेर्ध्वनिः साधारणः। प्रतिभाप्रकटितः सुरनरादेर्वर्णात्मकः शब्दो रमणीयः॥ प्रतिभालक्षणं तु—

स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी" इति॥

श्रुतिकटुत्वादिदोषग्रस्तो वर्णात्मकः शब्दोऽरमणीयः। व्यवहारमात्रगोचरो वर्णात्मकः शब्दः साधारणः। रमणीयशब्दस्याङ्गीकारः। अरमणीयस्यानङ्गीकारः। साधारणे त्वौदासीन्यम्॥ अत्र वर्णात्मकरमणीयशब्दे रूढिरिति वर्णात्मकरमणीयशब्दकर्तृत्वं कवित्वमिति निष्कर्षः॥ शब्दार्थयोर्नित्यसंबन्धादत्र रमणीयशब्दार्थग्रहणम्॥

श्रोत्रग्राह्यो गुणः शब्दो बुद्धिग्राह्योऽर्थ इष्यते॥
संमतिः सर्वशास्त्राणामेतस्मिन्मरुभूपते!॥ १॥

कवेस्तादृशशब्दकर्तृतया तादृशशब्दस्य कविकर्मत्वात्काव्यत्वम्। कवेरिदं काव्यम्॥ अत्र तादृशकर्मणि रूढिः॥ रसगङ्गाधरकारः—

"रमणीयार्थप्रतिपादकः शब्दः काव्यम्"

इति काव्यनाम स्फुटीचकार ॥

**शब्दस्तु भूप! रमणीयार्थस्य प्रतिपादकः ॥**
**काव्यं तदेतदन्वर्थलक्षणं सर्वसुन्दरम् ॥ १ ॥**

काव्यस्य रमणीयत्वं च नाट्यशास्त्रे स्फुटीकृतं भगवता भरतेन—

मृदुललितपदाढ्यं गूढशब्दार्थहीनं
जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम् ॥
बहुकृतरसमार्गं संधिसंधानयुक्तं
स(?)भवति शुभकाव्यं नाटकप्रेक्षकाणाम्॥ १॥

इति ॥

शब्दस्य गूढत्वं तु तस्यां भाषायामप्रचलितत्वम् । अर्थस्य गूढत्वं क्लिष्टत्वम् । जनपदसुखबोध्यत्वं च विदुषां साधारण-सर्वजनानां च सुखेनावगमनविषयत्वम् । युक्तिर्नवीनोऽर्थः । बहुकृतरसमार्गत्वं च पुष्कलजलपर्वतनिर्झरवत्तत्र तत्र गुणा-लङ्कारव्यङ्ग्यादिरूपकाव्यरसप्रस्रावित्वम् । अस्य लक्षणस्य नाट्यशास्त्रे उक्तत्वात् "नृत्ययोज्यम्, संधिसंधानयुक्तम्" इति च नाटकोपयोगिविशेषणद्वयम् । नृत्ययोज्यत्वं नाम काव्यस्य तालादिसहचारित्वम् । संधिश्च—

"अन्तरैकार्थसंबन्धः संधिरेकान्वये सति ॥"

इत्युक्तलक्षणः ॥

मृदुललितपदाढ्यं गूढशब्दार्थहीनं
जनपदसुखबोध्यं युक्तियुक्तं च यत्स्यात् ।
बहुकृतरसमार्गं राजराजेशवर्य!
भरतमुनिमतेन श्रेष्ठकाव्यं प्रदिष्टम् ॥ १ ॥

काव्यं द्विधा । श्रव्यं दृश्यं च । श्रुतिमात्रगोचरं श्रव्यम् । दृष्टिगोचरं दृश्यम् । सीतारामाद्यनुकरणकर्तृनटीनटाभ्यां तद्वृत्तान्तस्य गद्यपद्यात्मकवाण्या प्रकटनेऽपि तत्राभिनयद्वारा दर्शनस्य प्राधान्यान्नाटकस्य दृश्यत्वम् । भगवतो भरतस्य शुभकाव्यमिति कथनेन तादृशकाव्यस्य श्लाघ्यत्वात्कविभिस्तादृश्येव काव्यरचना विधेयेति तात्पर्यम् । न तु शुभमशुभमिति काव्यं द्विविधमिति ॥ केनचिद्भरतमतानुयायिना पर्यायान्तरेण तादृशं काव्यमुत्तममित्युक्तम् । ततो भ्रान्ता अर्वाचीना लोकव्यवहारानुसारेणोत्तममध्यमाधमेति काव्यस्य प्रकारत्रयं मन्यन्ते ॥

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥
अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ॥
शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥'

'इति काव्यप्रकाशगतकारिकावल्याम् ॥

अतादृशि वाच्यान्न्यूने समे वा चमत्कारिणि व्यङ्ग्ये गुणीभूतव्यङ्ग्यम् । तच्च मध्यमम् ॥ शब्दचित्रं शब्दालंकारः, अर्थचित्रमर्थालंकारः, तद्विशिष्टं व्यङ्ग्यरहितं काव्यम-

वरम् । अवरमपरम् । अधममिति भावः । काव्यस्य मध्यमाधमेतिप्रकाराङ्गीकारोऽर्वाचां प्रमादः । साहित्यशास्त्रे प्रधानस्यैव संज्ञार्हत्वात् । तथाचोक्तम् ॥

"प्राधान्येन व्यपदेशा भवन्ति" इति ॥

अत्र प्रधानत्वं तु चमत्कारस्येष्टम् । तदेवोक्तं ध्वन्यालोके ॥

"चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा" इति ॥

इदं च शब्दार्थरसालंकारादौ सर्वत्र स्मरणीयम् । तथा सति गुणीभूतमिति वदतां काव्यप्रकारत्वभणनं प्रमादः । तृतीयश्रेणीमधिरूढस्याधमस्य तु श्रवणमात्रेणैवानुचितत्वादनेनापि पर्यायोक्त्याऽवरमिति नाम भणितम् । तस्य च काव्यप्रकारत्वाङ्गीकारस्तु महाप्रमादः । रमणीयतारूपकाव्यधर्मस्य पक्षपातित्वाभावाद्येन केनापि व्यङ्ग्यालंकारादिना शब्दार्थयो रमणीयत्वे काव्यत्वसिद्धेः॥तदुक्तमनेन कारिकाकारेणापि—

'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ॥"
इति ॥

अदोषौ शब्दार्थौ क्वचिदलंकारं विनापि माधुर्यादिगुणसहितत्वे तत्काव्यमित्यर्थः ॥ सदोषशब्दार्थयोररमणीयत्वान्न काव्यत्वम् । "उद्वेगजनको दोषः" इत्यग्निपुराणे ।

अत एवात्र दोषपरिहारो विहितः । यदा च माधुर्यादिगुण-मात्ररमणीयतयैव शब्दार्थयोः काव्यत्वसिद्धिस्तदा व्यङ्ग्य एव रमणीयतानियमनं तु काव्यवैभवस्य ह्रासकरणम् ॥

काव्याद्बहुविधलाभः ॥ तदुक्तं काव्यप्रकाशगतकारिकाव-ल्याम्—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥" इति ॥

परनिर्वृतिः परमानन्दः । स च ब्रह्मानन्दसदृशः । तत्प्राप्तिस्त्वनेकजन्मसाधनसंसाध्या । तदुक्तं भगवद्गीतासु—

"अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥" इति॥

काव्यस्य तु श्रवणसमकालमेव परमानन्दप्राप्तिरिति विशेषः । काव्यानन्दस्य च ब्रह्मानन्दसदृशत्वं "ब्रह्मानन्द-सहोदरः" इति रसप्रकरणे उक्तम् ॥

उपदेशस्त्रिधा । प्रभुसंमितः, मित्रसंमितः, कान्तासं-मितश्चेति ।

क्रमेण यथा—.

संसारस्यानित्यत्वविषये—

"यो वै भूमा तदमृतम् । अथ यदल्पं तन्मर्त्यम् ॥"

इति वेदोपदेशः प्रभुसंमितः । केवलमाज्ञामात्रत्वात् । अस्मिन्नेव विषये—

"अहन्यहनि भूतानि प्रविशन्ति यमालयम् ॥
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम् ॥१॥

इति महाभारतोपदेशो मित्रसंमितः । सयुक्तिकं विस्तरेणोक्तत्वात् ॥ अस्मिन्नेव विषये–

"यो नक्षत्रगणैर्वृतो यदभितो जाता चकोरस्तुतिः
र्यस्तापं च तमश्च दूरमकरोद्योऽवर्षदत्रामृतम् ॥
यं दृष्ट्वापि शिला द्रुता किमपि यः कस्मात्कदाप्यंशुभि-
र्नाकर्षत्तटमद्य याति जलधेरेकः स चन्द्रः प्रगे ॥१॥

अयं काव्यरचनामय उपदेशः कान्तासंमितः । मनोहारित्वात् । मनोहरोपदेशश्चातीवहृदयंगमो भवतीत्यस्य श्लाघनीयत्वम् ॥

यथावा–

निद्रावशेन भवताप्यनवेक्ष्यमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ १ ॥

उषसि निद्राणा दरिद्रा भवन्तीति धर्मशास्त्रम् । अयं प्रभुसंमितोपदेशो नृपप्रबोधार्थं यथाश्रुतमुपदिष्टश्चेदरुचिकरत्वात्कोपस्य कारणं भवेत् । स एव कान्तासंमिततया कथितः सन् रुचिकरत्वाद्धृदयंगमत्वमगमत् ॥

अत एवात्र दोषपरिहारो विहितः । यदा च माधुर्यादिगुणमात्ररमणीयतयैव शब्दार्थयोः काव्यत्वसिद्धिस्तदा व्यङ्ग्य एव रमणीयतानियमनं तु काव्यवैभवस्य ह्रासकरणम् ॥

काव्याद्बहुविधलाभः ॥ तदुक्तं काव्यप्रकाशगतकारिकावल्याम्—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥" इति ॥

परनिर्वृतिः परमानन्दः । स च ब्रह्मानन्दसदृशः । तत्प्राप्तिस्त्वनेकजन्मसाधनसंसाध्या । तदुक्तं भगवद्गीतासु—

"अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥" इति ॥

काव्यस्य तु श्रवणसमकालमेव परमानन्दप्राप्तिरिति विशेषः । काव्यानन्दस्य च ब्रह्मानन्दसदृशत्वं "ब्रह्मानन्दसहोदरः" इति रसप्रकरणे उक्तम् ॥

उपदेशस्त्रिधा । प्रभुसंमितः, मित्रसंमितः, कान्तासंमितश्चेति ।

*क्रमेण यथा*—

संसारस्यानित्यत्वविषये—

"यो वै भूमा तदमृतम् । अथ यदल्पं तन्मर्त्यम् ॥"

इति वेदोपदेशः प्रभुसंमितः । केवलमाज्ञामात्रत्वात् । अस्मिन्नेव विषये—

"अहन्यहनि भूतानि प्रविशन्ति यमालयम् ॥
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम् ॥१॥

इति महाभारतोपदेशो मित्रसंमितः । सयुक्तिकं विस्तरेण प्रोक्तत्वात् ॥ अस्मिन्नेव विषये—

"यो नक्षत्रगणैर्वृतो यदभितो जाता चकोरस्तुतिः
यस्तापं च तमश्च दूरमकरोद्योऽवर्षदत्रामृतम् ॥
यं दृष्ट्वापि शिला द्रुता किमपि यः कस्मात्कदाप्यंशुभि-
र्नाकर्षत्तटमद्य याति जलधेरेकः स चन्द्रः प्रगे ॥१॥

अयं काव्यरचनामय उपदेशः कान्तासंमितः । मनोहारित्वात् । मनोहरोपदेशश्चातीवहृदयंगमो भवतीत्यस्य श्लाघनीयत्वम् ॥

यथावा—

निद्रावशेन भवताप्यनवेक्ष्यमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ १ ॥

उषसि निद्राणा दरिद्रा भवन्तीति धर्मशास्त्रम् । अयं प्रभुसंमितोपदेशो नृपप्रबोधार्थं यथाश्रुतमुपदिष्टश्चेदरुचिकरत्वात्कोपस्य कारणं भवेत् । स एव कान्तासंमिततया कथितः सन् रुचिकरत्वाद्धृदयंगमत्वमगमत् ॥

विद्यानाथो मनुष्यच्छायानुसारेण काव्यस्वरूपम्—

शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् ॥
हारादिवदलंकारास्तत्र स्युरुपमादयः ॥ १ ॥

इत्याह ॥ गुणदोषौ तु गुणदोषवद्विज्ञेयौ ॥

मनुष्यस्य शरीरमस्थिमांसमयम् । तद्वत्काव्यस्य शरीरं शब्दार्थमयम् । वाच्यार्थाभिधायकः शब्दो वाचकः । लक्ष्यार्थाभिधायकः शब्दो लक्षकः । साक्षात्संकेतितस्य वाच्यार्थस्य बाधे तत्संबन्ध्यर्थो लक्ष्यत इति लक्ष्यार्थस्यापि वाच्यार्थप्रायत्वम् । एतस्य शब्दार्थयुगलस्य शरीरवत्स्थूलत्वम् । स्फुटं दृश्यमानत्वात् । व्यङ्ग्यार्थस्य वस्तुतः शब्दाभिधेयत्वाभावाज्जीववत्सूक्ष्मत्वम् । प्रतिभावता प्रतीतिमात्रगोचरत्वात् । अत एव प्रतीयमानार्थ इति नामान्तरम् । मम तु मतं, 'यथा गर्भाशये शरीरोत्पत्तेः पश्चाज्जीवस्य प्रवेशः । तथा वाच्यार्थाद्व्यङ्ग्यार्थस्योत्थानमित्यपि जीवसादृश्यम्'। उक्तद्विविधसादृश्येनैव धुरंधरो जीवौपम्यमाह । न च समस्तसादृश्य एवोपमाया नियमः ॥

"किंचिदादाय सारूप्यं लोकयात्रा प्रवर्तते"

इत्याह भगवान्वेदव्यासोऽग्निपुराणे उपमाप्रकरणे । यद्यपि वर्णाकृतिशीलरूपसर्वसाधर्म्ये पूर्णोपमोक्ता । तथाप्येतेषामेकस्य द्वयोर्वा सादृश्येऽप्युपमालंकारो भवत्येव । इदं च

सर्वत्र स्मर्तव्यम् ॥ वाचकलक्षकव्यञ्जकशब्दाः, वाच्यलक्ष्यव्यङ्ग्यार्थाश्चाग्रे सविस्तरं प्रतिपादयिष्यन्ते ॥

यथा मनुष्ये सरलतोदारतादयो गुणास्तथा काव्ये वक्ष्यमाणप्रसादादयो गुणाः ॥ मनुष्ये शरीरविषयाः पङ्गुतादय आत्मविषयाश्च कृपणतादयो दोषा इव काव्ये श्रुतिकटुत्वादयः शब्ददोषाः, अपुष्टार्थादयश्चार्थदोषाः । ते च काव्ये सर्वथा वर्जनीयाः । तदुक्तं भगवता व्यासेन—

" उद्वेगजनको दोषः सभ्यानां स च सप्तधा " इति ॥

मनुष्यस्य हारकङ्कणादिभूषणवत्काव्ये उपमादयोऽलंकाराः। हारकङ्कणादीनां मनुजशोभाकरत्वादलंकारत्वम् । अलं करोतीत्यलंकारः । तस्यैव भूषणमिति नामान्तरम् । "भूष अलंकारे" । करणे ल्युट् । लोकालंकारन्यायेनोपमादयोऽलंकाराः स्वीकृताः । अत्र प्रकरणवशात्काव्यस्य लाभः । काव्यधर्मस्यैव काव्यशोभाकरत्वाद्धर्मे रूढिः । तदेवोक्तं दण्डयाचार्येण—

" काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते " इति ॥

काव्यस्वरूपं प्रतिपादयन्भगवान् भरतो मृदुललितपदाढ्यत्वादीन्काव्यधर्मानाह । तत्र च शोभाकरत्वप्राधान्यं तु युक्तमेव । कविप्रतिभोत्थापितोऽलौकिकचमत्कारकारी रमणीयोऽर्थो युक्तिः । तदुक्तं चिन्तामणौ "युक्तिरपूर्वार्थप्राप्तौ" इति ॥ तथाहि रसिकशिरोमणेः कस्यचित्कवेरिदं वचनम्—

"युक्तिविसेसो कव्वो भासा जाहूणि ताहूणि" इति ॥

"भासा जाहूणि ताहूणि" इति कथनेनेदं विवक्षितं, भाषाया मृदुललितपदादिसहितत्वे गीर्वाणवाणीमयत्वेपि वा युक्तिरहितत्वे तु न काव्यत्वम् । भाषायास्तादृशत्वाभावे प्राकृतपैशाच्यादिवाणीमयत्वेपि वा युक्तिसहितत्वे काव्यत्वमिति । कवेर्महिमाप्यपूर्वयुक्त्युपादान एवेत्यत्र युक्तेरेवालंकारनामयोग्यता । शब्दे पुनरावृत्तिर्युक्तिः । अर्थे तु समीपे कृत्वा विहितं विशेषज्ञानमुपमादिर्युक्तिः । कविसृष्टालंकार एव युक्तिरिति निष्कर्षः ।

शोभाकराणां हारादीनामलंकारसंज्ञेति तैरलंकर्तुं योग्या नरा अलंकार्यशब्देन व्यपदिश्यन्ते । तद्वद्युक्तिरूपालंकारैरलंकर्तुं योग्यं काव्यमलंकार्यशब्दव्यपदेश्यम् ॥

न च वाच्यं, व्यङ्ग्यस्य जीवत्वे व्यङ्ग्यशून्यकाव्यस्य निर्जीवत्वान्मृतकप्रायतया सर्वथा त्यागयोग्यत्वापत्तिरिति । व्यङ्ग्यस्य जीवत्वं प्रतिपादयता विद्यानाथेन प्रतापरुद्रीयग्रन्थे शब्दार्थौ काव्यस्य मूर्तित्वेनाभिहितौ । सजीवशरीरं निर्जीवपाषाणादिप्रतिमा चेत्युभयमपि मूर्तिरित्यभिधीयते । अत्र मूर्तिरिति कथनादव्यङ्ग्यकाव्यस्यापि ग्रहणम् ॥ लोके पाषाणादिमयी चित्रमयी वा निर्जीवमूर्तिरपि रमणीयतया ग्राह्या भवति । तदुक्तमसमालंकारोदाहरणे—

"न तन्मुखस्य प्रतिमा चराचरे" इति ॥

असमालंकारस्य चाक्षेपालंकृतावन्तर्भावः ॥

अपि च व्यङ्गयं विनापि प्रायोऽलंकारादिमात्रेणापि काव्यस्य रमणीयत्वमुपलभ्यते । यथा--

सेनागजाः स्वकरपल्लवलेखनीभि--
र्गण्डस्थलान्मदमसिं मुहुराददानाः ॥
मन्ये नरेन्द्र! तव तोयधितीरताली--
पत्रोदरेषु विजयस्तुतिमालिखन्ति ॥ १ ॥

तालादिनहतले करिणो बध्यन्ते । गण्डकण्डूयनं शुण्डादण्डोत्क्षेपणं च करिणां स्वाभाविकी क्रीड़ा । तत्त्रे च शुण्डाग्रे मदसंबन्धः, तत्संबन्धाच्च तालपत्रे मदसंबन्धः स्वयंसिद्धः । तत्र कविना नृपस्योन्नतसेनागजनिष्ठरणाङ्गणसकलविजयवृत्तान्तनिरीक्षणतालपत्रलिखनप्राचीनप्रथारूपबलेन विजयस्तुतिलिखनस्योत्प्रेक्षणं विहितम् । अत्र रूपकोत्प्रेक्षालंकारमात्रेणैव काव्यस्य रमणीयत्वम् ॥

## अथ शब्दार्थाः ॥

शब्दस्त्रिधा । वाचको लक्षको व्यञ्जकश्च । क्रमेण वाच्यार्थलक्ष्यार्थव्यङ्ग्यार्थास्तदर्थाः । घटोत्पत्तौ मृच्चक्रकुलालादीनि कारणानि । कुम्भः कार्यम् । कुलालकृतचक्रभ्रमिर्व्यापारः । कारणं यत्क्रियाद्वारा कार्यमुत्पादयेत्स व्यापारः । तथा वाचकादयः शब्दाः कारणानि । उक्तार्थाः कार्याणि । उक्तशब्दैरुक्तार्थबोधेऽभिधालक्षणाव्यंजना चेतिव्यापाराः । व्यापार एव वृत्तिशक्तिपदवाच्यः ।शक्तिः सामर्थ्यम् । न्यायशास्त्रेऽभिधालक्षणेतिवृत्तिद्वयमेवोक्तम् । आलंकारिकास्तृतीयां व्यञ्जना-

वृत्तिं मन्यन्ते ॥ वाच्यलक्ष्यार्थाभ्यां व्यङ्ग्यार्थस्य पार्थक्यं प्रदर्शयन्सहृदयधुरंधरो ध्वनिकारः

"प्रतीयमानं पुनरन्यदेव
वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं
विभाति लावण्यमिवाङ्गनासु ॥"

इत्याह ॥

## अथ वाचकः ॥

साक्षात्संकेतितार्थस्य वाचको वाचको मतः ॥
अभिधाशक्तिबोध्योऽर्थोऽभिधेयार्थः प्रकीर्तितः ।१।

संकेतितार्थस्य साक्षादभिधायकः शब्दो वाचक इत्यर्थः ॥ नामकर्तुरिच्छया कृतो वाचकशब्दनिष्ठः "अस्मात्पदादयमर्थो बोद्धव्यः" इति संकेतो वाच्यार्थबोधे शक्तिरूपः । तदुक्तं न्यायशास्त्रे—

"अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः"
इति ॥

संसाररचनां विधाय तद्व्यवहारार्थं प्रायो वस्तुनामानि परमेश्वरेणैव विहितानि । कानिचिच्च पुनः प्राकृतमनुष्यैः कविभिश्च कृतानीत्युभयथा निर्देशः ॥ अभिधेयार्थो मुख्यार्थो

वाच्यार्थ इति नामान्तरम् । अभिधीयतेऽनयेत्यभिधा। अभिधाशक्तिबोध्योऽर्थोऽभिधेयार्थः । अभिधा मुख्येति पर्यायान्तरम् । अत्रेदं तात्पर्यम्, लक्षणाव्यञ्जने अन्यार्थं बोधयतः । इयं तु मुख्यं साक्षात्संकेतितमर्थं प्रतिपादयतीति मुख्येति । मुख्यया बोध्यत्वान्मुख्यार्थ इति । शब्देन साक्षादुक्तत्वाद्वाच्यार्थ इति ॥

यथा—

जयाभिलाषी नृपतिः संमुखे सजलं घटम् ।
निरीक्ष्य शकुनं श्रेष्ठं प्रतस्थेऽरिवसुंधराम् ॥

घटनामकर्तुरिच्छानुसारेण घटशब्दार्थः कम्बुग्रीवाद्याकृतिमज्जलपात्रवस्तु । अत्र घटशब्दस्य साक्षादुक्तार्थाभिधायकत्वाद्वाचकत्वम् । तत्र संकेतः शक्तिः । उक्तार्थश्च वाच्यार्थः । अस्मिन्पद्ये जलादिशब्दसमुदायः सर्वोपि वाचकः ॥

वाचकशब्दो जातिगुणक्रियाद्रव्यभेदाच्चतुर्विधः । तत्र पशुपक्षिमनुष्यादयः शब्दा जातिवाचकाः । श्वेतरक्तादयः शब्दा गुणवाचकाः ॥ न्यायशास्त्रे रूपरसादयश्चतुर्विंशतिर्गुणा उक्ताः । गमनभाषणपाचकादयः शब्दाः क्रियावाचकाः । ब्रह्मविष्णुमहेशादिसंज्ञाशब्दा द्रव्यवाचकाः ॥

## अथ लक्षकः ॥

---

**शब्दो लक्षणया शक्त्या लक्षकोऽर्थस्य लक्षकः।**
**लक्षणाशक्तिलक्ष्योऽर्थो लक्ष्यार्थ इति दृश्यताम् ॥१॥**

वाच्यार्थबाधोऽन्यार्थेन तत्संबन्धः प्रयोजनम् ॥
बाधितार्थस्य कथने सामग्रीयं नराधिप! ॥ २ ॥
शक्तिः सा लक्षणान्यार्थलक्षणान्मुनिभिर्मता ॥
अत्रास्ति मदिरान्यायो यशवन्तनरेश्वर! ॥ ३ ॥
सा च द्विधा जहत्स्वार्थाऽजहत्स्वार्थेतिभेदतः ॥
गणनारसिकैरन्ये भेदा उक्ताः प्रमादतः ॥ ४ ॥

वाच्यार्थस्यार्थाद्वाच्यार्थान्वयस्य बाधः, बाधितवाच्यार्थस्य चान्यार्थेन सह संबन्धः, बाधितवाच्यार्थकथनप्रयोजनं चेति सामग्रीरूपा शक्तिरन्यार्थस्य लक्षणाल्लक्षणेत्यर्थः। अत्र मदिरान्यायो वेदितव्यः। यथा द्राक्षाशर्कराद्यनेकौषधिसंयोगान्मदकरी मदिरा भवति। तथा वाच्यार्थबाधाद्यनेकवस्तुसंयोगादन्यार्थलक्षिका लक्षणा नाम शक्तिर्भवति ॥ लक्ष्यतेऽन्यथार्थोऽनयेति लक्षणा ॥ "लक्ष दर्शनाङ्कनयोः" अस्माद्दर्शनार्थात्करणे ल्युट्।

यथा—

विजानीहि महाराज! गङ्गायां सदनं मम ॥

इदं प्रत्युत्तरवचनम्॥ अत्र गङ्गाशब्दस्य वाच्यार्थो गङ्गाप्रवाह इति। तस्य गेहाधिकरणत्वासंभवाद्वाच्यार्थबाधः। अस्य वक्तुर्गृहं गङ्गातटवर्तीति तटे गङ्गाप्रवाहतुल्यशीतलतापावनतासिद्धि प्र-

योजनेन "गङ्गायां सदनं मम" इति बाधितवाच्यार्थप्रयोगो विहितः। "गङ्गातीरे गृहं मम" इति वाचकशब्दप्रयोगे गङ्गायास्तटस्य च संबन्धमात्रप्रतीतिः। "गङ्गायां सदनं मम" इति लक्षकशब्दप्रयोगे तु गङ्गायास्तटस्य चाभेदप्रतीत्यवगमात्प्रवाहगतशीतलपावनत्वादयो धर्मास्तटे प्रतीयेरन्निति प्रयोजनम्। तटस्य च प्रवाहेण सह सामीप्यसंबन्धः। एवं चात्र गङ्गाप्रवाहरूपवाच्यार्थबाधः, तटरूपान्यार्थस्य प्रवाहेण सह सामीप्यसंबन्धः, उक्तप्रयोजनं चेति सामग्रीरूपशक्तिस्तटरूपमन्यार्थं लक्षयति। "गङ्गायां सदनं मम" इत्यत्र गङ्गाशब्दो लक्षकः। उक्तबाधसंबन्धप्रयोजनरूपसामग्री शक्तिः। उक्तशक्त्या लक्षितो तटरूपोऽर्थो लक्ष्यार्थः।

लक्षणा द्विधा। जहत्स्वार्थाऽजहत्स्वार्था च। लक्षकशब्दस्य स्वार्थपरित्यागे जहत्स्वार्था। एषैव लक्षणलक्षणेत्युच्यते। यथा "गङ्गायां सदनं मम" इत्यत्र गङ्गाशब्दस्य प्रवाहरूपसाक्षादर्थस्य परित्यागः। अत्र गङ्गाशब्दार्थस्तटम्। लक्षकशब्दस्य स्वार्थापरित्यागेऽजहत्स्वार्था। एषैवोपादानलक्षणेत्युच्यते॥

यथा—

कुन्तेषु मरुभूपस्य प्रविशत्सु पुरे रिपोः।
पलाय्य रिपवो याता न पुनः पुरमागताः॥

अत्र कुन्तप्रवेशः साक्षादर्थः। प्रवेशक्रियाकर्तृत्वस्य

स्वातन्त्र्येण कुन्तेष्वचेतनत्वादन्वयासंभवेन वाच्यार्थस्यान्वयबाधाद्वाच्यार्थबाधः, उक्तवाच्यार्थस्य कुन्तधररूपान्यार्थेन सह धार्यधारकभावः संबन्धः, उक्तबाधितवाच्यार्थप्रयोगप्रयोजनं च कुन्तानां तादृशप्रकाशो यच्चाक्चक्यबलाद्द्रष्टॄणां कुन्तधरा नेत्रगोचरा न भवन्तीत्युक्तसामग्र्या कुन्तशब्देन कुन्तधरा लक्ष्यन्ते । इयं शब्दस्य साक्षादर्थापरित्यागादजहत्स्वार्था लक्षणा। काव्यप्रकाशस्य बालबोधिनीटीकायां दारुणताप्रयोजनकथनं तु प्रमादमूलम् । तादृशचमत्कारित्वाभावात् ॥

तात्पर्यबाधे धुरंधरो लक्षणायाः समीपवर्तितयोपलक्षणमाह । अर्वाचीनाश्चेदमुदाजह्रुः ।

"काकेभ्यो दधि रक्ष्यताम्"

न ह्यत्र पदार्थानां परस्परमन्वयबाधः । अत्र समस्तदधिघातकेभ्यो दधिरक्षणे वक्तुस्तात्पर्यम् । न तु काका मा भक्षयेयुः, मार्जारादयश्च भक्षयेयुरिति । यथाश्रुतवाक्ये तु वक्तुस्तात्पर्यस्य बाध इति काकशब्देन मार्जाराद्यन्यार्थस्य लक्षणम् । अत्र वाच्यार्थस्य काकस्य त्यागं विना मार्जाराद्यन्यार्थस्य लक्षणादजहत्स्वार्थत्वम् । काकरूपबाधितवाच्यार्थस्य मार्जाराद्यन्यार्थेन सह दधिघातकतारूपः साधर्म्यसंबन्धः। प्रयोजनं तु लाघवम् । मार्जाराद्यखिलदधिघातकनामनिर्देशे तु गौरवापातः । लाघवं च सर्वशास्त्रसंमतम् । उक्तं हि व्याकरणशास्त्रे "अर्द्धमात्रालाघवेन वैयाकरणाः पुत्रोत्सवं मन्यन्ते" इति ॥

अर्वाचामुक्तोदाहरणं लौकिकम् । काव्यविषयमुदाहरणमस्माभिः प्रदर्श्यते ॥

यथा—

श्यामासि दक्षा मधुरा गुणाढ्यां
मनोहरा भावयुता न चेत्त्वम् ।
मानं त्यजेश्चापगते प्रियस्य
स्नेहे तु यास्यत्यखिलो मदस्ते ॥ १ ॥

माननमोचनोपायं कुर्वन्त्याः सख्या मुग्धां मानिनीं प्रति शिक्षणमिदम् । मानं न त्यजसि चेत्प्रियप्रेमन्यूनतापत्त्या. दुर्दशापन्ना भविष्यसीति । अत्र न हि मानमोचनविषयनायकाज्ञोल्लङ्घनाभाव एव सख्यास्तात्पर्यमपि तु सीधुपानकामकलादियावच्छृङ्गाररसोपयोगिकार्येषु नायकाज्ञोल्लङ्घनं न विधेयमित्येव । अतोऽत्र "न चेत्त्वं मानं त्यजेः" इत्येतावन्मात्रेऽर्थे सख्यास्तात्पर्यस्य बाधः । उक्तबाधेन सह कामकलाद्यन्यार्थस्य सादृश्यसंबन्धः । तादृशबाधितवाक्यकथनप्रयोजनं च प्रकरणम् । अत्र मानप्रकरणत्वान्मानविषयैव शिक्षा विहिता । उक्तसामग्रीरूपलक्षणाशक्त्या कामकलाद्यन्यार्थस्य लक्षणम् ॥ लक्षणायाः समीपे उपलक्षणम् । अत्रायं भावः । इदं लक्षणा न भवति । किंतु लक्षणासदृशम् । लक्षणानुकारीत्यर्थः । लक्षणोपलक्षणयोस्तारतम्यं तु पुराणोपपुराणन्यायेन ज्ञेयम्। मम तु मतम्, धुरंधरस्योपलक्षणमिति नामकरणं तु लक्षणासामर्थ्यां मुख्यतया वाच्यार्थस्य बाधः । इह त्वन्वयबाधसदृशो न सर्वथा बाधः । यद्वाच्यार्थोऽनुपपन्न एव स्यात् । कुतः, "काकेभ्यो दधि रक्ष्यताम् ।" इत्यत्र ग्रीष्मर्तौ मन्थनार्थमुपासि दधि शीतली क्रियते । स एव च विनिद्रकाकसमुदायस्य वनान्नगरप्रवेशसमय इति प्रकर-

णवशात्काकमात्रादपि दधिरक्षणे वक्तुस्तात्पर्यस्य संभवात् । "श्यामासि दच्च–" इत्यत्रापि मानप्रकरणान्मानमोचनाशिक्षामात्रेपि सख्यास्तात्पर्यस्य संभवात् । उक्तोपलक्षणं च साहित्यशास्त्रेऽत्यावश्यकमिति तस्याङ्गीकारस्यौचित्यम् । कविप्रतिभाया नित्यनवीनतया नवनवानन्तयुक्तिसद्भावात् । तथाहि ध्वनिकारः—

"वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः ।
निबद्धापि क्षयं नैति प्रकृतिर्जगतामिव ॥" इति ॥

साहित्यशास्त्रे गुणत्रयनवरसैकचत्वारिंशद्भावैकाशीत्यलंकारा एव भणिताः । उपलक्षणानङ्गीकारे भूतभविष्यद्वर्तमानानन्तयुक्तीनां कतिपयसंख्याकालंकारादिषु समावेशः कथं स्यात् ।

अर्वाचीनाः केनचित्प्रयोजनेन बाधितवाक्यप्रयोगे प्रयोजनवतीति, प्रयोजनं विना च बाधितवाक्यप्रयोगे रूढेति लक्षणायाः प्रकारद्वयमाहुः । तदुक्तं काव्यप्रकाशगतकारिकावल्याम्—

"मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ॥" इति ॥

प्रयोजनवत्युदाहरणानि तु पूर्वोक्तानि । काव्यप्रकाशे रूढायाः "कर्मणि कुशलः" इत्युदाहरणम् । "प्रवीणे निपुणाभिज्ञौ कृती कुशल इत्यपि ॥" इत्यमरः ॥ अत्र कुशं लातीतिव्युत्पत्त्या निपुणे कुशादानयोग्यताया अभावाद्वाच्यार्थस्य बाधः । इतरतृणेषु कुशस्य विविच्य ग्रहणमिव कार्येपूत्तमकार्यस्यापि निपुणेन विविच्य ग्रहणाद्विवेचकतारूपः संबन्धः ।

प्रयोगे वेगातिशयः प्रयोजनम् । उक्ताश्वस्य वेगातिशयादेव यवा न लक्ष्यन्ते। केवलं श्वेतरेखाया एव नयनगोचरत्वात् ॥ अपि च लक्षणाया वीजमेव प्रयोजनमिति लक्षणायां प्रयोजनस्य न वैलक्षण्यापादकत्वम् । ततश्च प्रयोजनवती, अप्रयोजनवतीति लक्षणाप्रकारकथनं सुतरां वक्तुमशक्यम् ॥

तात्पर्यवाधे वाधितवाच्यार्थस्यान्यार्थेन सह संबन्धस्य, वाधितवाच्यार्थप्रयोगे प्रयोजनस्य च तादृशत्वेपि केवलमन्वयबाधसदृशबाधाभावाद्धुरंधर उपलक्षणमित्याह । वाधितवाच्यार्थप्रयोगश्च प्रयोजनमूल एव भवतीति प्रयोजनरहितवाधितवाच्यार्थप्रयोगे रूढेति लक्षणाप्रकारकथनं तु धुरंधरमतविरुद्धत्वादर्वाचीनानां महाप्रमादः ॥

किं चार्वाचीना विषयिणो विषयस्य च द्वयोरुक्तौ सारोपेति, विषयिणा विषयस्य निगरणे तु साध्यवसानेति प्रकारद्वयमाहुः । प्रकाशकारेणेदमुदाहृतम् " आयुर्घृतम् " इति ॥ घृतमायुषः कारणं न त्वायुरिति वाच्यार्थस्यात्र वाधः । घृतायुषोः 'कार्यकारणभावसम्बन्धादिदमवगम्यते घृतभक्षणादायुर्वर्धते इति । अत्र विषयिण आयुषो विषयस्य च घृतस्योभयोरपि कथनात्सारोपात्वम् । "आयुरेवेदम्" इत्यत्र विषयस्य निगरणं कृत्वा केवलं विषयिण आयुषः कथनात्साध्यवसानात्वम् । मम तु मतम्, वाचकलुप्तोपमाप्रकारवदुक्तप्रकारयोरपि चमत्कृतिजनकत्वाभावादनौचित्यमेव ॥

अपि चार्वाचीना गुणसंबन्धे गौणी, तदितरसामीप्य-कार्यकारण-धार्यधारकादिसंबन्धमात्रे च शुद्धेति भेदद्वयमाहुः । गौणीलक्षणाया इदमुदाहरणम् ।

"यशवन्तमहाराजो विद्यते कल्पपादपः ॥"

अत्राभेदस्यासंभवाद्वाच्यार्थस्य बाधः। गुणैकतारूपः साधर्म्यसंबन्धः। प्रयोजनं च राजराजेश्वरे मनोवाञ्छितदानयोग्यताप्रतिपादनम्। मम तु मतं, एतादृशप्रकाराङ्गीकारोऽर्वाचीनानां प्रमादः। संबन्धभेदाद्भेदाङ्गीकारे संबन्धं संबन्धं प्रति भेदाङ्गीकारापत्तेः। अन्यसमस्तसंबन्धेषु शुद्धा, गुणसंबन्धे च गौणीतिभेदयुगलस्यैवाङ्गीकारे युक्तिविरहात्। युक्तिशून्यवाक्यं चानङ्गीकारयोग्यत्वाद्वर्जनीयम्। उक्तं हि नीतिशास्त्रे—

"युक्तियुक्तमुपादेयं वचनं बालकादपि ॥
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना ॥१॥"

इति ॥

अर्वाचीना लक्षणायाः प्रयोजनं व्यङ्ग्यं मन्यन्ते। तस्य खण्डनं त्वग्रे व्यङ्ग्यप्रकरणे करिष्यामः ॥

## अथ व्यञ्जकः ॥

यस्तु व्यञ्जनयाऽन्यार्थप्रतीत्याधायको नृप! ॥
शब्दोऽसौ व्यञ्जको ज्ञेयो धुरंधरमतानुगैः ॥१॥

व्यञ्जनाशक्त्याऽन्यार्थप्रतीत्याधायकः शब्दो व्यञ्जक इत्यर्थः।

व्यञ्जनाशक्तिगम्योऽर्थो व्यङ्ग्यार्थ इति बुध्यताम्
निधिसिद्धाञ्जनन्यायाद्यान्यार्थस्यप्रतीतिकृत् ॥१॥
वक्त्रादिना महाराज! शक्तिः सा व्यञ्जना मता ॥

निधिसिद्धाञ्जनन्यायेन वक्तृबोद्धव्यादिनाञ्जनविशेषेण याऽन्यार्थप्रतीत्याधायिका शक्तिः सा व्यञ्जनेत्यर्थः । अञ्जनाविशेषो व्यञ्जनम् । स्त्रीत्वे टाप् । यस्य चक्षुष्यञ्जनाद्भूमिगतद्रव्यदर्शनं तन्निध्यञ्जनम् । यस्य चक्षुष्यञ्जनाद्दूरदेशस्थवस्तुवृत्तान्तदर्शनं तत्सिद्धाञ्जनम् । उक्ताञ्जनन्यायेन बुद्धिरूपचक्षुषि वक्त्रादिरूपाञ्जनस्य संबन्धादन्यार्थप्रतीतिर्भवतीतिभावः ॥ वक्त्रादयश्च काव्यप्रकाशे कथिताः ।

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥" इति ॥

. वक्ता कथनकर्ता, बोद्धव्यः श्रोता, काकुः स्वरविकारः, वाक्यं पदसमुदायः, वाच्यः शब्दस्यार्थः, अन्यसंनिधिर्वक्तृश्रोत्रतिरिक्तस्य सांनिध्यम् । प्रस्तावः प्रकरणम्, देशः स्थानम्, कालः समयः, इत्यादीनां विलक्षणतया प्रतिभावतामन्यार्थबुद्धिहेतुर्योऽर्थस्य व्यापारः सा व्यञ्जनेत्यर्थः ॥

अत्रादिपदेन तादृशा अन्येऽपि बोद्धव्याः ॥ अन्यार्थस्य *सूक्ष्मत्वप्रतिपादनाय 'प्रतिभावतामिति । ततश्च वक्त्राद्य*ञ्जनविशेषेणापि प्रतिभावतामेवान्यार्थप्रतीतिः । साधारणकविगोचरत्वाभावात् ॥ लक्षणायां वाच्यार्थस्य बाधाद्वाच्यार्थे विश्रान्तिर्न भवतीत्यन्यार्थे विश्रामः । व्यञ्जनायां तु वाच्यार्थे विश्रान्तौ सत्यां वक्त्रादिवैलक्षण्येन प्रतिभावतामन्यार्थप्रतीतिः ॥ क्रमेण वक्त्राद्युदाहरणानि ॥

वक्तृवैशिष्ट्यात् यथा—

"अस्ताचलान्तरे पश्य तिरोधत्ते दिवाकरः ॥
इन्दोररुणिमा चासावारोहत्युदयाचलम् ॥"

अत्र दूती वक्री चेदभिसरणं व्यङ्ग्यम् । गुरुर्वक्ता चेद्देवपूजनादिप्रेरणं व्यङ्ग्यम् ।

बोद्धव्यवैशिष्ट्यात् यथा—

"अस्मिन्नवसरे स्वीयोऽभिलाषः किं न पूर्यते ॥
कालो न पुनरागन्ता देहश्च क्षणभङ्गुरः ॥"

अत्र श्रोता कामुकश्चेद्भोगप्रवृत्तिर्व्यङ्ग्या । श्रोता साधुश्चेन्मोक्षसाधनप्रवृत्तिर्व्यङ्ग्या ॥

काकुवैशिष्ट्यात् यथा—

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति हा हा विधिवलम् ॥

भीमं बोधयितुं युधिष्ठिरप्रेषितसहदेवं प्रति भीमस्येदं वचनम् । युद्धे त्वरमाणं भीमसेनं प्रति युधिष्ठिरः खिन्न इति जानन्तं सहदेवं प्रत्यस्य वचनस्य सरलत्वे निरर्थकत्वात्काकुस्वरकल्पनम् । तेन मयि खेदो न युक्तः, कुरुषु खेदो युक्त इति व्यज्यते ॥

वाक्यवैशिष्ट्यात् यथा—

"तइया मह गण्डत्थलमिलिअं दिट्ठिं ण णेसि अण्णत्तो
एहिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥"(*)

अत्र तदेदानीमिति वाक्यवैशिष्ट्येन मत्कपोलप्रतिबिम्बितां मत्सखीं पश्यतस्तव दृष्टिर्न निवृत्ता। इदानीं तस्यां निर्गतायां तु न तादृशी दृष्टिरहो ते प्रच्छन्नकामुकत्वमिति व्यङ्ग्यम्।

वाच्यवैशिष्ट्यात् यथा—

"कदम्बसुरभिर्वातो झिल्लीझङ्कारजृम्भणम् ॥
अस्त्यद्य तडिदुल्लासो गर्जनं च पयोमुचाम्॥"

अत्र वाच्यार्थानां सुरतानुगुण्यरूपवैशिष्ट्यात्सुरतेच्छा व्यङ्ग्या॥

अन्यसंनिधिवैशिष्ट्यात् यथा—

"नियोजयति मां श्वश्रूरजस्रं गृहकर्मणि ॥
सखि! सायं भवेत्किंचिदवकाशो हरार्चने ॥"

अत्र वक्त्री नायिका। श्रोत्री च सखी। तदितरस्योपपतेः सांनिध्ये चेदत्र संकेतसमयसूचनं व्यङ्ग्यम्॥

प्रस्ताववैशिष्ट्यात् यथा—

"विलम्बो न हि कर्तव्यः कर्तव्येषु कदाचन ॥

(*) तदा मम गण्डस्थलमिलितां दृष्टिं नानैषीरन्यत्र। इदानीं सेवाहं तौ च कपोलौ न सा दृष्टिः ॥

विलम्बे तु महाराज! कालः पिबति तद्रसम् ॥"

अत्र कवीनां प्रसङ्गश्चेद्दानं, रिपुप्रसङ्गश्चेद्युद्धं, सुहृत्प्रसङ्गश्चेन्मेलनं व्यङ्ग्यम् ॥

देशवैशिष्ट्यात् यथा—

"सीतया सह धर्मात्मा लक्ष्मणानुचरो वशी ॥
न्यवसच्चित्रकूटेऽस्मिन् रामः कमललोचनः ॥"

अत्रोक्तदेशस्य वैलक्षण्यान्निवासदानस्नानाद्याचरणमत्र कर्तव्यमिति व्यङ्ग्यम् ॥

कालवैशिष्ट्यात् यथा—

"शुष्कान्पल्लवयंस्तप्ताञ्छीतयन्पूरयंस्तथा ॥
रिक्तान्प्रावृडियं भाति राजेश्वरतया मम ॥"

"उव णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रायइ बलाआ
णिम्मलमरगयभायणपरिट्ठिआ संखसुत्तिव्व ॥"(*)

इह निश्चलशब्दस्य वाच्यार्थः स्थानान्तरप्रापकशरीरक्रियाया अभावः। निष्पन्दशब्दस्य वाच्यार्थः स्थानान्तराप्रापकावयवक्रियाया अभावः॥ अत्र कविरेव वक्ता चेद्वाच्यार्थमात्र एव विश्रान्तेः केवलबलाकावर्णनम्। उपमास्वभावोक्त्यलंकारौ। दम्पत्योरेकतरः सखी वा वक्री चेदुक्तवाच्यार्थादुत्तरं बलाकानिर्भयतारूपोऽन्यार्थः प्रतीयते। तन्निर्भयताप्रतीतेश्चोक्तस्थलस्य निर्जनत्वं प्रतीयते। निर्जनताप्रतीतेश्च सुरतप्रार्थनाप्रतीतिरिति व्यङ्ग्यार्थानां परंपरा॥ किंच संकेतस्थले एकतरस्य प्रथममनागमनप्रस्तावश्चैतस्यानिर्जनताप्रतीत्यनन्तरं "त्वमत्र नागतोऽभूः" इत्युपालम्भः प्रतीयते॥

लक्षणायामन्यार्थकथनाभिप्रायस्तु बाधितवाच्यार्थवतः शब्दादन्योऽर्थ इति॥ व्यञ्जनायामन्यार्थकथनाभिप्रायश्चोच्चार्यमाणसमस्तशब्देभ्यः सर्वथाऽन्योऽर्थ इति॥ लक्षणायां त्वन्यार्थस्य लक्षणमर्थाद्दर्शनमिति लक्ष्यार्थस्य स्थूलरूपतया दर्शनविषयत्वम्। तद्दर्शकस्य लक्षकशब्दस्य विद्यमानत्वात्॥ व्यञ्जनायामन्यार्थप्रतीत्याधायकत्वकथनाभिप्रायश्च तत्र न कश्चिद्व्यङ्ग्यार्थदर्शकः शब्दः। किंतु वक्त्रादिवैलक्षण्येन सूक्ष्मरूपतया स्थितस्यान्यार्थस्य प्रतीतिरिति।

---

* "पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका। निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तीव॥"

वाच्यार्थस्य वाचकशब्देन कथनम्। लक्ष्यार्थस्य च लक्षकशब्देन दर्शनम्। व्यङ्ग्यार्थस्य तु वाचकशब्दोक्तेन वाच्यार्थेन प्रतीत्यापादनमित्येतेषां परंपरया वैलक्षण्यम् ॥ व्यङ्ग्यविषये ध्वनिकारः ॥

"यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तव्यवस्तुनः ॥१॥
स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥२॥
तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ॥
बुद्धौ तत्वार्थदर्शिन्यां झटित्येवावभासते॥३॥"

इत्याह ॥ "झटित्येवावभासते" इति कथनस्येदं तात्पर्यम्, वाच्यार्थो व्यङ्ग्यार्थात्पृथङ् न भासते इति ॥ "उअ णिच्चलणिप्पन्दा" इति पद्यस्यार्थे क्रियमाणे निश्चलपदस्य स्थानान्तरप्रापकशरीरक्रियाया अभाव इति, निष्पन्दपदस्य च स्थानान्तराप्रापकावयवक्रियाया अभाव इति भिन्नाभिन्नपदस्यार्थः पृथङ् न भासते। तथा व्यङ्ग्यार्थाभिलाषिकवेर्निर्भयतारूपव्यङ्ग्यार्थाद्बलाकायास्तादृशस्थितिरूपो वाच्यार्थःपृथङ् न भासते। तथैव निर्जनताप्रतीत्यादिव्यङ्ग्यपरंपरायामुत्तरव्यङ्ग्यात्पूर्वव्यङ्ग्यं पृथङ् न भासते इति। अत्र सहृदयहृदयमेव साक्षि।

भगवता वेदव्यासेन व्यङ्ग्यार्थ आक्षेपार्थो ध्वन्यर्थ इति चोक्तः ॥

" श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति सचेतनः ॥
स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः ॥"

इत्यग्निपुराणे ॥ आ समन्तात्क्षिप्यते प्रेर्यत इत्याक्षेपः ॥ " उच णिच्चलणिप्पन्दा" इत्यत्र निर्भयताद्यर्थस्य वाचकशब्दविषयत्वाभावान्न श्रुतिलभ्यत्वम् । किंतु वक्त्रादेः परितः प्रेरणादुक्तार्थस्य प्रकाशमानतया भासनम् ॥ उक्तार्थस्याक्षेपसंज्ञाकथनात्तत्प्रेरिकायाः शक्तेराक्षेपेति संज्ञा स्वर्थसिद्धा ॥ वर्णविवेकं विनाऽर्थबोधकः शब्दो ध्वन्यात्मक इत्युक्तः । उक्तोदाहरणे वक्त्रादिवैलक्षण्येन निर्भयताद्यर्थो वर्णविवेकं विना प्रतीयत इति ध्वन्यर्थ इत्युच्यते ॥ उक्तार्थद्योतिकां शक्तिं ध्वनिरिति तु भगवान्वेदव्यासः " ध्वनिना व्यज्यते यतः " इति कण्ठरवेण प्रोवाच ॥

काव्यप्रकाशगतकारिकायां परंपरागतं कस्यचिद्धुरंधरस्येदं वचनखण्डम् ।

"अनुस्वानाभसंलक्ष्यक्रमो व्यङ्ग्यः" इति ॥

उक्तधुरंधरस्य व्यङ्ग्यार्थेऽनुरणनन्यायाङ्गीकारः समीचीनः । झल्लर्या घटीयन्त्रस्य वा दण्डप्रहारे प्रथमं टङ्कारः । ततश्च झङ्कारः । तत्र प्रथमरवो रणनम् । पश्चाद्रवोऽनुरणनम् । स्वानानुस्वानेति तयोः पर्यायान्तरम् । उक्तवचनखण्डा-

र्थश्च, अनुस्वानसदृशशोभायमानकमस्य लक्ष्यत्वं व्यङ्ग्यत्वमिति ॥ वाच्यार्थात्समनन्तरमेव व्यङ्ग्यार्थस्य प्रतीतिः, वाच्यार्थव्यङ्ग्यार्थयोः स्थूलसूक्ष्मत्वं चास्त्येव। मम मतेऽत्रायमप्यनुरणनन्यायो यद्रणनानुरणनयोर्व्यवधानाभाव इव वाच्यार्थव्यङ्ग्यार्थयोरपि व्यवधानं नास्तीति । प्रतिभावतां वाच्यार्थेन संसृष्टस्यैव व्यङ्ग्यार्थस्य प्रतीतेः । किं च रणनादनुरणनस्येव वाच्यार्थाद्व्यङ्ग्यार्थस्य निःसरणमिति च ॥ उक्तेर्थे प्रतीतिः प्रेरणमञ्जनन्यायो ध्वनिन्यायोऽनुरणनन्यायश्चेति सर्वं घटते ॥

अपि च कम्बुग्रीवाद्याकृतिमतां वाच्यार्थानां घटादिशब्दैः, तटादिलक्ष्यार्थानां च गङ्गादिवाधितशब्दैर्बोधाद्वाच्यार्थलक्ष्यार्थयोरुत्थानं शब्दमूलम् । व्यङ्ग्यार्थस्योत्थानं तु न शब्दमूलम् । किंत्वर्थमूलम् ॥ तदुक्तं सहृदयधुरंधरध्वनिकारेण—

"आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः ॥
तदुपायतया तद्वदर्थे वाच्ये तदादृतः ॥" इति ॥

अस्यायमाशयः । यथाऽऽलोकाभिलाषी जनस्तैलाधारपात्रादिषु यत्नमकुर्वन्दीपशिखायां यत्नवान् भवति । तथा व्यङ्ग्यार्थाभिलाषी कविः शब्दे यत्नमकुर्वन्नर्थे एव यत्नवान् भवतीति॥अत्र यत्नस्तु किमत्र वक्रादिवैलक्षण्येन कस्यचिद्व्यङ्ग्यार्थस्योपलब्धिः? इति प्रतिवाच्यार्थं विचारः ॥

ननु वाच्यार्थाद्व्यङ्ग्यार्थस्योत्थानं चेद्व्यञ्जकः शब्द इति धुरंधरकथनं कथमिति चेच्छृणु । वाच्यार्थात्परो व्यङ्ग्यार्थः ।

चमत्कारपर्यवसानं च तत्रैवेति व्यङ्ग्यार्थस्य प्राधान्यम् ॥ तत एव च वाचकशब्दो व्यञ्जकसंज्ञां लभते । शब्दो व्यङ्ग्यार्थस्य मूलकारणमिति शब्दभेदप्रतिपादने व्यञ्जकशब्दोक्तेरावश्यकत्वम् ॥ यथा झल्लरीरवे झङ्कारस्य कारणं टङ्कारः, तत्कारणं च दण्डस्पर्शः, स च झङ्कारस्य मूलकारणम् । तथा व्यङ्ग्यार्थस्य कारणं वाच्यार्थः, तत्कारणं च शब्दः, स च व्यङ्ग्यार्थस्य परंपरया मूलकारणम् ॥

न च वाच्यं, व्यङ्ग्यस्योत्थानं तु सर्वेभ्योऽप्यर्थेभ्यो भवति। तदुक्तं काव्यप्रकाशगतकारिकावल्याम्—

"सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते" इति ॥

सर्वेषां वाच्यलक्ष्यव्यङ्ग्यार्थानाम् ॥ यथा "उव णिच्चलणिप्पन्दा" इत्यत्र बलाकाया निर्भयतारूपव्यङ्ग्यार्थस्योत्थानं तु वाच्यार्थमूलम् । व्यङ्ग्यपरंपरायां तु व्यङ्ग्यार्थाद्व्यङ्ग्यार्थस्योत्थानम् । पुनश्च ध्वनिकारेण "व्यङ्ग्यविषये वाच्यार्थे यत्नो विधेयः" इत्युक्तं तदव्याप्तमिति । मम मते व्यङ्ग्यार्थबोधादुत्तरं तूक्तव्यङ्ग्यार्थस्यापि वाच्यार्थप्रायत्वात् । यथा "उव णिच्चलणिप्पन्दा" इत्यत्रोपमाघटितवाच्यार्थाद्व्यञ्जनावृत्तिसाधनद्वारा बलाकाया निर्भयतारूपव्यङ्ग्यार्थस्य सिद्धिः । तदनन्तरं च तत्स्थानस्य निर्जनतारूपव्यङ्ग्यार्थोत्थानसमये तूक्तव्यङ्ग्यार्थस्यापि वाच्यार्थप्रायत्वम् ॥ एवमेव क्वचिल्लक्ष्यार्थात्प्रधानव्यङ्ग्यस्योत्थानं तत्रापि ज्ञेयम् ।

अर्थस्त्रिविधः । तत्र वाच्यार्थः प्रथमः । वक्तुं योग्यो वाच्यः ।

अत्र शब्दे रूढिः। शब्देन वक्तुं योग्योऽर्थो वाच्यार्थ इत्यर्थः॥ अपरो लक्ष्यार्थः। बाधादिना लक्षणीयोऽर्थो लक्ष्यार्थ इत्यर्थः॥ तृतीयोऽवाच्यार्थः। शब्देन वक्तुं योग्यो न भवत्यसाववाच्यार्थः। शब्दं विना ज्ञायमानोऽर्थोऽवाच्यार्थ इति भावः। "उव णिच्चलणिप्पन्दा-" इत्यत्र निर्भयताद्यर्थस्य वाचको न कश्चिच्छब्दः॥

धुरंधरेण विहितान्यवाच्यार्थस्य सर्वाण्यपि नामान्तराण्युक्ताभिप्रायपरायणानि। प्रतीयते इति प्रतीयमानः। यथा शरीरं विना निरञ्जननिराकारपरब्रह्म प्रतीयते, तथा शब्दं विना प्रतीतिविषयोऽर्थः प्रतीयमानार्थ इति भावः। सूचनालभ्योऽर्थः सूच्यार्थः। न चास्य कश्चिद्वाचकः शब्दः। वक्त्रादिवैलक्षण्येन ज्ञायमान इति भावः। अवाच्यार्थस्यैव व्यङ्ग्यार्थाक्षेपार्थध्वन्यर्थेति नामान्तराणि। एतेषां शब्दं विना प्रतीतिगोचरत्वं तु तत्तद्व्यञ्जनादिशक्तिनिरूपणे उक्तम्॥ भगवान्वेदव्यासो व्यङ्ग्यार्थमेव ध्वन्यर्थ इत्याह॥ काव्यप्रकाशगतकारिकायाम्—

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः
कथितः॥"

इत्युक्तम्। तच्च प्रमादमूलम्। व्यङ्ग्यविषये प्रधानस्यैव व्यङ्ग्यव्यपदेश्यत्वात्। व्यङ्ग्यादन्यद्व्यङ्ग्यप्रकाररूपेण प्रधानव्यङ्ग्यस्य ध्वनिरिति नाम वक्तुमशक्यम्। ध्वनिव्यङ्ग्ययोः पर्यायनामत्वात्॥ व्यङ्ग्योदाहरणानि चतुर्धा॥

वस्तुना वस्तु,वस्तुनाऽलंकारः, अलंकारेण वस्तु, अलंकारेणालंकारश्चेति ॥ अलंकारातिरिक्तोऽर्थो वस्तुपदवाच्यः ॥

क्रमेण यथा—

वाञ्छन्त्यरिकलत्राणि विना रात्रिं तिथिं नृप ! ॥
सितपक्षं विना मासान्वत्सरानृतुभिर्विना ॥ १ ॥

अत्र वाच्यार्थरूपवस्तुना राजराजेश्वरयशवन्तसिंहस्य रिपुरमणीनां विरहरूपं वस्तु व्यङ्ग्यम् ॥

यशवन्तयशो वीक्ष्य वस्तुमिच्छति शंकरः ॥
शयितुं कमलाकान्तः स्नातुं निःस्पृहतापसाः ॥ २ ॥

अत्र वाच्यार्थरूपवस्तुना भ्रान्त्यलंकारो व्यङ्ग्यः ॥ राजराजेश्वरयशसि हरिहरतापसानां कैलासक्षीराब्धिसुरसरितां भ्रमः ॥

"उव णिच्चलणिप्पन्दा" इति ॥

अत्रोपमालंकारेण वलाकाया निर्भयतारूपं वस्तु व्यङ्ग्यम् ॥

धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः ॥
एकोऽपि त्रिकलिङ्गभूपतिलक! त्वत्कीर्तिराशिर्ययौ
नानामण्डनतां पुरंदरपुरीवामभ्रुवां विग्रहे ॥१ ॥

अत्र रूपकालंकारेण जगतीगतत्रिकलिङ्गेश्वरयशसः सुरस्त्रीणां मण्डनविधानं विचित्रालंकारो व्यङ्ग्यः ॥

अनेकार्थवाचिशब्दस्तस्य सकलार्थानां वाचको भवति। सकलार्थानां साक्षादभिधायकत्वात् । तत्सकलार्थाश्चोक्तवाचकशब्दस्य वाच्यार्थभूताः । उक्तशब्दस्य सकलार्थेषु नामकर्तृशिष्टैः संकेतितत्वात् ॥ अत्र तत्सकलार्थबोधिका शक्तिरभिधा । तथा चार्थद्वयस्य प्रस्तुतत्वेऽप्रस्तुतत्वे वा एकस्य प्रस्तुतत्वेऽपरस्य चाप्रस्तुतत्वे वा तत्समस्तार्थानां बोधोऽभिधाशक्त्यैव भवतीति भावः ॥ यत्रार्थद्वयादधिकार्थविधिस्तत्रापि सैव व्यवस्था ॥

गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं तथार्थस्य ।
रसिकत्वेनाकुलिता वेश्यापतयश्च कवयश्च ॥ १ ॥

वैशिकनायकपक्षे, अपशब्दो निन्दितवचनम् । वृत्तं सदाचारः । अर्थो धनम् । कविपक्षे, अपशब्दोऽशुद्धः शब्दः । वृत्तं छन्दः । अर्थो वाच्यार्थादिः । अत्रार्थयुगलस्याभिधाशक्त्यावबोधः । अत्र श्लेषालंकारस्य चमत्कारः । अत्र वक्तुः कविः प्रस्तुतो वेश्यापतिरप्रस्तुतः ॥ तथैवोभयोः प्रस्तुतत्वेऽप्रस्तुतत्वे वा ज्ञेयम् ॥

यत्र तु संयोगादिभिरनेकार्थवाचिशब्दस्याऽभिधाशक्त्या एकस्मिन्नर्थे नियमनमर्थादत्रास्य शब्दस्यायमेवार्थ इति विश्रान्तिर्भवेत्तत्रान्यार्थस्य बोधः कया शक्त्या भवतीति दर्शयतो धुरंधरस्येदृशं परंपरागतवचनम् ॥

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ॥
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥"

इति काव्यप्रकाशगतकारिकावल्याम् ॥

अत्रानेकार्थवाची स एव शब्दोऽञ्जनविशेषपरत्वमापद्यत इति धुरंधर इयं शाब्दी व्यञ्जनेत्याह। इहाभिधायास्तु संयोगादिनैकस्मिन्नर्थे विश्रामो वाच्यार्थबाधादिलक्षणासामग्र्याश्चाभाव इत्यन्यार्थबोधनं व्यञ्जनाशक्त्यैव भवतीति धुरंधराशयः। परंतु शाब्दीयं व्यञ्जना। अन्यार्थप्रतीत्याधायकस्याञ्जनविशेषरूपचक्राद्यर्थस्याविद्यमानत्वात्। व्यङ्ग्यार्थस्योत्थानं वाच्यार्थादेवेति वास्तवव्यञ्जना त्वार्थ्येव। इह त्वनेकार्थवाचिशब्दस्यैवानेकार्थवाचितयाऽन्यार्थप्रतीत्याधायकत्वेऽञ्जनाविशेषरूपत्वम् ॥

संयोगादयश्च—

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता ॥
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ॥
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥"

इति काव्यप्रकाशगतकारिकावल्याम् ॥

"सशङ्खचक्रो हरिः" अत्र हरिशब्दस्येन्द्रादिनानार्थकस्य शङ्खचक्रसंयोगाद्विष्णौ वाचकत्वनियमनम्।

"अशङ्खचक्रो हरिः" अत्र शङ्खचक्रवियोगाद्धरिशब्दस्य विष्णौ वाचकत्वनियमनम्॥

"रामलक्ष्मणौ" अत्र परशुरामाद्यनेकार्थस्य रामशब्दस्य लक्ष्मणसाहचर्याद्दाशरथौ वाचकत्वनियमनम्॥ संयोगशब्दार्थः सम्यग्योग इति। यथा शङ्खचक्रादीनां विष्णुकरस्य च संयोगः। साहचर्यं च सह विहरणमात्रम्।

"सिंहनागौ" अत्र सर्पाद्यनेकार्थस्य नागशब्दस्य सिंहेन विरोधसंबन्धाद्गजे वाचकत्वनियमनम्॥

"स्थाणुं भज भवच्छिदे" स्थाणुशब्दार्थः शाखापत्रादिरहिततरुः शिव इति च। अत्र भवच्छेदप्रयोजनबलेन स्थाणुशब्दस्य महेश्वरे वाचकत्वनियमनम्॥

"सर्वं जानाति देवः" देवशब्दार्थो राजा देवता च। अत्र राजप्रकरणं चेद्देवशब्दस्य राज्ञि वाचकत्वनियमनम्॥ पूजाप्रकरणं चेद्देवतायाम्॥

"कुपितो मकरध्वजः" लिङ्गं संयोगातिरिक्तसंबन्धेन परपक्षव्यावृत्तो धर्मः। मकरध्वजशब्दार्थः कामः समुद्रश्च। कोपलिङ्गेन कामे वाचकत्वनियमनम्। समुद्रस्य जडत्वात्तस्मिन्वास्तवकोपस्यासंभवात्। कोपस्तु चेतनधर्मः।

"अमरा निर्जरा देवाः" अत्र राजादिनानार्थकस्य देवश-

ब्दस्यामरनिर्जरशब्दसामीप्यादिन्द्रादिदेवेषु वाचकत्वनियमनम् ॥

"मधुना मत्तः कोकिलः" अत्र मकरन्दादिनानार्थकस्य मधुशब्दस्य कोकिलमत्तकरणसामर्थ्याद्वसन्ते वाचकत्वनियमनम् ॥

"कान्ता ते संमुखी भवतु" संमुखशब्दार्थो मुखस्य संमुखीकरणं प्रसन्नता च। अत्राशीर्वादौचित्यात्संमुखशब्दस्य प्रसादे वाचकत्वनियमनम् ॥

"अत्र देवो विराजते" अत्र राजधानीरूपदेशश्चेद्देवशब्दस्य राज्ञि वाचकत्वनियमनम्। तीर्थादिदेशश्चेद्विष्णवादिदेवतायाम् ॥

"चित्रभानुर्विभाति" चित्रभानुशब्दार्थो रविरग्निश्च। अत्र दिवससमयश्चेत्सूर्ये वाचकत्वनियमनम्। रात्रिश्चेदग्नौ ॥

"मित्रं भाति" व्यक्तिः पुल्लिङ्गादिः। अत्र मित्रशब्दस्य क्लीबत्वेन सुहृदि वाचकत्वनियमनम् ॥ "मि[illegible] [illegible]ति" अत्र पुंस्त्वेन मित्रशब्दस्य रवौ वाचकत्वनियमन[illegible]

"इन्द्रशत्रुः" स्वर[illegible] उदात्तादि[illegible]
शत्रुर्यस्य" इत्यस्मिन्नर्थे वाच[illegible]
"इन्द्रस्य शत्रुः" इत्यस्मिन्[illegible]
शाब्दीव्यञ्जनाया इयमु[illegible]
चक्रे बहुमुखी भूपता[illegible]

प्रविष्टा नृत्यसंयुक्तान्कबन्धान्यत्र तत्र वै ॥१॥

अत्र वाहिनीकबन्धशब्दावनेकार्थौ । वाहिनी सेना नदी च । कबन्धः क्रियायुक्तमपमूर्द्धकलेवरं सलिलं च । अत्र राजवर्णनप्रकरणेन वाहिनीशब्दस्य सेनायां, कबन्धशब्दस्य चापमूर्द्धकलेवरेऽभिधाया नियमने सति वाहिनीकबन्धशब्दयोरनेकार्थतासामर्थ्यद्वारेण व्यञ्जनया नद्या अपां च प्रतीतिः। तथाहि बहुमुखी बहुधारावती नदीव बह्ववयवा राजराजेश्वरानीकिनी समुद्रवच्छत्रुसमूहे प्रविष्टा यत्र तत्र सलिलसदृशापमूर्द्धकलेवराण्यनर्तयत् । नदीधारा वेगेन सरोवरादौ प्रविशन्ती सलिलोच्छ्रायमापादयतीति प्रत्यक्षम् ॥

धुरंधराभिप्रायापरिज्ञानात्काव्यप्रकाशकारादयोऽर्वाचीना अस्मिन्विषये भ्रान्ताः शब्दशक्तिमूलार्थशक्तिमूलेति व्यञ्जनायाः प्रकारद्वयं मन्यन्ते। स च प्रमादः । श्रुतेरलभ्यमानोऽर्थो व्यङ्ग्य इत्युक्ते शब्देनोक्तस्य कथं वा व्यङ्ग्यत्वम् ॥ तात्पर्यबाधमूललक्षणाया ईषदूनतया धुरंधरस्तन्नोपलक्षणमित्याह । तद्वदस्या अत्यन्तं न्यूनत्वप्रदर्शनाय धुरंधरो व्यङ्ग्यविरुद्धामिमां शाब्दीं व्यञ्जनेत्युक्तवान्। न तु प्रकारदर्शनार्थम् । अत एवास्य विषयस्य गौणव्यङ्ग्यप्रकारापेक्षयापि तुच्छत्वं सिद्धम् । न च शाब्दी व्यञ्जना वास्तवव्यञ्जनेव चमत्कारावहा । वास्तवव्यञ्जनाया आर्थत्वेन वाच्यार्थनिष्ठसूक्ष्मान्यार्थबोधकत्वात् । अत्रानेकार्थवाचिशब्दो वाचक एव। अपरार्थोऽपि वाच्यार्थ एव । प्रथमार्थबोधोऽप्यभिधाजन्यः । अपरार्थे व्यञ्जनायाश्छायामात्रम् ।

तत्राप्यञ्जनविशेषरूपः स एव शब्दोस्तीति तत्र वक्रादिवदलौकिकाञ्जनविशेषरूपत्वाभावाल्लोकाञ्जनकज्जलसादृश्यम्। अत एवात्र व्यञ्जनाचमत्कृतेरप्राधान्यम्। श्लेषालंकारचमत्कारस्यैव प्राधान्यम्। न च क्षणविलम्बेनान्यार्थबोधे श्लेषचमत्कारहानिरुद्भवति ॥

काव्यप्रकाशेऽनेकार्थवाचिशब्दं विना शाब्दी व्यञ्जनाया इदमुदाहरणम्—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि! दूति! बान्धवजनस्याज्ञातपीडागमे!
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ १ ॥

अत्र वाच्यार्थो वापीस्नानम्। व्यङ्ग्यार्थश्च नायकेन सह दूत्या रमणम्। स च नायिकोक्ताधमपदेन प्रतीयमानः। शाब्दीव्यञ्जनायामर्थस्य सहकारितयेष्टत्वेपि प्राधान्यं तु शब्दस्यैव। मम तु मतम्, नायिकाया दूत्याश्च वक्तृबोद्धव्यतया "तस्य प्रियस्यान्तिकम्" इति पाठेऽधमपदं विनाप्युक्तव्यङ्ग्यसिद्धौ "तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते" इति प्रकाशकारस्य भणनं प्रमादः। तथा तु व्यङ्ग्यस्यागूढतया गौणत्वापत्तेः। गौणव्यङ्ग्यं च व्यङ्ग्यं न भवतीत्यग्रे प्रतिपादयिष्यते। अत्राधमशब्दस्तु श्लिष्टशब्दादपि न्यूनचमत्कारकारी। व्यञ्जना स्वार्थ्येव। शाब्दी व्य-

व्यञ्जना तु व्यञ्जना न भवति । अनर्हत्वात् ॥ इति शाब्दीव्यञ्जना ॥

# अथ गुणीभूतव्यङ्ग्यम् ॥

---

प्रधानस्यैव नामनिर्देशो न त्वप्रधानस्यापीति सर्वशास्त्रसंमतम् ॥ गौणोपमाया अप्पयदीक्षितस्येदमुदाहरणम्—

सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गिकम् ॥

अत्र वर्तुलाकृतितत्कालमुण्डितगौररक्तवर्णमिश्रितपुष्टहूणदेशवास्तव्यजनचिबुकस्य नारङ्गिकफलेन साम्ये यथार्थेप्युक्तोपमायां चारुतायाः (रमणीयतायाः) प्राधान्याभावान्नोपमाऽलंकारः ॥ तथैव धुरंधरो व्यङ्ग्यप्रकरणे गुणीभूतव्यङ्ग्यप्रकाराष्टकमाह ॥

" अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ॥
संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥"

वाच्यार्थवद्व्यङ्ग्यस्य स्पष्टं प्रकाशमानत्वेऽगूढम् ॥
यथा—

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ॥

एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम् ॥ १ ॥

अत्र प्रभातसमयो व्यङ्ग्यः । स तु वाच्यवत्स्पष्टं प्रकाशत इत्यगूढत्वम् । तच्च लौकिकम् ॥

व्यङ्ग्यस्य कंचिदन्यं प्रत्यङ्गत्वेऽपराङ्गम् ।

यथा—

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ॥
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि! पादपतनेन सहस्ररश्मिः ॥ २ ॥

अत्र पादपतनं तु रविकराणां नलिनीस्पर्शः । अत्र रविनलिनीवृत्तान्तो वाच्यः । नायिकानायकयोर्वृत्तान्तस्य व्यङ्ग्यस्य तत्र समारोपेणोक्तवाच्यार्थस्योत्कर्षाधानाद्व्यङ्ग्यस्य वाच्याङ्गतयाऽपराङ्गत्वम् ॥ अङ्गी प्रधानं, तदङ्गं च गौणमित्यङ्गिनाऽङ्गस्य न्यग्भूततयाङ्गितोऽङ्गस्य चारुतायां न्यूनत्वम् ॥

वाच्यसिद्धौ व्यङ्ग्यस्याङ्गत्वे वाच्यसिद्ध्यङ्गम् ॥

यथा—

भ्रमिमरतिमलसहृदयतां
प्रलयं मूर्छां तमः शरीरसादम् ॥

मरणं च जलदभुजगजं
प्रसह्य कुरुते विषं वियोगिनीनाम् ॥ ३ ॥

अत्र विषशब्दस्य वाच्यार्थो जलम् । व्यङ्ग्यार्थो गरलम्। अयं व्यङ्ग्यार्थो जलदस्य भुजगस्वरूपवाच्यार्थसिद्धिं करोतीत्यस्य वाच्यसिद्ध्यङ्गत्वम् ॥ पूर्वोदाहरणे वाच्यसिद्धेरनन्तरं व्यङ्ग्येन वाच्यार्थस्योत्कर्षाधानमात्रम्, अत्र तु व्यङ्ग्यार्थं विना वाच्यार्थसिद्धिरेव न भवतीति भेदः । वाच्यार्थस्यासिद्धिर्दोषः । दोषपरिहारश्च दूषणोद्धारमात्रमिति तत्र चारुत्वं नेष्यते ॥

व्यङ्ग्यार्थस्यातिगूढत्वेऽस्फुटम् । अस्फुटत्वे क्लिष्टदोषः । व्यङ्ग्यार्थस्यातिस्फुटत्वेऽतिगूढत्वे वा चारुत्वं नास्त्येव ॥ तदेवोक्तम्—

नान्ध्रीपयोधरमिवातितरां प्रपन्नो
नो गुर्जरीस्तनमिवातितरां निगूढः ॥
अर्थो गिरामपिहितः पिहितः कथंचि-
द्रम्यत्वमेति मरुदेशवधूकुचानाम् ॥ १ ॥

यथा—

यशवन्तनरेन्द्रस्य दानवृद्धिं दिने दिने ॥
श्रुत्वा कोकयुगान्यासन्प्रहृष्टानि पदे पदे ॥ ४ ॥

अत्र व्यङ्ग्यार्थस्तु राजराजेश्वरो यशवन्तसिंहोऽतिदाने

प्रवृत्तः स्वर्णमयत्वात्सुमेरुमपि शकलीकृत्य लोकेभ्यो दद्याच्चेद्रविकरनिरोधकस्य मेरोरभावाद्रात्र्यभावे कोकयुगस्य वियोगदुःखं न स्यादिति। अस्य व्यङ्ग्यस्यातिविचारसाध्यत्वादस्फुटत्वम्। सूर्यस्य मेरोः परितः परिभ्रमणे मेरोर्मध्यपातित्वेन रवेरदर्शनाद्रात्रिर्भवतीति पुराणेषु सिद्धान्तितम्। चक्रवाकानां रात्रौ वियोगः प्रसिद्धः।

वाच्यार्थे विवक्षा व्यङ्ग्यार्थे वेति संदेहे संदिग्धव्यङ्ग्यम्॥

यथा—

यशवन्तमहाराजकटकस्यासयो रणे।
कोशाद्बहिर्विनिर्यान्ति बिलात्कालाहिजालवत्॥५॥

अत्र वाच्यार्थस्तु कोशान्निःसरतामसीनां बिलनिर्गच्छत्कृष्णसर्पोपमा। व्यङ्ग्यार्थस्तु कृष्णसर्पवद्दंशनम्। अत्र वाच्यार्थे विवक्षा व्यङ्ग्यार्थे वेतिनिर्णयाभावाद्व्यङ्ग्यस्य संदिग्धत्वम्॥ संदेहालंकारे वर्णनीयस्य चारुत्वापादकतया संदेहो भूषणम्। अत्र तु दूषणम्॥

वाच्यार्थतुल्यमेव व्यङ्ग्यार्थस्य चारुत्वप्राधान्ये तुल्यप्राधान्यम्।

यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये॥
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते॥ ६॥

भार्गवं प्रति युद्धार्थं प्रवृत्तं रावणं प्रति कस्यापीयमुक्तिः।

अत्र वाच्यार्थो ब्राह्मणातिक्रमत्यागः श्रेयस्करः, अन्यथा मित्रं परशुरामोऽमित्रं भविष्यतीति । व्यङ्ग्यार्थस्तु, यथा भार्गवो भूमिं निःक्षत्रियां व्यधात्तथा नीराक्षसामपि कुर्यादिति । अत्र वाच्यार्थव्यङ्ग्यार्थयोस्तुल्यचारुत्वम् ॥

काकुः स्वरविकारः । तयाऽऽक्षिप्त आकृष्टः काकाक्षिप्तः ॥ "आक्षेप आकृष्टौ" इति चिन्तामणिः ॥ यथा-

मथ्नामि कौरवशतं समरे न कोपाद्-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥ ७ ॥

धुरंधरः प्रधानव्यङ्ग्यविषये काकुमात्रमेवाह । गुणीभूतव्यङ्ग्यविषये तु काकाक्षिप्तमित्याह । तस्यायमाशयः । "तथाभूतां दृष्ट्वा-"इति प्रधानव्यङ्ग्योदाहरणे, अत्र चोभयत्रापि भीमस्य तादृशोक्तेर्बाधितत्वात्काकुस्वरस्य कल्पना क्रियते । प्रधानव्यङ्ग्योदाहरणे तु कौरवापराधस्योक्तत्वाद्गुरुणा मदुपरि खेदो न कार्यः, कौरवोपरि तु कार्य इति व्यङ्ग्यार्थस्य प्रेरणं काका सर्वतो भवति । अत्र तु कौरवापराधस्यानुक्तत्वात्समरे कौरवशतं मथिष्याम्येवेत्यादिव्यङ्ग्यार्थः काकुनाऽऽकृष्यते । इह व्यङ्ग्यार्थस्याकृष्टत्वाद्गौणत्वमिति ॥ काकाक्षिप्तविषयंधुरंधराशयापरिज्ञानादर्वाचीना एवं न स्फुटीचक्रुः ॥

वाच्यार्थाद्व्यङ्ग्यस्यासुन्दरत्वेऽसुन्दरम् ।

यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ॥
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥८॥

अत्र नायिकायाः संकेतस्थले गमनाभावो व्यङ्ग्यः । अत्र व्यङ्ग्यस्य वाच्यार्थापेक्षयाऽसुन्दरत्वम् । मम तु मतम्, अलंकारग्रन्थेष्वप्रधानोपमोदाहरणानि यथाऽनङ्गीकारविवक्षया प्रदर्शितानि, तथा धुरंधरो व्यङ्ग्यप्रकरणे गौणव्यङ्ग्यप्रकारोदाहरणान्यनङ्गीकारविवक्षया प्राह । तत्तु तेषामसुन्दरादिनामभिरेव स्फुटतरम् ॥ किं च

"प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत् ॥१॥"

इति ध्वन्यालोके निजमुखतो गुणीभूतव्यङ्ग्येति वदताऽर्वाचां प्रधानगुणीभूतेतिव्यङ्ग्यस्य प्रकारद्वयाङ्गीकारस्तु धुरंधराभिप्रायापरिज्ञानात्प्रमाद एव ॥ साहित्यशास्त्रे प्रधानस्यैवाङ्गीकार इति समकक्षत्व एव प्रकारा विवक्ष्यन्ते ॥ न त्वेकस्य प्राधान्येऽपरस्य च गौणत्वेऽपि । गौणे प्रकारयोग्यता चेद्धुरंधरो गौणालंकारादीनपि ब्रूयात् ॥

गुणीभूतव्यङ्ग्यस्य व्यङ्ग्यप्रकारत्वप्रतिपादनायार्वाचीनैरनेके यत्ना विहिताः । ते च सर्वेऽपि विफलाः । तत्र प्रथमस्तु, नाम्नां गोपनम् । गौणप्रधाननाम्नोः समीपे कथने गौणस्य गौणत्वं स्पष्टमवभासत इति ध्वनिकारः प्रकाशकारश्च प्रधानव्यङ्ग्यस्य ध्वनिरिति नामान्तरमाहतुः ।

"एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह" इति।

गौणस्याप्रधानेतरनाम्नोऽसत्वाद्गौणनाम्नः स्थाने गुणीभूतेतिनाम्नो व्यत्यासश्च विहितः ॥ अत्रेदं तात्पर्यम्। वस्तुतोऽयं व्यङ्ग्य एव। किं तु गौणरूपः। तदेतन्न साधीयः। पतितोऽपि ब्राह्मणो वस्तुतो ब्राह्मण एव। किं त्वाचारहीनिहेतोस्तस्य ब्राह्मणजातिबहिष्कृतत्वमिव गौणव्यङ्ग्यस्यापि चारुताहानिहेतोर्व्यङ्ग्यजातिबहिष्कृतत्वात्॥ किं च गौणव्यङ्ग्यप्रकाराणामगूढासुन्दरादिनामभिर्गौणतावाचित्वस्य स्पष्टत्वात्तदुदाहरणानि दर्शयता ध्वनिकारेण तन्नामनिर्देशमकृत्वा

"यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते॥
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः॥".

इति प्रतिपादितम्। ध्वनेरगोचर इति कथनेन गुणीभूतव्यङ्ग्ये तात्पर्यम्। तदप्यविचारसहम्। उदाहरणानुसारेण नामानि, न तु नामानुसारेणोदाहरणानीति तादृशोदाहरणैर्धुरंधरोक्तनाम्नां स्वतो लाभात्॥ द्वितीयश्च, रसाभासस्य रसप्रकरणे ग्रहणमिति ध्वनिकारस्य गौणव्यङ्ग्यस्य व्यङ्ग्याभास इति कथनम्॥

तदेवोक्तं ध्वन्यालोके॥

"एवं ध्वनेः प्रभेदान्प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते" ॥ इति।

तदपि युक्तिहीनम् । आभासे श्रुतिमात्रेणाविचारदशायां क्षणं साक्षाद्भानस्यानुभवात् । गौणव्यङ्ग्योदाहरणेषु तु तादृशप्रधानव्यङ्ग्यस्य भानाभावात् ॥ तृतीयः, गौणव्यङ्ग्यस्याङ्गीकारे व्यङ्ग्यप्रकाराणां बाहुल्यमिति लोभदर्शनम् । तदेवोक्तं ध्वन्यालोके—

"ध्वनेर्यः स गुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः ।
अनेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥" इति ॥

कवीनां प्रतिभागुण आनन्त्यमायातीति कथनेन ध्वनिकारस्यायमाशयः, गुणीभूतव्यङ्ग्यस्यानेकविधत्वात्तद्विषयकवर्णने विपुलावकाशलाभात्कविप्रतिभागुणस्यानन्त्यप्राप्तिरिति । तदपि मन्दम् । चारुताशून्यप्रकारबाहुल्येन कविप्रतिभायाः श्लाघनीयानन्तगुणप्राप्त्यभावात् । रुचिरनवोक्तिभिरेव तल्लाभात् । तस्य चैकेन प्रधानव्यङ्ग्येनैव संपद्यमानत्वात् । चतुर्थश्च, "तदयं ध्वनिनिष्यन्दरूपो द्वितीयोऽपि महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः" इति ॥ गुणीभूतव्यङ्ग्यस्य स्वीकारार्थं ध्वनिकारस्येयं युक्तिः ॥ तदपि तुच्छम् । ध्वनिकारस्योक्तयुक्त्यापि गुणीभूतव्यङ्ग्यस्याङ्गीकारयोग्यतायाः समर्थनाभावात् । अत्र ध्वनिकारस्योक्तदृष्टान्ताभिप्रायस्तु सरित्प्रवाहे सरोवरे वा सलिलबाहुल्येन मनोहारित्वम् । तथापि स्वल्पसलिलगिरिनिर्झरस्य पर्वतान्तरेण जलधारापातरूपविलक्षणाकृत्या तत्रापि विलक्षणमनोहारित्वम् । एवं प्रधानव्यङ्ग्ये चारुताबाहुल्येन मनो-

हारित्वम् । तथापि स्वल्पचारुताविशिष्टस्य गुणीभूतव्यङ्ग्यस्यापि चारुतावैलक्षण्यात्तत्रापि विलक्षणमनोहारित्वमिति ॥ मम तु मतम्, सरित्प्रवाहे निर्झरे च सलिलतारतम्यस्य वैलक्षण्यान्न मनोहारित्वम् । किं त्वाकृते रुचिरतावैलक्षण्यादिति । यथा षोडशकलपूर्णिमापूर्णचन्द्रे एककलद्वितीयाचन्द्रे च चारुताया वैलक्षण्यम् । तच्च न कलातारतम्यमूलम् । यत् पूर्णिमाचन्द्रापेक्षया षोडशांशचारुत्वं द्वितीयाचन्द्रेऽपि विद्यत इति । अपि तु नवोदयविश्ववन्द्यत्वाद्भुतभूषणाकृतित्वरूपचारुतावैलक्षण्यमूलम् । तथा प्रधानव्यङ्ग्ये गुणीभूतव्यङ्ग्ये च न तादृशचारुतावैलक्षण्यम् । अगूढासुन्दरादिगुणीभूतव्यङ्ग्यप्रकारेषु प्रधानव्यङ्ग्यापेक्षया चारुताया न्यूनत्वादभावाद्वा । सरित्प्रवाहापेक्षया निर्झरस्य पूर्णचन्द्रापेक्षया च द्वितीयाचन्द्रस्य विलक्षणाकृते रुचिरत्वाद्गुणत्वम् । प्रधानव्यङ्ग्यापेक्षया गुणीभूतव्यङ्ग्यप्रकाराणां त्वगूढासुन्दरत्वादिरूपारोपितविलक्षणाकृतेर्दुराकृतित्वाद्दूषणत्वम् । कविसंप्रदाये च न्यूनस्येति गौणस्याङ्गीकारो नास्तीत्येतदेव कविसृष्टेरलौकिकत्वम् ॥

प्रधानग्रहणादत्र गौणस्यांसर्वाकृतिः सदा ॥
इति साहित्यसिद्धान्तो न केनापि विचारितः ॥ १ ॥

## ॥ इति गुणीभूतव्यङ्ग्यम् ॥

व्यङ्ग्येऽनुरणनन्यायः । अनुरणनस्यैवानुस्वानमिति नामान्तरम् । काव्यप्रकाशे—

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥ १ ॥

इत्यर्वाचीना कारिका दृश्यते ॥ मम तु मतं, गङ्गाप्रवाहे विष्णुपादोदकं तु स्वल्पम् । हिमाचलजलेनैव तस्य पूर्तिः । तथाऽस्यां कारिकायां परंपरागतानि धुरंधराक्षराणि तु "अनुस्वानाभसंलक्ष्यक्रमो व्यङ्ग्यः" इत्येव ॥ अन्यस्त्वर्वाचीनैः स्वमतसंमिश्रणेनोक्तम् । शाब्दीव्यञ्जना च व्यञ्जना न भवतीति सविस्तरं प्राक्प्रतिपादितमस्माभिः । अत्र धुरंधराक्षरेषु समुपसर्गार्थः शोभनमिति विवक्षितः । "सम् शोभने" इति चिन्तामणिः ॥ धुरंधरस्य रणनानुरणनयोः स्थूलसूक्ष्मत्वक्रमो विवक्षितः । रणनापेक्षयाऽनुरणनं शोभनमपीत्यनुरणनसदृशशोभनसूक्ष्मताक्रमविशिष्टोऽन्यार्थो व्यङ्ग्य इति फलितार्थः ॥ वाच्यार्थः स्थूल एव । व्यङ्ग्यार्थश्च सूक्ष्म एव । व्यङ्ग्यशब्दार्थस्तु व्यञ्जनया गम्योऽर्थो व्यङ्ग्य इति ॥ व्यङ्ग्यस्यातिसूक्ष्मत्वादेव निधिसिद्धाञ्जनन्यायेन वक्त्राद्यञ्जनविशेषगम्यत्वम् ॥

"अनुस्वानाभसंलक्ष्यक्रमो व्यङ्ग्य इहेरितः ॥

इति कथनेनेदमर्थसिद्धं, नह्यन्यार्थस्य तादृशसूक्ष्मक्रमाभावे शोभनत्वं व्यङ्ग्यत्वं च । व्यङ्ग्यार्थस्य वाच्यार्थलक्ष्या-

र्थापेक्षया जीवरूपोच्चपदत्वं च सूक्ष्मतयैव। अस्मिन्नेव प्रकरणे उक्तकारिकानन्तरं काव्यप्रकाशे—

"रसभावतदाभासभावशान्त्यादिरक्रमः ॥'

इति कारिका दृश्यते। मम तु मतं, इदं परंपरागतं साक्षाद्धुरंधरवचनम्। धुरंधरवचनस्यानुवादो वा। अत्रेदं तात्पर्यम्, रसभावादिरूपान्यार्थेष्वनुरणनसदृशशोभनक्रमो न दृश्यत इति तादृशसूक्ष्मत्वाभावादुक्तान्यार्थस्य न व्यङ्ग्यत्वम् ॥ स्वयं धुरंधरस्य व्यङ्ग्यार्थबोधकानां वक्रादीनामञ्जनविशेषतया भणनं रसभावादिबोधकानां चेष्टाद्यनुभावानां ततः पृथक्कथनं चास्मन्निर्णीतधुरंधरसिद्धान्ते प्रत्यक्षं प्रमाणम् ॥ "विकारो मानसो भावोऽनुभावो भावबोधकः ॥", इत्यमरः ॥ अनु पश्चाद्भवतीत्यनुभावः। भावस्य कार्यमनुभाव इत्यर्थः ॥ अनुभावाद्भावबोधस्तु कार्यात्कारणबोधः। यथा प्रवाहकार्येण कारणस्य वृष्टेर्बोधः। कार्यकारणयोश्च स्थूलरूपत्वात्कार्यात्कारणबोधो न व्यङ्ग्यस्य विषयः। किं तु ज्ञापकहेतुनामकहेत्वलंकारस्य प्रकारत्वेनाङ्गीकृतः। न च वाच्यं, वक्राद्यञ्जनविशेषा अपि कारणान्येवेति। तत्र कार्यकारणभावात्परतोऽञ्जनविशेषतायां पर्यवसानात्। नामनिर्देशश्च प्रधानतयैव भवति। रसभावादिरूपान्यार्थस्य च व्यंङ्ग्यार्थापेक्षया स्थूलत्वाद्वाच्यार्थप्रायत्वम् ॥

यथा—

अट्टालिकाया युगले निबद्धा

परस्परालोकनरज्जुरेषा ॥
गतागतं निर्भयमत्र यूनो-
र्मनोनटौ संतनुतो यथेच्छम् ॥ १ ॥

अत्र दम्पत्योस्तादृशाखण्डदृष्टिरूपानुभावेन रसदशां प्राप्तो दम्पतिरतिस्थायिभावरूपोऽन्यार्थो बुध्यते । तस्य चानुरणनवत्सूक्ष्मत्वाभावान्न व्यङ्ग्यत्वम्॥वक्राद्यञ्जनविशेषबोध्यत्वाभावात् । व्यङ्ग्यविषये च "अनुस्वानाभसंलक्ष्यक्रमो व्यङ्ग्यः" इत्याद्यनेकानि वचनानि । व्यङ्ग्यार्थसूक्ष्मतायामेव च तत्तात्पर्यम् । व्यङ्ग्यार्थसूक्ष्मताविषये च यत्नकरणार्थं परंपरागतं ध्वनिकारस्येदं वचनम्-

"शब्दार्थशक्त्याऽऽक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥ १ ॥"

इति ॥

अत्र "शब्द" इत्यर्वाचीनैर्योजितम् ॥

यथा-

कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चूक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् ॥
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चैलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥ १॥

अत्र दीर्घिकायास्तटे विहरन्त्योर्वक्तृबोद्धव्यरमण्योरुपान्तिके मज्जनमाचरन्त्याः कस्याश्चिन्नायिकायाः कुचक्षताधरव्रणरूपसुरतचिन्हं व्यङ्ग्यम्। तच्च कविना चतुर्थचरणे स्वोक्त्या प्रकाशितमिति तस्य वाच्यत्वापत्त्या व्यङ्ग्यत्वाभावः॥ अत्रार्वाचीनमतीयो वक्ष्यमाणप्रस्तुताङ्कुरालंकारः। अस्मदीयं चाप्रस्तुतप्रशंसालंकारमात्रम्। धुरंधरमतेऽलंकाराणां वाच्यचित्रतया कथनात्। अत्र कुचक्षताधरव्रणयोर्वचनेनानुक्तावपि "चैलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना" इति कथनमात्रेणाप्युक्तव्यङ्ग्यार्थे या काचित्सूक्ष्मताहानिस्तयैव व्यङ्ग्यत्वापहाराद्वाच्यार्थप्रायत्वं चेद्रसभावादिषु त्वेतावत्यपि रसभावरूपव्यङ्ग्यार्थस्य सूक्ष्मता नास्तीति कथं वा तेषां व्यङ्ग्यत्वं वक्तुं शक्यम्॥ धुरंधराभिप्रायमजानाना अर्वाचीनाः संलक्ष्यक्रमासंलक्ष्यक्रमेतिव्यङ्ग्यस्य द्वैविध्यमाहुः। अत्र क्रमश्च पूर्वपश्चाद्भावरूप इत्याहुः। अत्र समुपसर्गार्थश्च सम्यगित्यबोधिषुः। कथयन्ति च रसभावादिषु वाच्यार्थान्यार्थयोः क्रमस्तु विद्यते, तथापि शतपत्रपत्रभेदन्यायेनासौ सम्यङ् न लक्ष्यत इति रसभावरूपो व्यङ्ग्योऽसंलक्ष्यक्रमः॥ शतपत्रपत्रभेदन्यायस्तु शतपत्रपत्राण्युपर्युपरि विन्यस्य सूच्या भेदने क्रमेणैव भेदस्तथाप्यतिमृदुतया झटिति वेधात्क्रमः सम्यङ् न लक्ष्यते इति युगपद्वेधव्यवहारः। किंच रसाद्यतिरिक्तान्यार्थस्य व्यङ्ग्यत्वे वाच्यार्थव्यङ्ग्यार्थयोः क्रमः सम्यग्लक्ष्यत इत्यसौ संलक्ष्यक्रमः। मम तु मतं, अर्वाचीनानामयं प्रमादः। अनुरणनवत्सूक्ष्मतया

व्यञ्जनाशक्तिप्रतीयमानस्यैव व्यङ्ग्यार्थत्वात् ॥ वाच्यार्थव्यङ्ग्यार्थयोः पूर्वपश्चात्क्रमस्य सम्यग्लक्ष्यत्वेऽलक्ष्यत्वे वा व्यङ्ग्यप्रकाराङ्गीकारोचितचमत्कारगन्धस्याप्यविद्यमानत्वाच्च ॥ काव्यप्रकाशे "रसभाव"–इति कारिकोत्तरार्द्धश्च ॥

"भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥

इति दृश्यते। स रसभावादी रसवदाद्यलंकाराद्भिन्नः। यतोऽयं रसभावादिरलंकार्यतया स्थितः। रसवदादिश्चालंकारतया स्थितः ॥ मम तु मतं, तदेतद्धुरंधरवचनेन सह स्वमतसंयोजनमप्यर्वाचीनानां प्रमादः। कुत इति चेद्रसवदादीनामलंकारान्तरत्वसंस्थापकमते शृङ्गारादिरसा न वाऽलंकारा न वाऽलंकार्याः। तत्र प्रमाणं च "रसो वै सः" इति श्रुतिः ॥ तदितरसर्वविधभावानामलंकारालंकार्यभावे मिथः पोष्यपोषकभावो निमित्तम्। तद्विरुद्धं च रसभावयोरलंकार्यत्वोक्तौ न काचिद्युक्तिरुपदिष्टेति तादृशयुक्तिविरहितवचनं सर्वथाऽनङ्गीकारयोग्यम् ॥

किं च लक्षणायाः प्रयोजनं व्यङ्ग्यं मन्वाना अर्वाचीना व्यङ्ग्यस्याभिधालक्षणामूलेति प्रकारद्वयमाहुः। तत्राभिधामूलव्यङ्ग्यो विवक्षितान्यपरवाच्य इति पर्यायान्तरेणाभिहितः। विवक्षितमन्यपरं व्यङ्ग्यपरं वाच्यं यत्र सः। स च द्विधा। संलक्ष्यक्रमोऽसंलक्ष्यक्रमश्च। लक्षणामूलश्चाविवक्षितवाच्य इति पर्यायान्तरेण कथितः। अविवक्षितं वाच्यं यत्र सः। लक्षणाया जहत्स्वार्थाऽजहत्स्वार्थेति द्वैविध्यात्तन्मूल-

व्यङ्ग्योऽपि द्विधोक्तः ॥ तत्र जहत्स्वार्थामूलोऽत्यन्ततिरस्कृतवाच्य इति, अजहत्स्वार्थामूलश्चार्थान्तरसंक्रमितवाच्य इति नामान्तरेणाभिहितः ॥ मम तु मतं, नामान्तररूपवेषव्यत्यासेनेते व्यङ्ग्यप्रकारा न भवेयुः ॥ असंलक्ष्यक्रमो व्यङ्ग्यो न भवतीत्यधुनैवोक्तम् ॥ लक्षणायाः प्रयोजनमपि न व्यङ्ग्यम् । काकाक्षिप्ताख्यगुणीभूतव्यङ्ग्यप्रकारे व्यङ्ग्यस्याकृष्टत्वाद्व्यङ्ग्यत्वाभाव इव लक्षणाप्रयोजनस्यापि बाधितवाच्यार्थेनाकृष्टत्वादप्रधानतया व्यङ्ग्यत्वाभावात् ॥

यथा—

## चारुचन्द्रिकया सोऽयं चुचुम्ब उदयाचलः ॥

अत्र चान्द्रिकाया जडत्वाच्चुम्बनायोग्यतया वाच्यार्थस्य बाधः, चुम्बनान्यार्थस्पर्शयोश्च सामीप्यसंबन्धः, तादृशवाञ्छितप्रयोगप्रयोजनं च नायिकाया उद्दीपनं चेत्युक्तलक्षणया चन्द्रिकयोदयाचलस्पर्शो विहित इति लक्ष्यार्थस्य बोधः। तादृशशृङ्गाररसोपयोगिवचनेन च दूत्या वक्तृत्वम्। तद्वैलक्षण्येन चाभिसरणं प्रकाशाधिक्यात्पूर्वमेव गन्तव्यमिति शैघ्र्यं च व्यङ्ग्यम्। अत्र लक्ष्यार्थाद्व्यङ्ग्यार्थस्योत्थानम्। लक्षणा चात्राजहत्स्वार्था। मम तु मतं, अत्र व्यङ्ग्यस्य वैलक्षण्यं तु लक्ष्यार्थमूलकतामात्रम्। लक्षणायां येयमजहत्स्वार्था, न हि तद्विलक्षणताचमत्कारस्य व्यङ्ग्यपर्यन्तमनुधावनम्। येन व्यङ्ग्यः प्रकारत्वमासादयेत् ॥

## न शाब्दी व्यञ्जना रम्या गौणे व्यङ्ग्यपदं न हि ॥

असंलक्ष्यक्रमे चापि न भूप व्यङ्ग्ययोग्यता ॥१॥
प्रयोजनं लक्षणाया व्यङ्ग्यं भवति न क्वचित् ॥
प्रमाद इह सर्वेषामर्वाचां दृश्यते नृप! ॥२॥

प्रकारगणनारसिकाः काव्यप्रकाशगतकारिकाकारादयो व्यङ्ग्यस्य शरेषुवेदाभ्रविधु (१०४५५) मितान् प्रकारान्मन्यन्ते। तत्र प्रथमं तावद्व्यङ्ग्यस्य द्वौ प्रकारौ। अभिधामूलो लक्षणामूलश्च। अभिधामूलो द्विविधः। असंलक्ष्यक्रमः, संलक्ष्यक्रमश्च। असंलक्ष्यक्रमो रसभावादिरूपेणैकविधः १। संलक्ष्यक्रमः पञ्चदशधा। तत्र प्रथमं तावच्छब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्चेति त्रिधा। शब्दशक्तिमूलो वस्त्वलंकारभेदेन द्विधा २॥ अर्थशक्तिमूलो द्वादशविधः। तत्र स्वतःसंभवी, कविप्रौढोक्तिमात्रसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धश्चेति त्रिधा। उक्तभेदत्रयस्य च प्रत्येकं वस्तुना वस्तु, वस्तुनाऽलंकारः, अलंकारेण वस्तु, अलंकारेण चालंकार इति चातुर्विध्यम् १२॥ उभयशक्तिमूलश्चैकविधः १॥ लक्षणामूलव्यङ्ग्यो द्विविधः। अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च २॥ एवमष्टादश भेदा भवन्ति॥ पुनश्चार्थशक्तिमूलव्यङ्ग्यस्योक्तद्वादशभेदानां पदवाक्यप्रबन्धगततया त्रैविध्यात्षट्त्रिंशद्भेदाः ३६। शब्दशक्तिमूलस्य भेदद्वयस्यापि पदवाक्यगततया चत्वारो भेदाः ४। उभयशक्तिमूलश्चैक १ इति संलक्ष्यक्रमस्यैकचत्वारिंशद्भेदाः ४१। असंलक्ष्यक्रमश्च पदवाक्यपदैकदेशरचनावर्णप्रबन्धगतत्वेन षड्विधः ६। रचना कौशिक्यादिरीतिः। वर्णो माधुर्यादिगुणरूपः। प्रबन्धः कवि-

विश्रान्तिमद्दर्शनम् ॥ लक्षणामूलव्यङ्ग्यस्य चोक्तभेदद्वयस्य पदवाक्यगतत्वेन चातुर्विध्यम् ४ । एवं मिलिताः शुद्धभेदा एकपञ्चाशत् ५१ ॥ एतेषां मिथः संकलने (५१×५१=२६०१) चन्द्राभ्ररसाक्षिभेदा भवन्ति । द्वित्रादिमेलने संसृष्टिसंकरौ विष्येते । संसृष्टिरेकविधा । संकरश्च त्रिविधः । संदेहसंकरः, अङ्गाङ्गिभावसंकरः, एकवाचकानुप्रवेशसंकरश्चेति । उक्तभेदानां चतुर्भिः संसृष्टिसंकरभेदैर्गुणने (२६०१×४=१०४०४) वेदाभ्रवेदखचन्द्रमिता भेदा भवन्ति । संसृष्टिसंकरावन्तर्भावाकृतौ वक्ष्येते ॥ एषु शुद्धैकपञ्चाशद्भेदयोजने मिलिता शरेषुयुगखेन्दवो (१०४५५) व्यङ्ग्यस्य प्रकारा भवन्ति ॥

प्रकाशकारः स्वतःसंभविनो वस्तुना वस्तुव्यङ्ग्यस्येदमुदाहरणमाह—

"अलससिरोमणिधुत्ताणं अग्गिमो पुत्ति! धणसमिद्धिमओ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ।१।"

अत्र वस्तुना वस्तु व्यङ्ग्यम् । अलसशिरोमणित्वेन नायिकान्तरागमनशीलः, धूर्ताग्रणीत्वेनान्यनायिकाऽनादरणीयः, धनसमृद्धिमत्तया कृपणः, प्रफुल्लनयनत्वेन तादृशव्यवस्थामत्याऽन्यनायिकाऽनाकर्षणीय इति ममैव वशंवदो भविष्यतीति व्यज्यते ॥ लोके स्त्रीणामेतादृशवृत्तान्तः स्वतःसंभवी ॥

* अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि । धनसमृद्धिमय । इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥ १ ॥

तत्रैव कविप्रौढोक्तिमात्रसिद्धस्येदमुदाहरणम्—

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ॥
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ १ ॥

अत्र दिङ्मातङ्गानां वर्णनीयनृपकीर्त्याकर्णने किंचिच्छुक्लं कर्णे प्रविशतीतिभ्रान्त्या सतिर्यग्दृक्पातं कर्णे हस्तावर्तनमिति भ्रान्त्यलंकारेण येषां कीर्तिगानरूपार्थाधिगमो नास्ति तेषामपि श्वैत्यमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्करोतीति वस्तु व्यङ्ग्यम् ॥ अत्र कीर्तिश्रवणेन कर्णे हस्तावर्तनं हस्तिनो न स्वतःसंभवि । किंतु कविप्रतिभासिद्धम् ।

कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धस्येदमुदाहरणम्—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ॥
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे ॥१॥

अत्र पथिकस्य प्रश्नेन शाखोटवृक्षस्योत्तरेण च कस्यचित्परोपकारिसमृद्धजनसमीपवर्तिनो दरिद्रस्य पश्चात्तापवृत्तान्तो व्यङ्ग्यः । जडवृत्तं प्रति पथिकस्य प्रश्नो जडवृक्षस्य च प्रतिवचनं न स्वतःसंभवि । किं तूक्तश्रोतृवक्तृत्वं कविप्रौढोक्तिसिद्धम् ॥

प्रकाशकारः शब्दशक्तिमूलवस्तुव्यङ्ग्यविषय इदमुदाजहार–

पन्थिअ! न एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे॥
उएणअपओहरं पेक्खिऊण जइ वससि ता वससु॥१॥

अत्र यद्युपभोगक्षमोसि तदाऽऽस्स्वेति व्यङ्ग्यम्। तच्च पयोधरपदगम्यत्वाच्छब्दशक्तिमूलम्। मम तु मतं, असंलक्ष्यक्रमशब्दशक्तिमूलकयोर्न व्यङ्ग्यत्वम्। वस्त्वलंकारव्यङ्ग्यरूपवैलक्षण्यं तूदाहरणान्तरम्॥

स्वतःसंभविकविप्रौढोक्तिमात्रसिद्धकविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेत्यप्युदाहरणान्तरम्। मम तु मतं, कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धस्य चमत्कारः कविप्रौढोक्तिमात्रसिद्धान्न तादृशविलक्षणो येन प्रकारान्तरत्वमापद्येत। अनयोर्वैलक्षण्यं साधयता काव्यप्रकाशस्य बालबोधिनीटीकाकारेण "वृद्धोक्तिविषयाच्छिशूक्तिविषय इव कव्युक्तिविषयात्तन्निबद्धोक्तिविषयोऽधिकरागप्रकटकत्वेनाधिकचमत्कारीति द्वयोर्भेदः" इत्युक्तम्। तदसत्। वृद्धबालकौ तु वास्तवौ। कविकल्पितवृत्तादिवक्ता तु वास्तवो न भवति, येन तस्य भाषणचमत्कारस्यावबोधः स्यात्। कविकल्पितवक्तृभाषणचमत्कारस्तु कविप्रतिभाया एव। अत्र कविकल्पितवक्तृवृक्षचमत्का-

(*) पथिक! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस॥ १॥

तत्रैव कविप्रौढोक्तिमात्रसिद्धस्येदमुदाहरणम्—

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ॥
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ १ ॥

अत्र दिङ्मातङ्गानां वर्णनीयनृपकीर्त्याकर्णने किंचिच्छुक्लं कर्णे प्रविशतीतिभ्रान्त्या सतिर्यग्दृक्पातं कर्णे हस्तावर्तनमिति भ्रान्त्यलंकारेण येषां कीर्तिगानरूपार्थाधिगमो नास्ति तेषामपि श्वैत्यमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्करोतीति वस्तु व्यङ्ग्यम् ॥ अत्र कीर्तिश्रवणेन कर्णे हस्तावर्तनं हस्तिनो न स्वतःसंभवि । किंतु कविप्रतिभासिद्धम् ।

कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धस्येदमुदाहरणम्—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ॥
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे ॥१॥

अत्र पथिकस्य प्रश्नेन शाखोटवृक्षस्योत्तरेण च कस्यचित्परोपकारिसमृद्धजनसमीपवर्तिनो दरिद्रस्य पश्चात्तापवृत्तान्तो व्यङ्ग्यः । जडवृक्षं प्रति पथिकस्य प्रश्नो जडवृक्षस्य च प्रतिवचनं न स्वतःसंभवि । किं तु वक्तृश्रोतृवक्तृत्वं कविप्रौढोक्तिसिद्धम् ॥

प्रकाशकारः शब्दशक्तिमूलवस्तुव्यङ्ग्यविषय इदमुदाजहार—

पन्थिअ! न एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे॥
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु॥१॥

अत्र यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति व्यङ्ग्यम्। तच्च पयोधरपदगम्यत्वाच्छब्दशक्तिमूलम्। मम तु मतं, असंलक्ष्यक्रमशब्दशक्तिमूलकयोर्न व्यङ्ग्यत्वम्। वस्त्वलंकारव्यङ्ग्यरूपवैलक्षण्यं तूदाहरणान्तरम्॥

स्वतःसंभविकविप्रौढोक्तिमात्रसिद्धकविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेत्यप्युदाहरणान्तरम्। मम तु मतं, कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धस्य चमत्कारः कविप्रौढोक्तिमात्रसिद्धान्न तादृशविलक्षणो येन प्रकारान्तरत्वमापद्येत। अनयोर्वैलक्षण्यं साधयता काव्यप्रकाशस्य बालबोधिनीटीकाकारेण "वृद्धोक्तिविषयाच्छिशूक्तिविषय इव कव्युक्तिविषयात्तन्निबद्धोक्तिविषयोऽधिकरागप्रकटकत्वेनाधिकचमत्कारीति द्वयोर्भेदः" इत्युक्तम्। तदसत्। वृद्धबालकौ तु वास्तवौ। कविकल्पितवृद्धादिवक्ता तु वास्तवो न भवति, येन तस्य भाषणचमत्कारस्यावबोधः स्यात्। कविकल्पितवक्तृभाषणचमत्कारस्तु कविप्रतिभाया एव। अत्र कविकल्पितवक्तृवृक्षचमत्का-

(*) पथिक! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस॥ १॥

रस्य कविप्रतिभायाः पृथगवबोधश्चेत् "कैलासस्य प्रथमशिखरे" इति कविप्रौढोक्तिमात्रसिद्धोदाहरणेऽपि कविप्रतिभायाः पृथक् तादृशक्रियाकारिकारिणश्चमत्कारस्य पार्थक्येन कुतो नावबोधः ॥ लक्षणायाः प्रयोजनं प्रकाराश्च न व्यङ्ग्याः । पदवाक्यपदैकदेशप्रबन्धेत्ययमंशोऽपि चमत्कृतिहीनः॥ रीतयोऽप्यनुपयुक्ता एव । गुणसंसर्गस्त्ववकाव्यतादोपपरिहारमात्रम् । ततश्च न प्रकारयोग्यता । न चात्र संसृष्टिसंकरवन्मेलनेनापि प्रकारा भवेयुः । तत्तचमत्कारस्य पृथक्पृथगनुभवात् । यथाऽलंकाराणां संसृष्टिसंकरयोरलंकारचमत्कारस्य पृथक्पृथगनुभवः । प्रकारास्तु त एव भवेयुर्येषां चमत्कारस्य तन्मयविशेषतायास्तद्विषयकसामान्यचमत्कारे लयः स्यात्॥प्रकारगणनारसिकानामिदमिन्द्रजालं ग्राम्यम् ॥ एवं तु गुणीभूतव्यङ्ग्यप्रकारैर्गुणने व्यङ्ग्यसंख्याऽतीव वृद्धिमापद्येत ॥ इति शब्दार्थनिरूपणम् ॥

# अथ गुणनिरूपणम् ॥

गुणशब्दार्थ आमन्त्रणम्॥ "गुण आमन्त्रणे" इति चिन्तामणिः । [illegible]न्त्रणं संमुखीकरणम् । वस्तुनो गुणः सर्वस्यापि म[illegible] ॥ काव्ये माधुर्यौजःप्रसादास्त्रयो गुणाः । [illegible]श्यकत्वे भगवतो वेदव्यासस्येदं वचनम्-

"अलंकृतमपि प्रार्थ्यं न काव्यं निर्गुणं भवेत् ॥
वपुष्यललिते स्त्रीणां हारो भारायते परम् ॥१॥" इति॥

मौ॰

माधुर्यं सौम्यता। "माधुर्यं सौम्यत्वे" इतिचिन्तामणिः। सा च चन्द्रादिवृत्तिः। सौम्यतागुणवद्वस्तुना मनो द्रुतं भवतीति माधुर्यगुणवत्काव्यश्रवणात्सामाजिकमनसां द्रवीभूतत्वं वेदितव्यम्। तच्च सुन्दररमण्यादिवर्णनविषयककाव्यश्रवणाद्भवति।

यथा--

लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्॥
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि॥१॥

ओजो दीप्तिः। "ओजो दीप्तौ" इति चिन्तामणिः। दीप्तिस्तु तेजः। तच्च सूर्यादिवृत्ति। दीप्तिगुणवद्वस्तुना मनस्तेजोविशिष्टं भवतीत्योजोगुणवत्काव्यश्रवणात्सामाजिकमनसां तेजोविशिष्टत्वं ज्ञेयम्। तच्च युद्धादिवर्णनविषयककाव्यश्रवणाद्भवति॥

यथा--

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः॥
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्॥१॥

प्रसादो नैर्मल्यम्। "प्रसादो नैर्मल्ये" इति चिन्तामणिः। स्वच्छपटे जलमिव शुष्केन्धने चाग्निरिव निर्मलपदार्थेऽन्यद्वस्तु शीघ्रं प्रविशतीतिप्रसादगुणवत्काव्यश्रवणात्सामाजिकमनसामुक्तकाव्ये शीघ्रं प्रवेशो वेदितव्यः ॥ तादृशरचना सुखबोध्या भवतीतिभावः ॥ अयं प्रसादगुणो भरतमुनिना "जनपदसुखबोध्यम्" इति विशेषणेन काव्यलक्षणे सूचितः। अयं गुणः क्लिष्टदोषप्रतिस्पर्द्धी ॥ अस्य गुणस्य माधुर्ये ओजसि च गुणद्वयेऽप्यावश्यकत्वम् ॥

यथा—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ॥
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला॥१।

अत्र माधुर्यगुणे प्रसादगुणस्य मिश्रितत्वम् ॥

माधुर्यं सौम्यता चित्तं द्रवीभूतं करोति तत् ॥
ओजस्तु दीप्तिस्तच्चित्तं तेजोयुक्तं करोत्यलम् ॥ १ ॥
प्रसादः खलु नैर्मल्यं विशत्याशु मनोऽत्र वै ॥
शुष्केन्धने यथा वह्निर्जलं चाच्छपटे यथा ॥ २ ॥

अर्वाचीनैर्ह्रस्वद्वित्वाद्यक्षरोद्देशेन गुणप्रकारा उक्ताः। ते तु मुधैव ॥

## इति गुणप्रकरणम् ॥

# अथ रीतिनिरूपणम् ॥

देशजात्यादिभेदान्मनुष्येषु रीतेर्व्यवहारस्य भेदस्तथा देशादिभेदात्काव्यरचनायामपि । स च रीतिपदवाच्यः । रीतिर्वृत्तिरिति पर्यायान्तरम् । तदुक्तं ध्वनिकृता—

"व्यवहारो हि वृत्तिरुच्यते" इति ॥

भगवता वेदव्यासेनाग्निपुराणस्य चत्वारिंशदधिकत्रिशततमेऽध्याये रीतयो भणिताः ।

"उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा ॥
अनवस्थितसंदर्भा गौडीया दीर्घविग्रहा ॥
उपचारैर्न" इति ॥

उपचारोऽत्र व्यवहारः । स च लौकिकः शास्त्रीयश्च । पाञ्चाली पाञ्चालदेशसंबन्धिनी । गौडीया गौडदेशसंबन्धिनी । विदर्भदेशस्य काव्यरचनारीतिर्विलक्षणत्वाद्वैदर्भीति । तथा लाटदेशस्य काव्यरचनारीतिर्लाटीति । एवमन्या अपि । यथा देशे देशे काव्यरचनारीतेर्भेदाद्विभिन्नत्वम् । तथा महाकविरचनानामपि रीतेर्भेदाद्विभिन्नत्वम् । कविरचनारीतयश्च तत्तदाचार्यनामभिः प्रथिताः । यथा कौशिकमुनेः काव्यरचनारीतिः कौशिकीति । कुशिकवंश्यत्वाद्विश्वामित्रस्य कौशिक इति नामान्तरम् । भरतमुनेश्च काव्यरचनारीतिर्भारतीति । तदुक्तमग्निपुराणे भगवता व्यासेन—

"वाक्प्रधाना नरप्राया स्त्रीयुक्ता प्राकृतोक्तिता ॥
भरतेन प्रणीतत्वाद्भारती रीतिरुच्यते ॥" इति ॥

मम तु मतं, काव्यस्य रमणीयत्वे रीतीनां मनागपि नोपयोग इति बहुभिर्ग्रन्थकारैर्नोक्ताः ॥

इति रीतिप्रकरणम् ॥

# अथ भावाः ॥

कविभिर्वर्ण्यते वस्तु दृश्यादृश्यं त्रिलोकगम् ॥
मनोऽदृश्यं तद्विकारा अनन्ताः स्युर्नराधिप!॥१॥

दृश्यं रूपि । अदृश्यमरूपि । पवनाद्यनेकारूपिवस्तुसत्त्वेऽपि काव्योपयोगितयाऽत्र मनोविकाररूपा भावा गृह्यन्ते । विधिसृष्टिरिव मानसी सृष्टिरपीयं कवीनामादरार्हा ॥

विकारो मानसो भावो विभावस्तस्य कारणम् ॥
तस्य कार्यं च भूपालानुभावो भावबोधकः ॥१॥

मनसि कदाचिद्रागः, कदाचित्क्रोधः, कदाचिच्च शोकादय उत्पद्यन्ते । ते च मनसो विकारा धर्मा भावा इत्युच्यन्ते । "विकारो मानसो भावः ।" इत्यमरः ॥ "भावो मानसधर्मे" इति चिन्तामणिः ॥ भवतीति भावः । अत्र मनसि रूढिः । मनोभवो विकारो भाव इत्यर्थः ॥ भावस्य कारणं

विभाव इत्युच्यते। अत्र वीत्युपसर्गो हेत्वर्थकः। वि हेतौ "इति चिन्तामणिः॥ भावस्य कार्यमनुभाव इत्युक्तम्। अनु पश्चाद्भवतीत्यनुभावः। अत्र भावे रूढिः। भावस्य पश्चाद्भावी भावोऽनुभाव इत्यर्थः॥ कार्यं हि कारणात्पश्चाद्भवत्येव॥ भावश्च विभावस्य कार्यम्। अनुभावस्य च कारणम्।

मनसोऽतिचञ्चलत्वात्क्षणे क्षणेऽनन्तभावानाम्।
उत्पत्तेरिह काव्योपयोगिभावा नरेश! गृह्यन्ते॥१॥
भावा द्विधा नव स्थायिभावाः संचारिणोऽमिताः
दिग्दर्शनार्थं द्वात्रिंशद्गणिता मनुजाधिप!॥ २॥
अतिरस्कृतो विरुद्धैर्भावैरतिरोहितोऽविरुद्धैश्च।
यावद्रसं स्थिरत्वेन वर्तमानो नृप! स्थायी॥ ३॥

स्थायी स्थिरः। "स्थायी स्थिरे" इति चिन्तामणिः। अत्र रसदशाप्राप्तिपर्यन्तं स्थिरत्वे रूढिः। प्रकरणवशाद्भावस्य लाभः॥ तथा च रसदशाप्राप्तिपर्यन्तं स्थिरतया वर्तमानो भावः स्थायीत्यर्थः। अत्रेयमपि विवक्षा, मनसि भावेन सहेतरेऽपि भावा भवन्ति। तत्र रतिहासोत्साहादयो भावा मिथोऽविरुद्धाः। रतिशोकजुगुप्सादयो भावा मिथो विरुद्धाः। एवं चाविरोधिभावैरतिरोहितोऽनाच्छादितो विरोधिभावैश्चातिरस्कृतः सन् रसदशाप्राप्तिपर्यन्तं स्थिरतया वर्तमानो भावः स्थायिसंज्ञकः॥

तदुक्तं दशरूपके—

"सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् ॥
यावद्रसं वर्तमानः स्थायिभाव उदाहृतः ॥"

काव्यप्रदीपे च—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ॥
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥"

इति ॥

रत्यादिको भावोऽविरोधिभावैरतिरोहितो विरोधिभावैश्चातिरस्कृतः सन्नानन्दप्रदतया स्वयं रसदशाप्राप्तिपर्यन्तमतिशयचञ्चले मनसि स्थिरतया वर्तमानः स्थायिपदं लभत इति भावः ॥ रत्यादीनामविरोधिभावैरतिरोधानं, विरोधिभावैश्चातिरस्करणं, अतिशयचञ्चले मनसि च चिरं स्थिरतया वर्तमानत्वमित्येतावदेव न स्थायिभावमाहात्म्यम्। अपि तु ते उक्तभावान्स्वस्य संचारिणः परिचारकान्कुर्वन्तीति। अन्यभावानां स्वपरिचारकत्वापादनेन च स्थायी सर्वभावानां राजत्वेनाभिमतः ॥ तदुक्तं भगवता भरतेन—

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
एवं हि सर्वभावानां स्थायी भावो महानिह ॥१॥

इति ॥

नव स्थायिभावाः ॥

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।

जुगुप्सा विस्मयश्चैव निर्वेदो नवमः स्मृतः ॥१॥

दृश्यकाव्ये शृङ्गारादयोऽष्टावेव रसाः स्वीकृता इति तत्र निर्वेदः संचारिषु गणितः । श्रव्यकाव्ये च नवमस्य शान्तरसस्याङ्गीकारान्निर्वेदो नवमः स्थायीत्युक्तम् ॥

## ॥ संचारी ॥

संचरतीति संचारी । अत्र गत्यर्थाच्चरतेर्णिनिः । समुपसर्गार्थः सङ्गः सम्यगिति च "सम् सङ्गे" इति चिन्तामणिः । संकर्षणशब्दार्थे "सम्यक् कृष्यते वा" इति रामाश्रमीकारः ॥ अत्रार्थद्वयमपि विवक्षितम् ॥

सम्यक्चरणशीलत्वात्सहचारितया तथा ॥
स्थायिनः पोषको भावः संचारीति निगद्यते ॥१॥

संयोगशृङ्गारे रतिस्थायिभावस्य रसदशाप्राप्तौ तत्पर्यन्तं हर्षोत्साहादिसंचारिभावा रतिस्थायिभावेन सह चरन्तीति तेषां सहचारितया सार्थकत्वम् । वियोगशृङ्गारे च रतिस्थायिभावस्य रसदशाप्राप्तौ तत्पर्यन्तं कदाचिदुत्कण्ठाभावोत्पादस्तत्क्षये च कदाचिच्चिन्ताभावोत्पाद इत्येवं यत्र संचारिभावानां स्वच्छन्दं गतागतत्वं तत्र सम्यक्चारितया सार्थकत्वम् ॥ अस्मिन्पक्षे धुरंधरेण फेनबुद्बुदन्याय उक्तः ॥ केनचिद्धुरंधरेण संचारिणो व्यभिचारीति नामान्तरमभिहितम् । विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः ॥ तस्यायमाशयः ।

रत्यादयो नवभावाः शृङ्गारादिस्वस्वरसेष्वेव स्थिरतया वर्तन्त इति स्थायिनाम्नः सार्थकत्वम् । तदितरभावाश्चाभिमुखतया-ऽर्थात्पोषकतया समस्तरसेषु विचरन्तीति व्यभिचारिनाम्नः सार्थकत्वम् । स्वामिनः परिचर्या, पोषणं, समीपे गमनागमनं, सहावस्थानं च सेवककार्यम् । संचारिभावाश्च स्थायिभावस्या-न्तिके गतागतत्वेन सहचारित्वेन च पोषणं कुर्वन्तीति तेषां मिथः स्वस्वामिभावसंबन्धः । उक्तनिमित्तेनैव धुरंधर एषां स्थायिसंचारिसंज्ञां चकार ॥ भगवान् भरतश्च स्थायिभावविषये "यथा नराणां नृपतिः" इत्याह ॥ पूर्वोक्तरीत्या स्थिरतया वर्तमानत्व एव रत्यादयः स्थायिभावाः, इतरे च संचरणधर्मेण तत्पोषकतया संचारिभावाः । अन्यथा तु केवलं भावा एव ॥ क्वचिच्च स्थायिभावा इतररसेषु संचरन्ति चेत्तदा ते तत्रत्यस्थायिभावानां संचारित्वमापद्यन्ते । यथा शृङ्गारे हासोत्साहविस्मया रतिस्थायिभावस्य संचारिणो भवन्ति ॥ पूर्वोक्तदशांस्त्रिमापि रत्यादीनां स्थायिसंज्ञा, इतरेषां च संचारिसंज्ञा तु तेषु स्थायिसंचारित्वयोग्यतात्वान्मञ्जूषागतभूषणन्यायेन बोध्या । मञ्जूषागतभूषणन्यायश्च, कुण्डलादिषु मनुष्यशोभाकरत्वादलंकारत्वम् । तेषां मञ्जूषागतत्वसमये मनुष्यशोभाकरत्वाभावेऽपि शोभाकरत्वयोग्यतात्वादलंकारपदेन व्यवहार इति ॥ उक्ताखिलभावा अग्र उदाहरणेषु स्फुटीकरिष्यन्ते ॥

ग्लानिः शङ्का तथाऽसूया महाराज! मदश्रमौ ॥
आलस्यदैन्यचिन्ताख्या मोहश्चैव स्मृतिर्धृतिः ।१।

व्रीडा चपलताऽऽवेगो हर्षश्च जडता तथा ॥
गर्वो विषाद औत्सुक्यमपस्मारस्ततः परम् ॥२॥
निद्रा स्वप्नः प्रबोधश्चामर्षश्चाप्यवहित्थकम् ॥
उग्रता च मतिर्व्याधिरुन्मादो मरणं तथा ॥३॥
त्रासो वितर्को द्वात्रिंशन्नृप! संचारिणो मताः ॥

नाटके शृङ्गाराद्यष्टरसाङ्गीकारान्निर्वेदस्य संचारिषु गणने त्रयस्त्रिंशत्संख्याः संचारिणः। भोजमहाराजस्तु सरस्वतीकण्ठाभरणे मरणापस्मारावनुक्त्वा स्नेहेर्ष्याभ्यां संख्यामपूरयत्। मम तु मतं, स्नेहो रतेः पर्यायः। अर्वाचीनैः "परोत्कर्षासहनमीर्ष्या, परगुणेषु दोषारोपोऽसूया" इति भेदः प्रदर्शितः। मम मते त्वीर्ष्याया असूयायामन्तर्भावः। कश्चिच्छ्लाघ्यौत्सुक्यावेगान् गदोत्कण्ठासंभ्रमशब्दैरुक्तवान् ॥ मम तु मतं, भावा नैतावन्त एव, किं त्वसंख्येयाः। इदं तु धुरंधरो दिग्दर्शनं चकार। तत्र संख्यायाः नियमकरणमर्वाचां प्रमादः। गर्ववैपरीत्ये दैन्यस्येव स्मृतिवैपरीत्ये विस्मृतेः, उग्रतावैपरीत्ये च दयाभावसंभवात्। इत्यादि ॥

प्रेतैर्वार्तालापं(*)पृच्छन्ती चापि डाकिनीर्मार्गम् ॥
फणिफणपादारोपं विदधत्येषा प्रयाति हृदयेशम् ॥

अत्र परकीयाभिसारिकाया रतिस्थायिभावस्य भयभावः प्रतिस्पर्द्धी निर्भयतासंचारिभावः॥ पश्चात्तापोऽपि भावान्तरम्। तदाश्रयेण धुरंधरोऽनुशयानानायिकां स्वीचकार ॥ एवमन्ये-

(*)कुर्वन्ती इति शेषः ॥

ऽपि स्वयमूह्याः । अद्यावधि रसदशार्हा रत्यादयो नवैव भावा नयनपथमवतीर्णाः । एतदतिरिक्तः कश्चित्स्थायिभावो दृष्टिगोचरतामुपेयाच्चेन्नवसंख्यातोऽधिकस्य स्थायिभावस्य रसस्य स्वाङ्गीकारे न कोपि बाधः । तथैवोक्तभावेषु कस्यचिद्यथासंभवमन्तर्भावेनोक्तसंख्याया न्यूनत्वेपि न काचिद्धानिः । रत्यादीनामुक्तदशायां स्थायित्वेऽपि तादृशदशां विनाऽन्यभावपोषकत्वे तु संचारिसंज्ञाप्राप्तिः ॥

विभावोपि द्विविधः । आलम्बनमुद्दीपनं च । यदालम्बाद्भाव उत्पद्यते तदालम्बनम् । यतो भावस्योत्पत्तिस्तदालम्बनमिति भावः । यथा सुन्दरस्त्रीतः पुरुषस्य, सुन्दरपुरुषतश्च स्त्रिया रतेरुत्पत्तिरिति सुन्दरस्त्रीपुरुषौ रतेरालम्बनविभावः ॥ इत्यादि ॥ भाव उत्कटतया दीप्यतेऽनेनेत्युद्दीपनम् । अत्रोदुपसर्गार्थ औत्कट्यम् । रतेश्चन्द्राद्युद्दीपनम् । कान्तोत्पन्नजनमनःसंबन्धिरतिं चन्द्रादय उत्कटतया दीपयन्तीति ।

यस्यालम्बनतश्चित्ते भाव उत्पद्यते नृणाम् ॥
तत्तस्यालम्बनं प्रोक्तं यशवन्तनरेश्वर! ॥१॥

पुनश्चोद्दीपकं तस्य राजन्नुद्दीपनं स्मृतम् ॥
आलम्बनं रते राजन्! रम्यौ स्त्रीपुरुषौ तथा ॥२॥
घनोपवनचन्द्राद्या उद्दीपनतया मताः ॥

इतरभावानामालम्बनोद्दीपनान्यग्रे वक्ष्यन्ते ॥

# ॥ अथानुभावाः ॥

मनस्युद्भूतभावस्य बोधिका वचननिरीक्षणादिचेष्टा अनुभावसंज्ञिकाः । स्तम्भाद्यष्टानां शरीरविकाराणामपि भावबोधकत्वादनुभावविशेषत्वम् ॥ तन्नामानि यथा—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गश्च वेपथुः ॥
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ १ ॥

एते स्तम्भादयः सात्त्विकसंज्ञाः । स्तम्भश्चेष्टाकरणाशक्तत्वम् ॥ शरीरस्य जाड्यमिति यावत् । यथा—

निकुञ्जप्रान्त एकान्तेऽश्लिक्षत्कान्तां व्रजाधिपः ॥
रोद्धुं वाञ्छति सा चैनं करो नाभूद्वशंवदः ॥ १ ॥

अत्र स्तम्भो नायिकाया व्रीडाभावस्यानुभावः ।
स्वेदो गात्रप्रक्षरणम् । यथा—

प्राणेशं वीक्ष्य विजने स्विन्नाङ्गी सातिराजते ॥
राज्याभिषेकः संजातो मन्ये सखि! मनोभुवः ॥ १ ॥

अत्र स्वेदो नवोढाया भयस्यानुभावः । तत्र मुग्धावस्थाप्राप्तिबलेन परिहासं कुर्वन्त्या सख्या स्मरराज्याभिषेक उत्प्रेक्षितः । यौवनागमे सुरतशङ्कायाः संभवात् ॥
रोमाञ्चो रोमोद्गमः । यथा—

कान्तस्य हस्तकटकं वस्त्राहरणप्रवृत्तमवलोक्य ।
रमणीरोमाञ्चमिषाद्ववर्ष बाणान् मनोभवोऽभीक्ष्णम् ॥ १ ॥

अत्र रोमाञ्चो नायिकायाः सुरतसंबन्धिहर्षस्यानुभावः ॥ पुलकोऽप्ययमेव ॥

स्वरभङ्ग एव गद्गद इत्युच्यते । यथा—

पि पि प्रिय! स स स्वयं मु मु मुखासवं देहि मे
त त त्यज दु दु द्रुतं भ भ भ भाजनं काञ्चनम् ॥
इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥ १ ॥

अत्र स्वरभङ्ग आसवजन्यमदस्यानुभावः ॥

वेपथुः कम्पः । यथा—

कथय कथमुरोजदामहेतो-
र्यदुपतिरेष चिनोतु चम्पकानि ।
भवति करतले यदस्य कम्पः
प्रियसखि! तत्स्मृतिरेव मत्सपत्नी ॥ १ ॥

अत्र कम्पो नायिकासपत्नीस्मृतेरनुभावः ।

वैवर्ण्यं वर्णस्यान्यथाभावः । यथा—

कुक्कुटे कुर्वति क्वाणमाननं श्लिष्टयोस्तयोः ।
दिवाकरकराक्रान्तशशिकान्तामिवाभवत् ॥ १ ॥

अत्र वैवर्ण्यं वियोगस्यानुभावः ।

अश्रु नेत्रसलिलप्रस्रवणम् ॥ यथा—

विसृज विसृज चित्त! दुःखधारा-
मयमुपकण्ठमुपागतो मुकुन्दः ।
इति कथयितुमश्रुबिन्दुरच्छो
निपतति वक्षसि पक्ष्मलायताक्ष्याः ॥ १ ॥

अत्राश्रु संयोगस्यानुभावः ॥

प्रलयश्चेष्टाज्ञाननिराकृतिः ॥ प्रकृष्टो लयः प्रलयः । यथा—

त्वद्वीक्षणस्य समयान्न चलति वेल्लति न चेतनास्त्यस्याः
निर्वातसद्मदीपशिखेव सम्यक् विभाति सा बाला ॥ १ ॥

अत्र प्रलयः परकीयायाः पूर्वानुरागस्यानुभावः ॥ स्तम्भे चेष्टाकरणज्ञाने सत्यपि शरीरस्य जाड्याच्चेष्टा न भवति । "निकुञ्जप्रान्त—" इत्यत्र नायिकायाः करेण कृष्णभर्त्सनेऽभिलषितेऽपि स्तम्भवशात्करोत्थानाशक्तत्वम् ॥ अत्र तु चेष्टाकरणज्ञानस्य प्यभाव इति स्तम्भादस्य भेदः ॥

अनुभावास्तु चेष्टाः स्युर्भ्रूभङ्गवचनादयः ॥
अनुभावविशेषाः स्युः सात्त्विका अपि भूपते! ॥ १ ॥
भूप! सजीवशरीरं सत्त्वं जातास्ततो हि सात्त्विकाः ॥
प्रेरणमिहापि मनसः पुरस्कृतिर्वै शरीरस्य ॥ १ ॥

सजीवशरीरं सत्त्वम् । उक्तं हि चिन्तामणौ "सत्त्वं जन्तौ । जन्तुः प्राणिनि" इति. ॥ सत्त्वाज्जाताः सात्त्विकाः । तदुक्तं

केनचिन्महाशयेन "सजीवशरीरं सत्त्वम्। सत्त्वे भवाः सात्त्विकाः" इति ॥ अत्र स्तम्भादिषु रूढिः। स्तम्भस्वेदादीनां सात्त्विकसंज्ञाकरणे धुरंधरस्यायमाशयः, मनसि रागद्वेषाद्युत्पत्तौ वचनकटाक्षभ्रूभङ्गादिचेष्टाः प्राणिनामिच्छानुकूलं भवन्ति। चेष्टाश्च क्रियारूपाः। क्रियाशब्दार्थश्च क्रियते इति। अत एव मनोनुकूलं कर्तुं रोद्धुमपि च शक्यन्ते। तत्र मनसोऽप्रवर्तित्वात्। स्तम्भस्वेदादयस्तु प्रायो मनोनुकूलं न वा कर्तुं शक्यन्ते, न वा रोद्धुमपीति यत्रतत्रोदाहरणेषु स्पष्टतरम् ॥ एतेषु शरीरस्याप्रवर्तित्वमिति शरीरस्य सजीवेतिविशेषणमुक्त्वा शरीरपुरस्कारेण धुरंधर एतेषां सात्त्विकसंज्ञां चकार ॥ वचनकटाक्षाद्यनुभावेभ्यः सात्त्विकभावानामेतदेव वैशिष्ट्यम् ॥ कतिचनार्वाचीनाः परस्पररतावेव शृङ्गाररसं मन्यन्ते। तेषामयमाशयः। यत्र नायकस्यैव नायिकाविषया नायिकाया एव वा नायकविषयैकतो रतिस्तदपेक्षयैकतरस्यान्यतरान्तःकरणनिष्ठनिजरतिध्यानेन वासनायुक्तनिजान्तःकरणे या रतिः सोत्कृष्टतरा भवति। तन्मतानुसारेण च तादृशरतेरनुभावानां वचनकटाक्षादीनामपि संभवः। तथापि तादृशरतिबोधका अनुभावविशेषास्तु स्तम्भादयः सात्त्विका एव। तेषामितरानुभावेभ्य उत्कृष्टत्वात्। उक्तार्वाचीनमतानुगामी विद्यानाथः प्रतापरुद्रीये "परगतसुखादिभावनया भावितान्तःकरणत्वं सत्त्वम्" इत्याह ॥ अत्र सामान्यतया भावप्रकरणमिति विद्यानाथेन "सुखादिभावनया" इत्यत्रादिपदमुक्त्वाऽन्यभावा अपि संगृहीताः ॥ मम तु मतं, एकतो रतौ परस्प-

ररतौ च न्यूनाधिकता नास्तीत्यनुभवसिद्धम्। यथा—

महाऽनिर्वचनीयोऽसौ रतेर्हि महिमा सखि!॥

एकतो रतावपि स्तम्भादयो दृश्यन्ते। यथा—

यदाप्रभृति साऽपश्यच्छिखिपिच्छधरं हरिम्॥
तदाप्रभृति पाषाणप्रतिमेव बभूव सा॥

अत्र केवलं नायिकायाः पूर्वानुरागः। न च परस्परतावेव शृङ्गाररसनियमः। एतच्चाग्रे शृङ्गाररसप्रकरणे स्फुटीभविष्यति। किंचान्यभावेपूक्तव्यवस्थाया अव्याप्तिः।

यथा—

पलायितुमशक्ता ये तेऽभवंश्चित्रवत्स्थिताः॥
जीवन्महारणे तत्र सूतपुत्रो विलोक्यते॥ १॥

अत्र द्रोणस्य रात्रियुद्धं कौरवसेनासुभटानां भयस्थायिभावस्यालम्बनविभावः। नानास्त्रशस्त्रसंपात उद्दीपनविभावः। त्रासोद्वेगादयः संचारिभावाः। स्तम्भः सात्त्विकोऽनुभावः। अत्र "पलायितुमशक्ताः" इत्युक्तेर्बहवो भटाः पलायिताः, अन्ये च पलायनेच्छवस्तथापि शरीरस्य जडत्वात्पलायनासमर्थाश्चित्रवन्निष्क्रिया बभूवुः। भयानकरसे परगतभयभावनाया असंभवः। सेनान्यां द्रोणे तत्सेनायां च शत्रुसेनाभयलेशस्याप्यभावात्। एवमन्यरसेष्वपि स्वयमूह्यम्। सत्त्वशब्दार्थे विद्यानाथस्य प्रमादः॥ स्त्रीणां रतिभावबोधकलीलादिदशचेष्टाविशेषा धुरंधरेण हावसंज्ञया भणिताः। हाव-

शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥ १ ॥

इति ॥

मम तु मतं, केनचिदविरोधिभावेन कस्यचिद्भावस्य तिरोभावे विरोधिभावेन तिरस्कारे वा भावस्य गौणत्वम्। संचारिभावानां कस्यचित्तथात्वे तु तस्य संचारिसंज्ञाया अभावान्न भावत्वमपि । स्थायिभावानां कस्यचित्तथात्वे तु तस्य गौणत्वापत्त्या स्थायिसंज्ञाया अभावेपि संचारिपदप्राप्तिः ॥ स्थायिसंचारिणोः पृथक्पदार्थत्वात् ॥

कठोरकुचसंस्पर्शं यो न सेहे कथं भवान् ॥
कुन्तपातान् रणे नागदन्तघातांश्च सोढवान् ॥ १ ॥

अत्र वन्हिप्रवेशं विधाय सहगमनप्रवृत्तपतिव्रताया रणाङ्गणप्राणप्रदपतिं प्रति परिहासः ॥ स च तस्या रतिभावस्यानुभावः । अत्रोक्तपतिव्रताया रतिभावो विरोधिशोकभावतिरस्कृतत्वाद्गौणतया न स्थायी । शृङ्गारसदशां न प्राप्त इत्यर्थः । किं तु संचारी संजातः । शोकस्थायिभावश्च रतिभावातिरस्कृतत्वात्करुणरसत्वं प्राप्तः ॥ अत्र सहृदयहृदयमेव साक्षि ॥

हस मा क्षणे क्षणे सखि! तव रदकान्त्याः प्रभूतचाकचक्यात् ॥

भवति भवत्या वदनं नायकदृग्गोचरं कृच्छ्रात् ॥

अत्र दम्पत्योः समक्षं सखी शिक्षामिषेण नायकस्नेहं संस्तौति । अयं क्षणमात्रमपि भवददर्शनं न सहत इति ॥ अत्र रतिहासौ परस्परमविरुद्धौ । तत्र हासभावेनातिरोहितस्य रतिभावस्य रसदशाप्राप्तिपर्यन्तं स्थिरतया वर्तमानत्वात्स्थायित्वम् ॥ तत एवोक्तरतेः शृङ्गाररसत्वम् ॥ हासस्य च रतिभावातिरोहितत्वात्संचारित्वम् ॥

गर्जेद्वारिदवर्षश्चञ्चच्चपला सरित्तरुत्रोटः ॥
तेनातिभीतराधाऽश्लिष्यत्कृष्णं निकुञ्ज एकान्ते ॥१॥

अत्र रतिभयभावौ परस्परं विरुद्धौ । तत्र भयेनातिरस्कृतस्य रतिभावस्य रसदशाप्राप्तिपर्यन्तं स्थिरतया वर्तमानत्वात्स्थायित्वम् ॥ तत एवोक्तरतेः शृङ्गाररसत्वम् । भयस्य च रतिभावतिरस्कृतत्वात्संचारित्वम् ॥ दम्पतिविषया देवादिविषया च रतिः परस्परं सजातीया ॥ तथैव युद्धवीरदानवीरदयावीरधर्मवीरादयो मिथः सजातीयाः । रतिहासशोकादयो भावा मिथो विजातीयाः । ननु स्त्रीपुरुषोत्पन्नां रतिं विभावादयः स्वादूकुर्वन्ति, स चास्वादो यस्यं मनसि तादृशरतेरुद्भवस्तस्यैव गोचरः । एवं, हासादिष्वपि । तत्रानन्दप्रदं वस्तु स्वादु, अनानन्दप्रदं च वस्त्वस्वाद्विति प्रसिद्धम् । एवं च रतिहासादीनां स्वादुत्वेपि भयशोकादेः स्वादुत्वं कथमिति चेन्न । वस्तुत आनन्दप्रदत्वमेव न स्वादुधर्मः । स्वादुधर्मस्तु रसनाबोध्यः खाद्यवस्तुनो मधुराम्लत्वादिः ॥ विधिसृष्टौ

मधुराम्लकटुकषायतिक्तपटुभेदात्षड्रसाः । मधुरः शर्करादौ । अम्लश्चिञ्चादौ । कटुर्मरिचादौ । कषायो हरीतक्यादौ । तिक्तं निम्बादौ । पटुर्लवणादौ । तथा कविसृष्टौ शृङ्गारादयो नवरसाः । तदास्वादश्च मनोबोध्यः । शृङ्गाररसे रतेरास्वादः । भयानकरसे भयस्यास्वादः । एवमन्येष्वपि । सुखदवस्तुनि सुखस्यास्वादः । दुःखदवस्तुनि दुःखस्यास्वादः ॥

शृङ्गारादिरसास्तु वर्णनीयैरास्वाद्यन्ते ॥ दृश्यकाव्यनाटकप्रेक्षकाणां गद्यपद्यमयश्रव्यकाव्यश्रोतॄणां सामाजिकानां तु चमत्कारो भवतीत्यग्रे स्फुटीकारिष्यते ॥ ननु विभावादयो मिलित्वा स्थायिभावं स्वादूकुर्वन्ति, तत्र नायिकाया रत्युत्पादे नायकरूपालम्बनस्य, चन्द्रादेरुद्दीपनस्य, उत्कण्ठादिसंचारिभावस्य चास्वादो रतिभावेन सह नायिकामनोगोचरः खलु । तथापि नायिकाकटाक्षादिनिजानुभावा नायिकया कथमास्वाद्येरन् । नायिकानुभावानां नायिकारतिबोधकतया तदास्वादस्य तु नायकविषयत्वात् । तत्र नायिकानुभावास्तु नायकस्योद्दीपनानि भवन्तीति चेच्छृणु । केवलं प्रलयसात्त्विकस्य परिपक्वदशायां सायुज्यमुक्तिवन्न केवलमनुभावानामेव, अपि तु भावानां विभावानां च सर्वेषामपि भानाभावः । अन्यत्र तु वचनादयः स्वसामान्यानुभावाः स्तम्भादयः स्वविशेषानुभावाश्च स्वस्य भानविषया भवन्त्येवेत्यनुभवसिद्धम्॥ यथा स्वनयनवदनादीनां स्वस्यादृश्यत्वेऽपि दर्पणाद्यनुभूतस्वसमस्तावयवसंबन्धिविशिष्टरूपेण नायिका रूपगर्विता भवति। सांमुख्ये नायिकानुभावा नायकस्योद्दीपनानि भवन्तु नाम ।

तत्र नायिकानुभावा नायकेनोद्दीपनरूपतयाऽऽस्वाद्यन्ते । नायिकया तु ते स्वानुभावाः स्थायिभावेन सहानुभावरूपतयैवास्वाद्यन्ते ॥

इदानीं भावानां रसानां च स्वरूपोदाहरणानि प्रदर्श्यन्ते ॥

## अथ रतिभावः ॥

रतिः प्रीतिः ।

**मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ॥**

यथा—

रत्नाकरोऽस्ति सदनं गृहिणी च पद्मा
किं देयमस्ति भवते जगदीश्वराय ॥
राधागृहीतमनसेऽमनसे च तुभ्यं
दत्तं मया निजमनस्तदिदं गृहाण ॥ १ ॥

अत्र भक्तस्य रतेरालम्बनविभावः कृष्णावतारः । तस्य तादृशगृहादिकमुद्दीपनविभावः।उत्साहस्वरादयः संचारिभावाः। प्रार्थनावचनमनुभावः । देवरतिभावोऽयम् ॥

यथावा—

गुणान् गृह्णाति यो नित्यं दोषांस्तु न कदाचन ॥
प्रतिजन्म भवेन्नाथो यशवन्तधराधिपः ॥ १ ॥

मधुराम्लकटुकषायतिक्तपटुभेदात्षड्रसाः । मधुरः शर्करादौ । अम्लश्चिञ्चादौ । कटुर्मरिचादौ । कषायो हरीतक्यादौ । तिक्तं निम्बादौ । पटुर्लवणादौ । तथा कविसृष्टौ शृङ्गारादयो नवरसाः । तदास्वादश्च मनोबोध्यः । शृङ्गाररसे रतेरास्वादः । भयानकरसे भयस्यास्वादः । एवमन्येष्वपि । सुखदवस्तुनि सुखस्यास्वादः । दुःखदवस्तुनि दुःखस्यास्वादः ॥

शृङ्गारादिरसास्तु वर्णनीयैरास्वाद्यन्ते ॥ दृश्यकाव्यनाटकप्रेक्षकाणां गद्यपद्यमयश्रव्यकाव्यश्रोतॄणां सामाजिकानां तु चमत्कारो भवतीत्यग्रे स्फुटीकरिष्यते ॥ ननु विभावादयो मिलित्वा स्थायिभावं स्वादूकुर्वन्ति, तत्र नायिकाया रत्युत्पादे नायकरूपालम्बनस्य, चन्द्रादेरुद्दीपनस्य, उत्कण्ठादिसंचारिभावस्य चास्वादो रतिभावेन सह नायिकामनोगोचरः खलु । तथापि नायिकाकटाक्षादिनिजानुभावा नायिकया कथमास्वाद्येरन् । नायिकानुभावानां नायिकारतिबोधकतया तदास्वादस्य तु नायकविषयत्वात् । तत्र नायिकानुभावास्तु नायकस्योद्दीपनानि भवन्तीति चेच्छृणु । केवलं प्रलयसात्त्विकस्य परिपक्वदशायां सायुज्यमुक्तिवन्न केवलमनुभावानामेव, अपि तु भावानां विभावानां च सर्वेषामपि भानाभावः । अन्यत्र तु वचनादयः स्वसामान्यानुभावाः स्तम्भादयः स्वविशेषानुभावाश्च स्वस्य भानविषया भवन्त्येवेत्यनुभवसिद्धम्॥ यथा स्वनयनवदनादीनां स्वस्यादृश्यत्वेऽपि दर्पणाद्यनुभूतस्वसमस्तावयवसंबन्धिविशिष्टरूपेण नायिका रूपगर्विता भवति । सांमुख्ये नायिकानुभावा नायकस्योद्दीपनानि भवन्तु नाम ।

तत्र नायिकानुभावा नायकेनोद्दीपनरूपतयाऽऽस्वाद्यन्ते। नायिकया तु ते स्वानुभावाः स्थायिभावेन सहानुभावरूपतयैवास्वाद्यन्ते ॥

इदानीं भावानां रसानां च स्वरूपोदाहरणानि प्रदर्श्यन्ते ॥

# अथ रतिभावः ॥

रतिः प्रीतिः।

मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ॥

यथा—

रत्नाकरोऽस्ति सदनं गृहिणी च पद्मा
किं देयमस्ति भवते जगदीश्वराय ॥
राधागृहीतमनसेऽमनसे च तुभ्यं
दत्तं मया निजमनस्तदिदं गृहाण ॥ १ ॥

अत्र भक्तस्य रतेरालम्बनविभावः कृष्णावतारः। तस्य तादृशगृहादिकमुद्दीपनविभावः।उत्साहस्वरादयः संचारिभावाः। प्रार्थनावचनमनुभावः। देवरतिभावोऽयम् ॥

यथावा—

गुणान् गृह्णाति यो नित्यं दोषांस्तु न कदाचन ॥
प्रतिजन्म भवेन्नाथो यशवन्तधराधिपः ॥ १ ॥

अत्र राजराजेश्वरः कविरतेरालम्बनविभावः । राजराजेश्वरस्योक्तगुणा उद्दीपनविभावः । हर्षधृती संचारिभावौ । परमेश्वरं प्रति प्रार्थनावचनमनुभावः ॥ राजरतिभावोऽयम् ॥ एवं गुरुरत्यादेरुदाहरणानि स्वयमूह्यानि । देवतादिविषया रतिः कदाचिदपि रसदशां न प्राप्नोतीति सदा भावमात्रम् । केवलं कान्ताविषयरतेरेव रसदशार्हत्वात् ॥

यथावा—

गजसिंहो गुणान् रूपमाकर्ण्याप्सरसां नृपः ।
यत्र तत्र कृतोत्साहो युद्धं कर्तुं प्रवर्तते ॥ १ ॥

अत्र पूर्वानुरागाख्यो वियोगः । मरुधराधीशगजसिंहमहाराजस्याप्सरःश्रवणदर्शनमालम्बनविभावः । स्वर्गवासलाभ उद्दीपनविभावः । उत्कण्ठोत्साहौ संचारिभावौ । यत्र तत्र युद्धकरणमनुभावः ॥ अत्राप्सरोमिलनार्थं यत्र तत्र युद्धकर्तृगजसिंहनृपस्य शत्रुविषयक्रोधभावस्तद्विरोधिरतिभावेन तिरस्कृत इति क्रोधभावस्य नोल्लासः ॥ अत्र गजसिंहस्य कान्ताविषयकरतिभावे तरसकलसामग्र्यां च सत्यामप्युक्तरतिभावो रसदशामप्राप्त इति भावमात्रम् । यथा व्यञ्जनादिसकलसामग्रीसद्भावेऽपि क्वचित्तादृशयाथातथ्याभावाद्भोज्यं तादृशमनिर्वचनीयं स्वादु न भवति । भावस्य तादृशानिर्वचनीयस्वादुत्वे तु मनो वेद्यान्तरसंपर्कशून्यं भवति । मनसस्तदाकारवृत्त्याऽन्यत्किंचिदपि न ज्ञायते इति भावः । इह तु गजसिंहस्याप्सरोविषया रतिस्तादृशस्वादुत्वमप्राप्तेति न रसदशार्हा ।

अस्यान्तरमग्रे शृङ्गाररसोदाहरणे स्फुटीभविष्यति ॥ यथा भोज्यास्वादस्य साक्षिणी जिह्वा । तथा स्थायिभावास्वादस्य साक्षि सहृदयहृदयम्॥एवं हासभावादिष्वपि स्वयमूह्यम् ॥१॥

# अथ हासभावः ॥

चेतसो विकासो हासः ॥

यथा–

भूपावरङ्गसमये मिलिता हि मुल्लां–
काजीमुखाः सकललोकममुं स्वधर्मे ॥
कर्तुं सभास्थितजनैर्विमृशन्ति तस्मिन्
कालेऽधरो विकसितो मरुवल्लभस्य ॥ १

अत्र पूर्वयशवन्तसिंहमहाराजहासभावस्य काजीमुल्लांसंज्ञका यवनाचार्या आलम्बनविभावः। आर्यजनयवनीकरणार्थं तेषां मिलित्वा मन्त्रणमुद्दीपनविभावः। गर्वासूये व्यभिचारिभावौ । अधरविकासोऽनुभावः ॥ २ ॥

# अथ शोकभावः ॥

प्रियमरणसंवन्धि चेतसो वैक्लव्यं शोकः ॥

यथा—

अत्र राजराजेश्वरः कविरतेरालम्बनविभावः। राजराजेश्वरस्योक्तगुणा उद्दीपनविभावः। हर्षधृती संचारिभावौ। परमेश्वरं प्रति प्रार्थनावचनमनुभावः॥ राजरतिभावोऽयम्॥ एवं गुरुरत्यादेरुदाहरणानि स्वयमूह्यानि। देवतादिविषया रतिः कदाचिदपि रसदशां न प्राप्नोतीति सदा भावमात्रम्। केवलं कान्ताविषयरतेरेव रसदशार्हत्वात्॥

यथावा—

गजसिंहो गुणान् रूपमाकर्ण्याप्सरसां नृपः।
यत्र तत्र कृतोत्साहो युद्धं कर्तुं प्रवर्तते॥ १॥

अत्र पूर्वानुरागाख्यो वियोगः। मरुधराधीशगजसिंहमहाराजस्याप्सरःश्रवणदर्शनमालम्बनविभावः। स्वर्गवासलाभ उद्दीपनविभावः। उत्कण्ठोत्साहौ संचारिभावौ। यत्र तत्र युद्धकरणमनुभावः॥ अत्राप्सरोमिलनार्थं यत्र तत्र युद्धकर्तृगजसिंहनृपस्य शत्रुविषयक्रोधभावस्तद्विरोधिरतिभावेन तिरस्कृत इति क्रोधभावस्य नोल्लासः॥ अत्र गजसिंहस्य कान्ताविषयकरतिभावे तत्सकलसामग्र्यां च सत्यामप्युक्तरतिभावो रसदशामप्राप्त इति भावमात्रम्। यथा व्यञ्जनादिसकलसामग्रीसद्भावेऽपि क्वचित्तादृशयाथातथ्याभावान्नोऽयं तादृशमनिर्वचनीयं स्वादु न भवति। भावस्य तादृशानिर्वचनीयस्वादुत्वे तु मनो वेद्यान्तरसंपर्कशून्यं भवति। मनसस्तदाकारत्वादन्यत्किंचिदपि न ज्ञायते इति भावः। इह तु गजसिंहस्याप्सरोविषया रतिस्तादृशस्वादुत्वमप्राप्तेति न रसदशार्हा।

अस्यान्तरमग्रे शृङ्गाररसोदाहरणे स्फुटीभविष्यति ॥ यथा भोज्यास्वादस्य साक्षिणी जिह्वा। तथा स्थायिभावास्वादस्य साक्षि सहृदयहृदयम्॥एवं हासभावादिष्वपि स्वयमूह्यम् ॥१॥

# अथ हासभावः ॥

चेतसो विकासो हासः ॥

यथा–

भूपावरङ्गसमये मिलिता हि मुल्लां–
काजीमुखाः सकललोकममुं स्वधर्मे ॥
कर्तुं सभास्थितजनैर्विमृशन्ति तस्मिन्
कालेऽधरो विकसितो मरुवल्लभस्य ॥ १ ॥

अत्र पूर्वयशवन्तसिंहमहाराजहासभावस्य काजीमुल्लांसंज्ञका यवनाचार्या आलम्बनविभावः। आर्यजनयवनीकरणार्थं तेषां मिलित्वा मन्त्रणमुद्दीपनविभावः। गर्वासूये गम्यसंचारिभावौ। अधरविकासोऽनुभावः॥ २ ॥

# अथ शोकभावः ॥

प्रियमरणसंबन्धि चेतसो वैक्लव्यं शोकः ॥

यथा—

धर्मध्वजस्य दण्डो भग्नो रिक्तं नृणां सुखस्यौकः ॥
माननृपमानसाख्यं कविहंसानां सरश्च संशुष्कम् ॥ १ ॥

अत्र वक्तुः शोकभावस्य राजराजेश्वरमानसिंहस्वर्गगमनमालम्बनविभावः । महाराजस्य धर्मवत्ताप्रजापालनोदारतादिगुणा उद्दीपनविभावः । स्मृतिविषादादयः संचारिभावाः । वचनमनुभावः ॥ ३ ॥

## अथ क्रोधभावः ॥

तैक्ष्ण्यजागृतिः क्रोधः ॥

यथा—

साँभपुरे सैदभटैः सुयुद्धं
कुर्वन्प्रदृष्टो ह्यजमल्लभूपः ॥
कल्पान्तरुद्रीयललाटचक्षु-
स्तुल्यज्वलन्नेत्रयुगेन युक्तः ॥ १ ॥

अत्राजितसिंहमहाराजक्रोधभावस्य यवना आलम्बनविभावः । तत्कर्तृकयुद्धक्रियोद्दीपनविभावः । गर्वासूयोत्साहादयः संचारिभावाः । नयनारुणिमाऽनुभावः ॥ ४ ॥

# अथोत्साहभावः ॥

कर्मसु सुकरप्रत्यय उत्साहः इष्टसिद्धिनिश्चयो वा ॥

कार्यसिद्धौ तु हर्षः ॥

यथा—

प्रसन्नचक्षुर्वदनः स्फुरद्भुज
उदारचेता यशवन्तभूपतिः ॥
यथा विवाहोत्सवमण्डपे स्थित-
स्तथाविधः संप्रति लक्ष्यते रणे ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहस्याहं जेष्याम्येवेत्येवंविधोत्साहभावस्य स्वबाहुबलमालम्बनविभावः ॥ युद्धसंबन्धिवादित्रादिर्गम्य उद्दीपनविभावः । मदधृतिस्मृतिहर्षादयः संचारिभावाः । चक्षुर्मुखविकासबाहुस्फुरणादिकमनुभावः ॥ ५ ॥

# अथ भयभावः ॥

अनागतप्रतिकूलप्रतिसंधानं भयम् ॥

भयप्राप्तौ तु विषादः ॥

यथा—

पुरैव नारीनयनानि विद्विषां
त्रसन्मृगीलोचनसाम्यभाञ्जि ॥
मरुस्थलाधीश! वनस्थितौ तु
कथं क्षमा वर्णयितुं कवीशाः ॥१॥

अत्र सिंहः स्यात्, अत्र चौरः स्यादित्येवंविधरिपुरमणीविचाररूपभयभावस्य निर्जनवनमालम्बनविभावः ॥ वनस्य विकटत्वादिकमुद्दीपनविभावः । चिन्तात्रासादयः संचारिभावाः । नयनचाञ्चल्यमनुभावः ॥ सिंहादेर्दर्शनाक्रमणावधि भयम् । प्रहारे तु विषादः ॥ ६ ॥

# अथ जुगुप्साभावः ॥

जुगुप्सा घृणेत्यनर्थान्तरम् ॥

वस्तुनो दुर्गन्धादिदोषजन्याऽरुचिर्जुगुप्सा ॥

यथा—

भूमिं बहुनृपैर्भुक्तां मत्वा मानमहीपतिः ॥
त्यक्त्वा गृहीत्वा संन्यासं प्रतस्थे रैवताचलम् ॥ १ ॥

अत्र राजराजेश्वरमानसिंहस्य भूमिविषयजुगुप्साभावस्य भूमेः कुलटात्वमालम्बनविभावः । तदितरभूभोक्तृनिर्मिततडागादिसंभोगचिन्हानि गम्य उद्दीपनविभावः । मति-

स्मृतिव्रीडानिर्वेदा गम्यसंचारिभावाः । तादृशभूमित्यागोऽनुभावः ॥ ७ ॥

# अथ विस्मयभावः ॥

## अपूर्वालौकिको मनोविषयश्चमत्कारो विस्मयः ॥

अस्याद्भुताश्चर्येति पर्यायान्तरम् ॥ यथा—

मरुपत्यसितासिलता यशःप्रसूनं सितं शुचि च सूते ।
भुवनत्रयाय यद्वै सर्वर्तुषु दिशति शुभगन्धम् ॥१॥

अत्र शुचिपदेनालेरनुच्छिष्टत्वं सूच्यते ॥ अत्र कवेर्विस्मयभावस्य राजराजेश्वरासिलताया यशःसितकुसुमोत्पाद आलम्बनविभावः । उक्तकुसुमस्य भ्रमरानुच्छिष्टत्वादिगुणा उद्दीपनविभावः। रतिहर्षवितर्काः संचारिभावाः। तादृशखड्गवृत्तान्तज्ञातुः कवेर्वचनमुक्तं, नेत्रविकासश्च गम्योऽनुभावः ॥ ८ ॥

# अथ निर्वेदभावः ॥

निर्वेदो वैराग्यम् ।

जगतो दुःखतस्तत्त्वज्ञानाद्वा मनुजाधिप! ॥
औदासीन्यं प्रपञ्चाद्यन्निर्वेदस्तु निगद्यते ॥ १ ॥

यथा—

प्रासादं मणिनिर्मितं कुटिमिव त्यक्त्वा तृणैर्निर्मितां
राज्यं दन्तितुरङ्गमप्रभृतिभिर्वृद्धं च लोष्ठोपमम् ॥
हित्वा धर्मविलोपनस्य समये मानो महीवल्लभो
यातुं रैवतमुद्यतो मुनिरिव ध्यायन्परं चेतसा ॥ १ ॥

अत्र राजराजेश्वरमानसिंहनिर्वेदभावस्य धर्मक्षतिप्रसङ्ग आलम्बनविभावः। मणिनिर्मितप्रासादादेरल्पकालस्थायित्वमुद्दीपनविभावः। मतिधृतिजुगुप्साचपलताः संचारिभावाः। तादृशराज्यपरित्यागोऽनुभावः ॥ ६ ॥

रसदशाप्राप्त्यर्हा रत्यादयो भावा नवैव। इतरे ग्लान्यादयस्तु केवलं भावा एव। न तु रसदशार्हाः।

## अथ ग्लानिभावः ॥

---

ग्लानिरित्यत्र ग्लैधातोर्भावे क्तिन्। ग्लै म्लै हर्षक्षये ॥

हर्षक्षयं महाराज! ग्लानिमाह धुरंधरः ॥

यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ॥
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥१॥

अत्रानुशयानानायिकायाः संकेतस्थल आत्मनोऽप्राप्तिः, प्रियस्य च तत्र गत्वा पुनरागमनं प्रियसमागमहर्षक्षयस्या-

लम्बनविभावः ॥ कृष्णकरे संकेतवानीरमञ्जरीदर्शनमुद्दीपनविभावः । विषादपश्चात्तापौ संचारिभावौ । म्लानत्वरूपवैवर्ण्यमनुभावः ॥ भोजमहाराजो ग्लानेः

"बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः"

इदं लक्षणमाह ॥ अत्र भावप्रकरणत्वान्मनोबलहानि विवक्षिता ॥ महाराजानुयायी काव्यप्रदीपकारः

"श्रमग्लान्योर्विभेदं तु चक्रे कारणकार्यता ॥
श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे ॥१॥"

इति श्रमग्लान्योर्भेदमाह ॥ मम तु मतं, अर्वाचामयं प्रमादः । भावस्य कारणं तु विभावसंज्ञम् । तस्य भावत्वाभावात् ॥ किं च धर्मस्य न्यूनाधिकत्वमात्रेण वस्तुनो भेदो न भवेत् ॥ इहास्मद्दर्शितधात्वर्थ एव समीचीनः ॥ १० ॥

# अथ शङ्काभावः ॥

---

## अनिष्टार्थागमोत्प्रेक्षां शङ्कामाहुर्मनीषिणः ॥

चन्द्रस्य दर्शने "इन्दुर्वाऽऽननं वा" इति विचारे तु चन्द्रमुखयोरुभयोरपि संदेहादुभयकोटिकसंदेहः। चन्द्रं पश्यतः "किमयं चन्द्रः?" इति, मुखं पश्यतः "किमिदं मुखम्?" इति विचारे तु संदेहस्यैकैकनिष्ठत्वादेककोटिकसंदेहः ॥ तर्कोहशङ्कादिशब्दा एककोटिकसंदेहद्योतकाः । शङ्काशब्दो भयस्य

तर्कनायाश्च द्योतकः। उत्प्रेक्षालंकारे तु केवलं तर्कनार्थकः॥ वक्ष्यमाणोत्प्रेक्षाविषयिणी मनोवृत्तिरर्थाद्भावो वितर्कः। वितर्के केवलं तर्कनामात्रम्। तर्कना च प्रतिभाविलासः॥ तदेवोक्तं भोजमहाराजेन–

"ऊहो वितर्क इत्युक्तः पदार्थेषु यथामति॥" इति॥

इह तु भयतर्कयोर्मिश्रणं भयपुरस्कारेण ज्ञेयम्। तदुक्तं भोजमहाराजेन—

"अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः॥"

इति॥

इदमेव शङ्कावितर्कभावयोर्वैलक्षण्यम्। भयं निश्चयात्मकम्, शङ्का तु संदेहात्मिकेति भयाद्भेदः॥

यथा–

मानः किं ज्वलयेत्प्रतापदहनज्वालाभिरर्कान्वयः
किं वा मत्तगजैर्विघटय्य दलयेत्किंवा खुरैश्चूर्णयेत्॥
अश्वानामुत वाहयेदरिवधूबाष्पैर्वसिष्ठो मुनि-
र्यो मां स्थापितवान्स चास्पदमिहेत्येषोऽर्बुदः शोचति॥

अत्रार्बुदाचलशङ्काभावस्य तत्स्वामिचाहुमाननरेश्वरं प्रति राजराजेश्वरमानसिंहस्य कोप आलम्बनविभावः॥ राजराजेश्वरस्य सेनावैभव उद्दीपनविभावः॥ चिन्ताधृतिविषादाः संचारिभावाः। निर्झररूपाश्रुपातः प्रतीयमानोऽनुभावः॥ ११॥

# अथासूयाभावः ॥

परोत्कर्षासहिष्णुत्वमसूयामूचिरे बुधाः ॥

ईर्ष्याऽसूयेतिपर्यायान्तरम् ॥

यथा—

कवयः करिराजत्वमीयुरित्यभिवाञ्छता ॥
यशवन्तनृपेणैषां गेहे गेहे गजाः कृताः ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहनिष्ठेन्द्रविषयाऽसूयाभावस्ये-न्द्रसंबन्धिगजाधिपत्यमहिमाऽऽलम्बनविभावः ॥ इन्द्रस्य वदान्यत्वं गम्य उद्दीपनविभावः । गर्वोत्साहौ संचारिभावौ । इन्द्रस्य मानमर्दनार्थं कवीश्वराणां प्रतिगृहं गजसंपत्तिसंपादनेन तेषां गजाधिपतित्वविधानमनुभावः ॥ १२ ॥

# अथ मदभावः ॥

"मदी हर्षे" इत्यस्मादप् । धातूनामनेकार्थत्वादत्र हर्षमोहयोर्मिश्रितत्वं मदशब्दार्थः ।

मदस्तु संगमो मोहानन्दयोर्मदिरादिना ॥

मदिरादिमदावस्थायां मोहानन्दयोः संगमोऽनुभवसिद्धः ॥

यथा—

अव्याहताज्ञो विख्यातकीर्तिः श्लाघ्यकुलोद्भवः ॥
घूर्णयन्नयनद्वन्द्वं वर्तते मरुवल्लभः ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहमदभावस्य विख्यातकीर्तित्वमालम्बनविभावः ॥ श्लाघ्यकुलत्वादिकमुद्दीपनविभावः ॥ गर्वहर्षौ गम्यसंचारिभावौ । नयनघूर्णनमनुभावः ॥ १३ ॥

## अथ श्रमभावः ॥

---

क्रियातिशयजः खेदः श्रमः स्यान्मरुभूपते ! ॥

यथा—

असंख्येयगुणानस्य यशवन्तमहीपतेः ।
वर्णयन्तः कविश्रेष्ठा अनुद्धृतगिरोऽभवन् ॥ १ ॥

अत्र कविवराणां श्रमभावस्य राजराजेश्वरयशःपाठवाहुल्यमालम्बनविभावः । स्मृतिर्गम्यसंचारिभावः । वाग्रोधोऽनुभावः । अत्रोद्दीपनाभावः । क्वचिदुद्दीपनाद्यन्यतराभावेपि रमणीयताऽयापत्तौ तु न काचिद्धानिः । एवमन्यत्रापि ज्ञेयम् । अस्मिन्विषये वैयाकरणैरप्युक्तम्– " एकदेशविकृतमनन्यवत्" इति ॥ १४ ॥

## अथालस्यभावः ॥

---

सामर्थ्ये सत्यनुत्साहोऽवश्यकर्तव्यकर्मणि ।

आलस्यं प्रोच्यते प्राज्ञैर्यशवन्तनरेश्वर! ॥१॥

यथा—

भूमावद्य गुणग्राही यशवन्तनरेश्वरः ॥
उत्थाय पठ्यतां बाला वदन्तीत्थं कवीश्वराः ॥१॥

अत्र कविबालानामालस्यभावस्य गुणग्राहिराजदौर्लभ्यमालम्बनविभावः। कवीनामादराभाव उद्दीपनविभावः। निर्वेदविषादौ संचारिभावौ। विद्याभ्यासार्हप्रातःकालानुत्थानमनुभावः ॥ १५ ॥

## अथ दैन्यभावः ॥

---

चेतसो यदनौजस्यं दैन्यमाह धुरंधरः ॥
गर्वस्य विपरीतत्वे भवेदेतन्महीपते! ॥ १ ॥

अत्रानौजस्यं स्वसामर्थ्यम्। "ओजः सामर्थ्ये" इति चिन्तामणौ ॥

यथा—

संबोधयन्ति वीरेति राजंस्त्वां रिपवो न हि ॥
दयालो! नरनाथेति वदन्त्यञ्जलिपूर्वकम् ॥ १ ॥

अत्र राजराजेश्वररिपूणां दैन्यभावस्य राजराजेश्वरवीरत्वमालम्बनविभावः। सेनावैभव उद्दीपनविभावः। स च

प्रतीयमानः । भयमालस्यं च संचारिभावौ । दयालो! इति वचनमञ्जलीकरणं चानुभावः ॥ १६ ॥

## अथ चिन्ताभावः ॥

चिन्तनं तु महाराज! चिन्तामाह धुरंधरः ॥

"चिन्तनं कर्तव्याकर्तव्यचिन्तायाम्" इति चिन्तामणिः ॥

यथा—

अयशः शरणे भावि रणे भावी पराभवः ॥
इत्थं ते रिपवो राजंश्चिन्तयन्ति पुनः पुनः ॥ १ ॥

अत्र विद्विषां चिन्ताभावस्य राजराजेश्वरैश्वर्यमालम्बनविभावः । दैन्यविषादचपलता गम्यसंचारिभावाः । निःश्वासवैवर्ण्यादिर्गम्योऽनुभावः ॥ १७ ॥

## अथ मोहभावः ॥

ज्ञानाभावः कदाचिद्धि कथंचिद्धृदये भवेत् ॥
मोहोऽसौ कथ्यते प्राज्ञैर्यशवन्तधराधिप! ॥ १ ॥

यथा—

आक्रान्ते मरुसैन्येन खड्गैर्गात्रविकृन्तनात् ॥
उच्छलच्छोणितं दृष्टं ततो जाने न किंचन ॥ १ ॥

अत्र युद्धं पश्यतां मोहभावस्य युद्धदारुणत्वमालम्बनविभावः । वीरसिंहनाद उद्दीपनविभावः । त्रासविस्मयजुगुप्साः संचारिभावाः ।"ततो जाने न किंचन" इतिवचनमनुभावः । यथावा—

विहाय दधि पानीयपूर्णां कृत्वा तु मन्थनीम् ।
पश्य व्यत्यस्तमन्थानं मन्थत्येषा वराङ्गना ॥ १ ॥

अत्र नायिकाया दधिमन्थनज्ञानाभावः । अत्र पूर्वानुरागो मोहस्यालम्बनविभावः । प्रभातसमय उद्दीपनविभावः । उत्कण्ठा संचारिभावः । मन्थनसामग्र्या अन्यथात्वमनुभावः । इयं परकीया लक्षिता नायिका ॥ भोजमहाराजस्य मोहो मूढतेति कथनं प्रमादः ॥ मूढताया जडताभावत्वात् ।१८।

## अथ स्मृतिभावः ॥

चिरानुभूतस्यार्थस्य स्मरणं तु स्मृतिः स्मृता ॥

यथा-

विस्मृतगृहगोत्राणां वसतो गहने वने तव द्विषताम् ॥
चन्द्रोदये हि चक्षुः संलभते चन्द्रकान्तत्वम् ॥ १ ॥

अत्र राजराजेश्वररिपूणां वनितावदनस्मृतिभावस्य तत्सदृशचन्द्रदर्शनमालम्बनविभावः ॥ चकोररवः कुमुदविका-

सरय गम्य उद्दीपनविभावः । चिन्तोत्कण्ठाविषादाः संचारिभावाः । अश्रु अनुभावः ॥ १६ ॥

# अथ धृतिभावः ॥

---

धृतिस्तु धैर्यमित्येवं प्रवदन्ति मनीषिणः ॥
अन्तर्भावोऽत्र विज्ञेयः संतोषस्यापि भूपते! ॥१॥

धृतिः संतोष इति हेमाचार्यः ॥

यथा—

नेच्छा कल्पतरौ, रसायनरुचिर्नो, तिष्ठ चिन्तामणे!
दूरे, हेमगिरौ स्पृहा न, न गतिः कामप्रदोग्ध्र्यां हृदः ॥
सत्यं प्रोक्तमिदं हि मानमरुपं याचेयमेकं परं
वाँकीदासकवेरिमामवतु मे कृष्णः प्रतिज्ञां पराम् ।३।

अत्र पितामहकविराजवाँकीदासधृतिभावस्य राजराजेश्वरमानसिंहविहितवाञ्छितार्थाधिकप्रदानमालम्बनविभावः ॥ सत्कृतिर्गम्य उद्दीपनविभावः । गर्वहर्षौ संचारिभावौ । अन्ययाच्ञात्यागविषयकप्रतिज्ञावचनमनुभावः ॥ उक्तोदाहरणानुसारेण भोजमहाराजः

"अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः ।"

इदं लक्षणमाह ॥ एतच्च सुखादिविषयधृतावव्याप्तम् ॥

यथा—

हयाश्चलाश्चला नागाः संघं त्यक्त्वा पदातिनः ॥
चला अभूवंस्तत्रैको हड्डेन्द्रो ह्यचलोऽभवत् ॥१॥२०॥

## अथ व्रीडाभावः ॥

व्रीडा चित्तस्य संकोचः कथ्यते मनुजाधिप! ॥

व्रीडा लज्जेतिपर्यायान्तरम् ॥

यथा—

अन्यैर्महीशै(*)र्यशवन्तभूपते-
राकर्ण्य दानस्य कथां कवीश्वरैः(†) ॥
संधूय शीर्षाणि सुधाकरोदये
संकोच आप्तः सरसीरुहैरिव ॥ १ ॥

अत्रान्यभूपानां व्रीडाभावस्य राजराजेश्वरयशवन्तसिंह-संबन्ध्यद्भुतदानकथाश्रवणमालम्बनविभावः ॥ जगत्प्रसिद्धं यश उद्दीपनविभावः । असूया संचारिभावः । शिरःकम्प-मुखसंकोचावनुभावौ ॥ २१ ॥

## अथ चपलताभावः ॥

(*) महीशैरिति कर्तरि तृतीया.(†)कवीश्वरैरिति करणे तृतीया ।. कवीश्वरैर्वर्ण्यमानां कथामिति वा ॥

अस्थैर्यं चेतसो भूप! चापल्यमभिधीयते ॥

यथा--

आकर्ण्य दुन्दुभिध्वानं यशवन्तमहीपतेः ॥
पताकापटवद्भान्ति विद्विट्स्वान्तानि सर्वदा ॥१॥

अत्र पताकापटोपमयेदं विवक्ष्यते, किं युद्धं कुर्मः, किं वा पादयोः पतामः, किं वा वने वसामः, किं वा कस्यचिच्छरणं व्रजाम इति रिपुनृपाणां कश्चिदपि विचारः स्थिरत्वं नासादयतीति ॥ अत्र रिपूणां चपलताभावस्य राजराजेश्वरदुन्दुभिस्वनश्रवणमालम्बनविभावः। सेनादर्शनादिकं गम्य उद्दीपनविभावः। भयत्रासविषादाः संचारिभावाः। कम्परोमाञ्चौ गम्यानुभावौ ॥ २२ ॥

## अथावेगभावः ॥

---

आवेगं तु त्वरां विद्धि यशवन्तमहीपते! ॥

"आवेगस्त्वरायाम्" इति चिन्तामणिः ॥ चपलतायामस्थिरत्वं, त्वरा तु शीघ्रतेति महदन्तरम् ॥

यथा--

स्वकीयकीर्तिश्रवणस्य काले--
ऽत्युदारचित्तो यशवन्तसिंहः ॥
पूर्वं समासेरन्नृणः कविभ्यः

प्रदाय लक्ष्मीं भवति प्रभूताम् ॥ १ ॥

अत्र राजराजेश्वरदानविषयत्वराभावस्य कीर्तिश्रवणमालम्बनविभावः ॥ देहः क्षणभङ्गुर इति सिद्धान्तो गम्य. उद्दीपनविभावः । रतिगर्वोत्साहाः संचारिभावाः । काव्यपाठपूर्तेः प्राग्दानमनुभावः ॥ रसतरङ्गिण्यादौ "संभ्रमो. वा आवेगः" इत्युक्तम् । संभ्रमस्य तु चपलतायामन्तर्भावः । पृथगङ्गीक्रियते चेत्कुर्वन्तु नाम ॥ भावानामसंख्यत्वात् ॥ २३ ॥

## अथ हर्षभावः ॥

---

प्रसादो मनसो राजन्! हर्ष इत्यभिधीयते ॥

यथा—

मन्मथरूपं भूमौ कल्पतरुं त्वां विलोक्य भूपाल! ॥
प्रेक्षकमनुजशरीरं वस्त्रान्तर्माति नो(*)चित्रम् ॥१॥

अत्र पश्यतां हर्षभावस्य वाञ्छितार्थप्रदराजराजेश्वरयशवन्तसिंह आलम्बनविभावः । तस्य सौन्दर्यदयालुत्वादिकमुद्दीपनविभावः । राजरतिः संचारिभावः । अङ्गविकासोऽनुभावः । अङ्गविकासस्य रोमाञ्चेऽन्तर्भावः ॥ २४ ॥

## अथ जडताभावः ।

---

(*) वस्त्रान्तर्नो मातीति संबन्धः ॥

अत्र जडता तु मूर्खता। "जडो मूर्खे" इति चिन्तामणौ।

जडतां मूर्खतां विद्धि न सा नित्यं विभाति हि॥
सा तु रम्या निमित्तेन कदाचिच्च क्वचिद्भवेत्॥१॥

यथा–

परप्रियः स्वस्य भवेत्कदाचि-
न्नैवेति चित्ते परिबुध्यमाना।
लोकस्य लज्जामजहां मयाऽहो
दिनेऽपि दुग्धे खलु मक्षिकात्ता॥ १॥

अत्र नायिकाया जडताभावः पूर्वानुरागवशात्कदाचित्सं-जातः। अत्र पश्चात्तापस्य संकीर्णता। अत्र नायिकाजडता-भावस्य नायकनिष्ठाऽसाधारणसौन्दर्यादिकमालम्बनविभा-वः। उत्कण्ठा संचारिभावः। वचनमनुभावः॥ २५॥

## अथ गर्वभावः॥

---

गर्वोऽहंकार इति पर्यायान्तरम्॥

सर्वेभ्योऽप्यधिकोस्मीतिबुद्धिर्गर्व इहेष्यते॥

यथा–

प्रावृष्येव ददातीन्द्रः कर्णः स्वर्णं परं ददौ।
सर्वदा सर्वदोऽस्माकं यशवन्तमहीपतिः॥

अत्र राजराजेश्वरभृत्यानां न कोऽप्यस्मत्सदृशस्वामिक इति गर्वभावस्य राजराजेश्वरकर्तृकं सर्वदा सर्ववस्तुदानमालम्बनविभावः। राजराजेश्वरस्य जगत्प्रसिद्धं यश उद्दीपनविभावः। स्मृत्युत्साहौ संचारिभावौ। वचनमनुभावः ।२६।

# अथ विषादभावः ॥

दुःखं विषाद इत्यत्र संमतिः सर्वदेहिनाम् ॥

यथा—

पुष्पपर्यङ्कशयिताः कण्टकावृतभूमिषु ॥
दयिताः शेरतेऽस्माकं हा पश्यामोऽद्य चक्षुषा ॥ २ ॥

अत्र राजराजेश्वरारिपूणां विषादभावस्य तादृशनिजरमणीनां कण्टकावृतभूमिशयनदर्शनमालम्बनविभावः। उक्तरमणीनां वसनाभरणशून्यत्वादिकमुद्दीपनविभावः। दैन्यं संचारिभावः। वचनमनुभावः॥ २७॥

# अथौत्सुक्यभावः ॥

औत्सुक्यमुत्कण्ठेति पर्यायान्तरम् ॥

औत्सुक्यमिष्टलाभे हि कालक्षेपासहिष्णुता ॥

यथा—

तव श्रुतवतां कीर्तिं दूरदेशनिवासिनाम् ॥
आकुलान्यक्षिवृन्दानि राजन्निर्जलमीनवत् ॥१॥

अत्र दूरदेशवासिनां राजराजेश्वरदर्शनौत्सुक्यभावस्य राजराजेश्वरयशःश्रवणमालम्बनविभावः। चिन्तास्मृती संचारिभावौ। नयनाकुलत्वमनुभावः ॥ २८ ॥

## अथापस्मारभावः ॥

"अपस्मार आवेशः" इति हेमचन्द्रः। उभयोः पर्यायवाचित्वात्। चिन्तामणिकोपेप्युक्तम्। "आवेश अभिनिवेशे" इति ॥ लोके हि देवताभिनिवेशः प्रेताभिनिवेशश्च प्रसिद्धतरः ॥

निगद्यतेऽत्रापस्मारोऽभिनिवेशो धराधिप! ॥

यथा—

प्रेमप्रेतावेशवशाद्विह्वलाङ्गी शुचिस्मिता ॥
सा वारितापि पिशुनान्वक्ति गूढकथाः स्फुटम् ॥ १ ॥

अत्र राधामनःप्रेमप्रेताभिनिवेशस्य कृष्ण आलम्बनविभावः। सितरजन्यादिकमुद्दीपनविभावः। उन्मादः संचारिभावः। पिशुनान्प्रति गूढकथाकथनमनुभावः ॥ प्रायोऽयमाभासेष्वेव शोभत इति हेमचन्द्रः ॥ तन्न समीचीनम् ॥ २९ ॥

# अथ निद्राभावः ॥

निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ॥

यथा—

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरतटे रतिखेदखिन्नः ॥
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षणं क्षपयति क्षणलब्धनिद्रः ॥ १ ॥

अत्र नायकनिष्ठनिद्राभावस्यात्यन्तजागरणमालम्बनविभावः । सुरतश्रम उद्दीपनविभावः । हर्षः संचारिभावः । नेत्रनिमीलनमनुभावः ॥ ३० ॥

# अथ स्वप्नभावः ॥

स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ॥

यथा—

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ॥
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ १ ॥

अत्र स्वाधीनपतिकोपमा तु पुरुषस्य प्रभावप्रभवेऽर्थाद्रङ्कस्य राजत्वदशायां पितृपुत्रादिसंबन्धोपि स्वामिसेवकभावादिसं-

वन्धान्तरप्राप्तावन्यथात्वमाप्नोति । न तु स्वाधीनपतिकासंबन्धः ॥ उक्तदशायामपि स्वाधीनपतिकात्वस्य विद्यमानत्वात् । स्वप्नस्य परतन्त्रतया तत्र रङ्को राजत्वं राजा च रङ्कत्वमाप्नोति । इत्यादि । एवं तु स्वप्नसमरेऽपि विजयलक्ष्मीर्न जहाति । स्वप्नसंगरेऽप्यस्य राज्ञो विजय एव भवतीति भावः ॥ अत्र निद्राप्राप्तभूपतेर्युद्धानुभवरूपस्वप्नभावस्य सततयुद्धाभ्यास आलम्बनविभावः । गर्वोत्साहौ संचारिभावौ । तादृशहस्तक्षेपौष्ठदंशौ युद्धस्यानुभावौ ॥ वदनविकासो भुजप्रफुल्लत्वं च जयस्यानुभावौ । उक्तानुभावबोधितनृपस्वप्नस्येदं कविकृतवर्णनम् ॥

# अथ प्रबोधभावः ॥

"इन्द्रियाणां प्रथमप्रकाशः प्रबोधः" इति रसतरङ्गिण्याम् ॥

इन्द्रियाणां हि विश्रम्य व्यापारारम्भणं पुनः ।
प्रबोधः कथ्यते तज्ज्ञैर्यशवन्तनरेश्वर! ॥ १ ॥

यथा—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ १ ॥

अत्र हरेः प्रबोधभावस्य प्रभातसमय आलम्बनविभावः। देवस्तुतिरुद्दीपनविभावः। आलस्यं संचारिभावः। नयनाङ्गविकासादिकमनुभावः ॥ ३२ ॥

# अथामर्षभावः ॥

---

## स्वापराधकरेऽशक्तविद्वेषोऽमर्ष उच्यते ॥

क्रोधे तथात्वाभावाद्भेदः ॥

यथा—

बाहुप्रतिष्टम्भविवृद्धमन्यु-
रभ्यर्णमागस्कृतमस्पृशद्भिः ॥
राजा स्वतेजोभिरदह्यतान्त-
र्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥

ऐक्ष्वाको दिलीपोऽपत्यार्थं वसिष्ठधेनुं परिचचार। सा च तत्परीक्षणार्थं मायया सिंहं प्रादुष्कृतवती। तयैव च मायया धनुर्धरस्य राज्ञो बाहुप्रतिष्टम्भो विहितः। तत्रत्यं वर्णनमिदम् ॥ अत्र राज्ञो दिलीपस्यामर्षभावस्य बाहुप्रतिष्टम्भ आलम्बनविभावः। अपराधिनं सिंहं प्रति राज्ञस्तेजसामस्पर्शनमुद्दीपनविभावः। चिन्ताविषादौ संचारिभावौ। वैवर्ण्योष्ठकम्पादिकं गम्योऽनुभावः ॥ ३३ ॥

# अथावहित्थभावः

"आकारव्यवहारसंगोपनमवहित्थम् ॥" इति रसतरङ्गिण्याम् ॥

संगोपनेच्छा भूपाल! ह्याकारव्यवहारयोः ॥
अवहित्थाभिधो भावो धुरंधरमते स्मृतः ॥१॥

तादृशगोपनमिच्छापूर्वकमेव भवति ॥

यथा—

गुहां प्रविष्टा हिमभूधरस्य
श्रुत्वैव नामारिमहीभुजस्ते ॥
प्रकम्पिताङ्गा निगदन्ति राज-
न्नतीवशीतं खलु पर्वतेऽस्मिन् ॥ १ ॥

अत्र राजराजेश्वरारिपूणामवहित्थभावस्य क्षत्रियत्वमालम्बनविभावः ॥ शस्त्रधारणमुद्दीपनविभावः लज्जा संचारिभावः । वचनमनुभावः ॥ ३४ ॥

# अथोग्रताभावः ॥

"उग्रता निर्दयता" इति रसतरङ्गिण्याम् ॥

उग्रता निर्दयत्वं हि प्रोच्यते मनुजाधिप!॥

यथा—

कथमेवं रे निर्दय! विलोडयते कुसुमसदृशगात्राणि ॥
...ये कृत्वा हस्तं पश्याऽस्या वेपथुः कीदृक् ॥ १ ॥

...ष्ठोग्रताभावस्य सुरतसुखलालसाऽऽलम्ब-
...नजवय उद्दीपनविभावः । उत्साहः संचारिभा-
। नायिकायास्तादृशदशाकरणमनुभावः ॥ ३५ ॥

# अथ मतिभावः ॥

"यथार्थज्ञानं मतिः" इति रसतरङ्गिण्याम् ॥

यथार्थबुद्धिः शास्त्रस्याभ्यासादेस्तु मतिः स्मृता ॥

यथा—

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् ॥
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः ॥
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥१॥

अत्र भर्तृहरेर्मतिभावस्य शास्त्राभ्यास आलम्बनविभावः । तादृशलोकव्यवहारदर्शनमुद्दीपनविभावः । धृतिहर्षौ संचारिभावौ । वचनमनुभावः ॥ ३६ ॥

# अथ व्याधिभावः ॥

मनसो वेदनां व्याधिमत्र जानीहि भूपते! ॥

यथा—

न चन्द्रेण न चाब्जेन न वा मलयजादिभिः ॥
विद्विषां भवतो भूप! मनस्तापः प्रशाम्यति ॥१॥

अत्र रिपूणां व्याधिभावस्य स्थानवैभावदिभ्रंश आलम्बनविभावः। वनवास उद्दीपनविभावः। चिन्ताविषादौ संचारिभावौ। वैवर्ण्यादिकं गम्योऽनुभावः ॥ ३७ ॥

# अथोन्मादभावः ॥

उत्पूर्वान्मदेर्भावे घञ्।

"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ॥"

इति वाक्यादिहोन्मादशब्दार्थो विना विचारमाचार इति ॥ तदुक्तं "विना विचारमाचार उन्मादः" इति रसतरङ्गिण्याम् ॥

विना विचारमाचार उन्माद इति कथ्यते ॥

विना विचारमाचारश्च बुद्धिलोपाद्भवति। यथाऽतिमदपानाद्बुद्धेर्लोपस्तथाऽतिशयितसुखदुःखादेरपि ॥

यथा—

विलम्ब्य जल्पन्ति लताः पदे पदे
वनेऽरिनार्यो यशवन्तभूपते! ॥
ममाद्य शृङ्गारविधिं करोषि नो
न चापि शिक्षां कुरुषे कुतः सखि! ॥ १ ॥

अत्र रिपुस्त्रीणामुन्मादभावस्य वल्लभवियोगजन्यासह्यदुःखमालम्बनविभावः । वनवासविपदुद्दीपनविभावः । दैन्यविषादौ संचारिभावौ । वल्लीविषयतादृशचेष्टा वचनं चानुभावः ॥ ३८ ॥

## अथ मरणभावः ॥

---

मरणं प्राणवियोगः । अत्र हेमाचार्यः "मृतेः प्रागवस्था मृतिः । साक्षान्मृतावनुभवाभावात् "इत्याह ॥ काव्यप्रदीपे मरणसंचारिभावस्येदं लक्षणम् "जीवस्योद्गमनारम्भो मरणम्" इति ॥ तदुभयमपि समीचीनम् ।

मरणेच्छाऽथ वा राजन्! मरणं म्रियमाणता ॥

यथा—

पञ्चत्वं तनुरेतु भूतनिचयाः स्वांशे विशन्तु ध्रुवं
धातारं प्रणिपत्य नम्रशिरसा याचेऽहमेकं वरम् ॥
तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गणे
व्योम्नि व्योम तदीयवर्त्मसु धरा तत्तालवृन्तेऽनिलः ॥ १ ॥

अत्र नायिकामरणेच्छायाः पूर्वानुरागनामकवियोग आलम्बनविभावः ॥ वय आद्युद्दीपनविभावः ॥ उत्कण्ठाविषादौ संचारिभावौ । वचनमनुभावः ॥

यथा वा—

निर्यान्तः खलु रुध्यन्ते प्राणाः प्रियकथाश्रुतेः ॥

अत्र नायिकाम्रियमाणतादशाया वियोग आलम्बनविभावः । वय आदिकमुद्दीपनविभावः । मोहोत्कण्ठाविषादाः संचारिभावाः । तादृशदशाऽनुभावः ॥ ३६ ॥

## अथ त्रासभावः ॥

भयस्थायिभावव्यावृत्तये भानुदत्तः "विचारोत्थो मनःक्षोभो भीतिः । आकस्मिकमनःक्षोभस्त्रासः" इत्याह ॥ मम मतेऽपि भानुदत्तस्येदं भणनं समीचीनम् । क्रोधामर्षव्यावर्तकस्यासमर्थद्वेषस्येवाऽऽकस्माद्रूपविशेषतया भयव्यावर्तकत्वात् ॥

आकस्मिको मनःक्षोभस्त्रास इच्युते नृप! ॥

यथा—

प्रतिध्वनिं समाकर्ण्य मृगेन्द्रस्य महागिरौ ॥
प्रिय प्रियेति क्रोशन्त्यः कान्ताश्लिष्यन्त्यरिस्त्रियः ॥१॥

अत्र राजराजेश्वरारिपुरमणीनां त्रासभावस्याकस्मात्सिंह-

गर्जनप्रतिध्वनिश्रवणमालम्बनविभावः । महागिरेर्विकटत्व-मुद्दीपनविभावः । विस्मयविषादौ संचारिभावौ । प्रियप्रिये-त्याक्रोशवचनं प्रियालिङ्गनं चानुभावः ॥ १ ॥

# अथ वितर्कभावः ॥

---

तर्क ऊहः । अत्र वीत्युपसर्गो विशेषार्थकः । वितर्क इ।त समुदितशब्दार्थस्तु विशेषत्वप्रतिपादनार्थं पदार्थे तर्कोद्भावनमिति ॥

विशेषतायाः प्रतिपादनार्थं
तर्कस्तु राजन्! कथितो वितर्कः ॥

यथा—

उदयति शारदराकासुधाकरः किं न सावधानाऽसि ।
मन्ये स्मरभूपस्यातपत्रमेतद्विभाति विष्णुपदे ॥१॥

मानिनीमभिसारिकां प्रति वा सख्या उक्तिरियम् ॥ अत्र चन्द्रे स्मरभूपच्छत्ररूपवितर्कस्य वर्तुलाकृतितापनिवारणशीलोज्ज्वलवर्णत्वमालम्बनविभावः ॥ कामवर्द्धकसंध्यासमय उद्दीपनविभावः । संध्यासमयस्य कामवर्द्धकत्वं च—

परिपतति पयोनिधौ पतङ्गः
सरसिरुहामुदरेषु मत्तभृङ्गः ॥
उपवनतरुकोटरे विहङ्ग—

स्तरुणजनेषु शनैः शनैरनङ्गः ॥ १ ॥

इति समस्यापूर्तौ वृत्तम् ॥ हर्षः संचारिभावः । वचनमनुभावः । अयं तर्कनारूपो वितर्कभावः क्वचिदुत्प्रेक्षालंकारो भवति ॥ ४१ ॥

पूर्वोदाहरणेषु भावानां स्थितिदशा ॥ इदानीं भावानामुदयादिदशाः प्रदर्श्यन्ते ॥

भावोदयश्च भावशान्तिर्भूपाल! भावशवलत्वम् ॥
तद्वच्च भावसंधिर्भावाभासो रसाभासः ॥ १ ॥

उदयतः सूर्यस्योदयः सूर्योदयः । अस्तं गच्छतः सूर्यस्यास्तमनं सूर्यास्तमनम् । तद्वदुदयन् भावो भावोदयः । शाम्यन् भावो भावशान्तिरितीह विवक्षितम् ॥

नेत्राऽरुणिमा राज्ञो दृष्ट्वा शत्रून्प्रवर्द्धते समरे ॥
स पुनः कृताञ्जलींस्तान्विलोक्य शाम्यति यथाऽभ्रमनिलेन ॥ १ ॥

अत्र पूर्वार्द्धे राजराजेश्वरक्रोधोदयस्याभिमुखमायान्तः शत्रव आलम्बनविभावः । तेषां कुन्तादिरोचिरुद्दीपनविभावः । गर्वासूये संचारिभावौ । नेत्रारुणिमोत्पत्तेर्वृद्धिरनुभावः ॥ उत्तरार्द्धे राजराजेश्वरक्रोधशान्ते रिपूणामञ्जलीकरणमालम्बनविभावः । तेषां गम्यविनयवचनमुद्दीपनविभावः । दया संचारिभावः । नेत्रारुणिमशमनमनुभावः ॥

शबलता मिश्रतेति पर्यायान्तरम् । भावशबलता त्वनेक-

भावानां मिश्रणे मिथो गौणमुख्यभावं विना समकक्षतया स्थितिः ॥ तस्मान्न कोऽप्यत्र संचारी ॥

यथा—

इतस्ततोऽसौ विचरन्वरान्करी-
नश्वान्विचिन्वंश्च परान्विनिन्दन् ॥
दानस्य काले यशवन्तसिंहः
पूर्वं मुदा पृच्छति दानपत्रम् ॥ १ ॥

अत्र राजराजेश्वरभावशवलतायाः कवय आलम्बनविभावः । काव्यस्यानुपमत्वादिगुणा उद्दीपनविभावः । इतस्ततो भ्रमणं त्वराया अनुभावः । श्रेष्ठगजाश्वचयनमुत्साहस्यानुभावः । रवेरश्वा मघवतश्चैरावतस्तद्भवन एव जीर्णतामाप्ता इत्यादिपरनिन्दाऽसूयाया अनुभावः ॥ पूर्वप्रत्तदानपत्रप्रश्नः स्मृतिगर्वयोरनुभावः ।

एकस्य गमनमपरस्य चागमनमपि संधिपदवाच्यम् । यथा नायिकायाः शैशवयौवनयोः संधिर्वयःसंधिः । इह तु विरुद्धभावयोः संधानं संधिपदवाच्यम् ॥ यद्यपि विरुद्धयोर्द्वयोरेकत्र स्थितावेकेनापरस्तिरस्क्रियते । तथाप्येवमकृत्वा प्रसङ्गवशात्परस्परमुभयोर्विरुद्धभावयोः स्थितिर्भावसंधिः ॥

यथा—

रामेण योद्धुं किल संमुखस्य
रामस्य बाहुः स्फुरति स्म वीक्ष्य ॥

कुठारमालोक्य च यज्ञसूत्रं
प्रकम्पते स्मास्य स एव बाहुः ॥ १ ॥

अत्र परशुरामेण सार्द्धं योद्धुमुपस्थितस्य दाशरथेरुत्साहस्य परशुरामपरशुदर्शनमालम्बनविभावः। बाहुस्फुरणमनुभावः। भयस्यालम्बनं तु परशुरामस्य यज्ञोपवीतदर्शनम् । बाहुवेपथुरनुभावः । अत्र विरुद्धयोर्भयोत्साहयोः संधिः ॥

भावस्याभासत्वे भावाभासः ॥

यथा—

खातः कथमयं केन कथं वा पूरितोऽम्बुना ॥
कथं नोल्लङ्घते सीमां क्षुभितोऽपि महार्णवः॥ १ ॥

अत्र कवेश्चिन्ताभावस्य सिन्धोरगाधत्वमपामपारत्वं क्षुभितत्वेऽपि सीमानुल्लङ्घनं चालम्बनविभावः । विस्मयः संचारिभावः।वचनमनुभावः। अत्र श्रवणमात्रेण चणं चिन्तास्वारस्यभानेऽपि विमर्शे कृते तु तादृशचिन्ताया निरर्थकत्वादनुचितत्वम् ॥ अनुचितो भावो भावो न भवति । साहित्यशास्त्रे उचितस्यैवाङ्गीकारात् । अत्र चिन्ताया आभासरूपत्वाद्भावाभासत्वम् । आभासेऽपि चमत्कारो विद्यते इत्याभासस्यालंकारत्वेनाप्यङ्गीकारः । भावाभासरसाभासयोर्भावरसप्रकरणे ग्रहणमपि । रसाभासोदाहरणं रसप्रकरणे दर्शयिष्यते ॥ ननु भवता तु नामान्येव साचाल्लक्षणानीत्यङ्गीक्रियते, पुनश्च भावानामलंकारादिवन्नामार्थमभ्युत्पाद्य प्राचीनशैल्या

परंपरागतलक्षणान्येव कथं स्वीक्रियन्त इति चेच्छृणु । भावाः स्वतःसिद्धमनोवृत्तिरूपाः । न तु कविकर्मनिष्पाद्याः । अत एव तन्नामान्यपि व्यवहारार्थं विधात्रैव निर्मितानि । तन्नामभिश्च तत्स्वरूपस्य स्पष्टं नावगम इति कवीनां लक्षणनिर्मितिर्युक्तैव ॥ एवमन्यत्रापि ज्ञेयम् ॥ न च वाच्यं, उपमानामापि "उपं सामीप्यात्कृतं मानमुपमा" इति व्यावहारिकमेवेति तत्र भवतो यत्नः कथमिति । अत्र व्यावहारिकत्वं तु भारे तुङ्गत्वादौ वा वर्तते । सामीप्यात्कृतं तादृशसाधर्म्यरूपं मानं तु कविकर्मैव । एवमन्यालंकारेष्वपि ॥ इति भावप्रकरणम् ॥

# अथ रसाः ॥

---

रसानामावश्यकत्वे आज्ञप्तं भगवता व्यासेन ॥

"लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा ॥"

इति ॥

न चायं नियमो रसमन्तरा न काव्यत्वमिति । तादृशवाक्यानां प्राकरणिकस्तुतिपरतया रोचकवाक्यत्वात् । यथा धर्मशास्त्रे एकादशीमाहात्म्ये—

"अस्मिन्व्रते कृते राजन्वाजपेयफलं भवेत् ।"

इत्यादि ॥ काव्यत्वं तु रमणीयतामात्रेणैव सिद्धम् । रमणीयतायाः रसादिसर्वसंमेलनेनैकतरेण वा सद्भावे काव्यत्वं सिध्येदिति भावः । तादृशरोचकवाक्यानि त्वलंकाराद्यखिलविषयेऽप्युपलभ्यन्त इति सर्वेषां सद्भाव एव काव्यत्वमङ्गीक्रियेत चेत्तादृशकाव्यस्य दुर्लभत्वात्काव्यवैभवस्य ह्रासः स्यात् ।

सर्वविद्यामूलं वेदाः । रसा वेदेभ्य उद्धृताः । तदुक्तं भगवता भरतेन—

जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ॥
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥ १ ॥ इति ॥

अभिनयशब्दार्थस्तु, अन्तःकरणवृत्तिर्भावस्य व्यञ्जकोऽङ्गचेष्टाविशेषः ॥ तदुक्तं चिन्तामणौ "अभिनयः, अन्तर्गतभावस्य व्यञ्जकेऽङ्गचेष्टाविशेषे" इति ॥ अत्राभिनयशब्देन नाटकविद्या विवक्षिता ॥ यद्यपि रत्यादिस्थायिभावा रसत्वमाप्नुवन्तीति रसानां रतिरसेत्यादिस्वरूपनामान्येव भाव्यानि । तथापि लोके देशसंबन्धादपि संज्ञा भवति । यथा गौडतैलङ्गादिदेशजाता नरा गौडतैलङ्गादिसंज्ञकाः । उक्तलोकन्यायेन यत्र यत्र स्थले रत्यादिस्थायिभावा रसत्वमाप्नुवन्ति तत्तत्स्थलमपि सूचयन्धुरंधरस्तत्तत्स्थलसंबन्धाच्छृङ्गारादिनामनिर्देशं चकार ॥

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ॥
बीभत्सश्चाद्भुतश्चैव शान्तश्च नवमः स्मृतः ॥

शृङ्गार इत्यत्र शृङ्गशब्दार्थः कामोद्रेकः। "शृङ्गं कामोद्रेके" इति चिन्तामणिः। ऋधातोरारशब्दो निष्पन्नः। ऋ गतौ। इह गतिस्तु प्राप्तिः। "गतिः प्राप्तौ" इति चिन्तामणिः॥ तथा च शृङ्गस्य आरः प्राप्तिरस्मिन् इति शृङ्गारम्। अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः। ततश्चार्शाद्यचि शृङ्गारमस्यास्तीति व्युत्पत्त्या कामोद्रेकप्राप्तिमतोऽन्तःकरणस्य संबन्धी रस इति शृङ्गारशब्दार्थः॥ तत्तद्रसवासनावासितान्तःकरणे तत्तद्रसो भवतीति प्रागुक्तम्। कामोद्रेकप्राप्तिमतोऽन्तःकरणस्य संबन्धी रसस्तु शृङ्गार एव। इत्थं रतिरसादेः शृङ्गारादिनामानि धुरंधरेण पर्यायोक्त्या प्रोक्तानीति ज्ञेयम्॥ हसधातोर्ण्यत्प्रत्यये हास्यमिति। हसे हसने। "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययो भावकर्मणोर्विहितः। इह तूक्तार्थस्यानुपयोगात् "कृत्यल्युटो बहुलम्" इति शास्त्रात्कर्तरि ण्यत्। ततश्च हसतीति हास्यमिति। अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः। ततश्चार्शाद्यचि हसनशीलान्तःकरणसंबन्धी रसो हास्यरस इत्यर्थः॥ तादृशान्तःकरणसंबन्धी रसस्तु हास्यमेव॥ करुणशब्दार्थो दयावानिति॥ "करुणः सदये" इति चिन्तामणिः॥ अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः। ततश्चार्शाद्यचि दयावतोऽन्तःकरणस्य संबन्धी रसः करुणरस इत्यर्थः॥ तादृशान्तःकरणसंबन्धी रसस्तु करुण एव॥ रौद्रशब्दार्थ उग्र इति॥ "रौद्र उग्रे" इति चिन्तामणिः॥ उग्रस्तु चित्तविदारणकर्मकर्ता। "उग्रः, दारुणकर्मकर्तरि" इति चिन्तामणिः॥ अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः।

ततश्चार्शाद्यचि दारुणकर्मकर्तुरन्तःकरणस्य संबन्धी रसो रौद्ररस इत्यर्थः॥ तादृशान्तःकरणसंबन्धी रसस्तु रौद्र एव॥ वीरस्तु शूरः॥ "वीरः शूरे" इति चिन्तामणिः॥ शूरशब्दार्थो युद्धोत्साहवानिति। "शूरः, युद्धकर्मण्युत्साहवति" इति चिन्तामणिः॥ अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः। ततश्चार्शाद्यचि युद्धकर्मण्युत्साहवतोऽन्तःकरणस्य संबन्धी रसो वीररस इत्यर्थः॥ तादृशान्तःकरणसंबन्धी रसस्तु वीर एव॥ भयशब्दार्थः प्रसिद्धः। आनकशब्दार्थस्तु प्राणप्रद इति॥ "आनकः, आनयति प्राणयति" इति चिन्तामणिः॥ अन प्राणने॥ भयानक इति समुदितशब्दार्थस्तु भयोत्पादकस्वभाव इति॥ अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः॥ ततश्चार्शाद्यचि भयोत्पादकस्वभावस्यान्तःकरणस्य संबन्धी रसो भयानकरस इत्यर्थः॥ तादृशान्तःकरणसंबन्धी रसस्तु भयानक एव॥ बीभत्सशब्दार्थो घृणाशील इति "बीभत्सः, घृणात्मनि॥ आत्मा स्वभावे" इति चिन्तामणिः॥ अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः। ततश्चार्शाद्यचि घृणाशीलस्यान्तःकरणस्य संबन्धी रसो बीभत्सरस इत्यर्थः॥ तादृशान्तःकरणसंबन्धी रसस्तु बीभत्स एव॥ अदितिशब्दार्थ आश्चर्यम्। "अद् आश्चर्ये" इति रामाश्रमीकारः॥ भुतं भवनम्। "भुतं भवने" इति चिन्तामणिः॥ अद आश्चर्यस्य भुतं भवनं यस्मिंस्तदद्भुतम्। अत्रान्तःकरणे रूढिः। प्रकरणाद्रसलाभः। ततश्चार्शाद्यच्याश्चर्यवतोऽन्तःकरणस्य संबन्धी रसोऽद्भुतरस इत्यर्थः॥ तादृशान्तःकरणसंबन्धी रसस्त्वद्भुत एव॥ शान्तशब्दार्थः शमान्वित इति। "शान्तः शमान्विते" इति

चिन्तामणौ ॥ शमशब्दार्थो विषयेभ्य इन्द्रियोपरामः ॥ "शमः, विषयेभ्य इन्द्रियोपरतौ" इति चिन्तामणिः ॥ अत्रान्तःकरणे रूढिः । प्रकरणाद्रसलाभः ॥ ततश्चाशांद्यपि विषयेभ्य इन्द्रियोपरतिमदन्तःकरणसंबन्धी रसः शान्तरस इत्यर्थः ॥ तादृशान्तःकरणसंबन्धी रसस्तु शान्त एव ॥

क्रमेण यथा—

तत्र शृङ्गारः—

भूपते! कामिनीकान्तौ रम्यावालम्बनं स्मृतम् ॥
आरामघनचन्द्राद्या उद्दीपनतया मताः ॥ १ ॥
हर्षोत्कण्ठे मदश्चिन्ता वितर्कश्च स्मृतिर्धृतिः ॥
इत्याद्या मरुभूपाल! ज्ञेयाः संचारिणोऽमिताः ॥२॥
स्मितं कटाक्षो भ्रूभङ्गो वचनं स्तम्भ एव च ॥
इत्याद्या अनुभावाः स्युर्यशवन्तनरेश्वर! ॥ ३ ॥
रतिस्तु स्थायिभावोऽस्य येन विश्वं वशीकृतम् ॥
तुल्यभावेन सकलं पशुपक्षिनरामरम् ॥ ४ ॥

अत्र रसोपयोगिनां रूपयौवनचातुर्यकुलीनत्वादिसमस्तगुणानामुपसंग्रहाय रम्याविति ॥ यथा वयसा रम्यः, आकृत्या, रम्यः, प्रकृत्या रम्य इत्यादि । स्त्रीसंबन्धात्पुरुषस्य पुरुषसंबन्धाच्च स्त्रिया रतेः प्रादुर्भावादुभावपि परस्परमालम्बनविभावः ॥ विभावादिभिः स्वादुत्वमानायिता अपि रत्यादयः स्थायिभावा

अनुचितत्वे न रसाः । किं तु रसाभासरूपाः । यथा कुलटाया रतेरनेकविषयत्वादनुचितत्वम् ।

यथा—

स्तुमः कं वामाक्षि! क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलभ्रे को जातः शशिमुखि! यमालिङ्गसि बला—
त्तपःश्रीः कस्यैषा मदननगरि! ध्यायसि तु यम् ॥१॥

अत्र श्रवणमात्रेण नायिकाया एकपरपुरुषविषयकरतेर्भानात्तत्समये शृङ्गाररसस्य चमत्कारो भवति । विचारदशायां तु कुलटाया अनेकविषयकरतिप्रतीते रसस्य चमत्कारो विलीयत इति रसाभासता ॥ अनेकनायिकाविषयकनायकरतेस्तु नानौचित्यम् । प्रत्युत तादृशनायकस्य तु दक्षिणसंज्ञाऽभिहिता। न च शठधृष्टयोरप्यनुभवसिद्धो रसाभासः ॥

अगम्याविषया रतिरनुचिता ॥ यथा—

"आलेख्यगतामिव दर्शनमात्रफलाम्"

कादम्बरीग्रन्थे शूद्रकनृपसभाऽऽनीतशुकशावकमातङ्गकन्यावर्णनमिदम् । अतिमनोहरत्वेऽप्यगम्यत्वाच्चित्रवद्दर्शनमात्रफलामिति ॥ अत्र द्रष्टुरगम्याविषयरतेरनुचितत्वाद्रसाभासः ॥

वृद्धस्य युवविषया, यूनश्च वृद्धविषया रतिरनुचितैव । अत एव दशरूपके परंपरागतं वचनम्—"यूनोरन्योऽन्यरक्तयोः"

इति ॥ द्वयोस्तरुणत्वे रसः । एकस्य तरुणत्वेऽपरस्य च वृद्धत्वे रसाभासः ॥ यथा—

सरः शुष्कं चिरादेष हंसो नोड्डीय गच्छति ॥
पुरातनप्रीतिहेतोरत्ति चित्वाऽश्मनः कणान् ॥ १ ॥

शुष्कसरसि तादृशशुक्त्यभावान्मौक्तिकलाभाभावः ॥ अत्र गतयौवनाऽनुरक्तनायकप्रसङ्गे हंससरसोरप्रस्तुतकथा कथितेति रसाभासः ॥ यूनो रतौ रस इत्युक्ते उपलक्षणेनानुरूपयोरपि संग्रहो वेदितव्यः ॥ एकस्य सुरूपत्वेऽपरस्य च कुरूपत्वेऽनुचितत्वम् ॥ यथा—

किं कृष्णेन कृता प्रीतिर्हससीत्थं तु मां सखि! ॥
न जानासि परीक्षायाः प्रसादः पृथगेव हि ॥ १ ॥

अत्र कृष्णवर्णत्वात्कृष्णे कुरूपत्वं विवक्षितम् ॥ तत्र मूलं तु ' अपारे काव्यसंसारे " इति व्यासाज्ञानुसारि "कवेरिच्छा बलीयसी " इति वचनम् ॥ इदं च सर्वत्र स्मर्तव्यम् ॥

विमुखं प्रति रतिरनुचिता ॥ यथा—

गहने वने चरन्ती रतिकामनया करे धृते शबरैः ॥
युगपद्रिपुरमणीनामासन् ग्लानिर्भयं च कोपश्च ॥१॥

अत्र विमुखरमणीः प्रति शबराणां रतिरनुचितेति रसाभासः ॥ शबराणां कुलाङ्गना अगम्या अपि ॥ रसतरङ्गिण्यां

परंपरागतं वाक्यमिदम् "एकस्य रतिश्चेद्रसाभासः ॥" इति ॥ इदं च परंपरागतोदाहरणम्—

सीतासमागमश्लाघाबन्धुरं दशकंधरम् ॥
प्रहर्तुं क्षमते कामो रामो वा निशितैः शरैः ॥ १ ॥

एकस्य रतौ रसाभास इति कथनेनेदमर्थसिद्धम्, "एकस्य रतावपरस्य विमुखत्वे रसाभासः" इति ॥ इदं च सीतारावणोदाहरणात्स्पष्टतरम् ॥ न ह्यत्र स्वस्यापरे प्रीत्यभावादपरस्य स्वविषयप्रीत्यपरिज्ञानादौदासीन्यमात्रे तात्पर्यम् । तस्मिन्ननुचितत्वाभावात् । धुरंधरस्य परंपरागतोक्तोभयवाक्याभिप्रायमजानन्तोऽर्वाचीनाः परस्पररतावेव शृङ्गाररसं मन्यन्ते ॥ रसतरङ्गिणीकार एकस्य नायकस्यैव रतिविषये "सीता समागम—" इत्युदाहृत्य, एकस्या नायिकाया एव रतिविषये इदमुदाजहार—

निधुवनवनप्रान्ते यान्तं चलैर्नयनाञ्चलैः
किमिति चलितग्रीवं मुग्धे! मुहुर्मुहुरीक्ष्यते ॥
विफलमखिलं यूनोर्नो चेदुदेति परस्परं
रतिरथ मनोजन्मा देवः स एव निषेव्यताम् ॥ १ ॥

अत्र मुग्धे! इति संबुद्धिर्न तयोविवक्षया । मूढतार्थस्य विवक्षितत्वात् । मम तु मतं, परस्पररतावेकतो रतौ वा रससंबन्धिपरमानन्दप्राप्तौ तु न मनागपि न्यूनाधिकत्वम् ॥

क्रमेण यथा—

यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः ॥
तथा प्रपापालिकाऽपि धारां वितनुते तनुम् ॥ १ ॥

अत्र तथेत्यस्य स्वारस्यं तु तथैव पूर्वानुरागेणानिमिषा सतीति ॥

यदाप्रभृति साऽपश्यच्छिखिपिच्छधरं हरिम् ॥
तदाप्रभृति संजाता पाषाणप्रतिमेव सा ॥ १ ॥

अस्यां पूर्वानुरागेऽवस्थायामधुना तावन्नायकरतेरनुद्भावः। तथापि परस्पररतिमत्त्वः प्रपापालिकाया अस्याश्च रतिरसस्तुल्य एवेत्यनुभवसिद्धम् ॥ एकतो रतौ रसानङ्गीकारे वियोगशृङ्गाराद्यनेकोदाहरणानां रसाभासतापत्त्या काव्यवैभवस्य ह्रासो भविष्यति । तादृशकाव्येषु बहुधैकस्य वर्णनीयस्यैव रतेः प्रतिपादनात् ॥ यद्यपि कुलटाऽगम्याद्यासक्तनायकस्यापि रसो भवति । तथापि तदीयकुलटात्वाद्यनौचित्यस्मृतौ रसस्य लयाद्रसाभासता ॥

शृङ्गाररसालम्बनीभूतस्त्रीपुंसोर्नायिकानायकसंज्ञाकरणे धुरंधरस्यायमभिप्रायः । नायकशब्दार्थः प्रधानमिति। "नायकः प्रधाने" इति चिन्तामणिः ॥ प्रकरणवशाच्छृङ्गाररसस्य लाभः। सामग्र्यां रूढिः । तथा च शृङ्गाररससामग्र्यां मुख्यत्वं नायकत्वम् । सा च विभावानुभावसंचारिस्थायिभावरूपा । तस्यां चालम्बनविभावस्य मुख्यत्वं तु प्रथमं पुरुषस्य स्त्रीसंबन्धात्स्त्रियाश्च पुरुषसंबन्धाद्वा रत्युत्पादे उद्दीपनविभावादयो मिलित्वा तमत्यन्तं स्वादूकुर्वन्तीति ।

नायिकाया मुग्धामध्याप्रौढेतिवयःकृतप्रकाराः । मुग्धा तु नवीना । "मुग्धः, नवे" इति चिन्तामणौ । अत्र यौवने रूढिः । तथा च नवयौवना मुग्धा । प्रकर्षेण वृद्धिं प्राप्तः प्रौढः । "प्रौढः प्रवृद्धे" इति चिन्तामणौ । यौवने रूढिः । तथा च प्रवृद्धयौवना प्रौढा । मुग्धाप्रौढयोर्मध्यवर्त्तियौवना मध्या । स्वकीया-परकीया-सामान्या-मानवतीप्रभृतयः प्रकृतिकृतप्रकाराः । प्रोषितपतिकाद्या दशाकृतप्रकाराः । अर्वाचीनैर्मुग्धादिवयःकृतप्रकाराः स्वीयायामेव स्वीकृताः । तत्तु प्रमादः । वयसः सर्वव्यापित्वात् । स्वकीयाया एव पक्षपातित्वाभावात् ॥ कामशास्त्रप्रसिद्धचित्रिण्या इदमुदाहरणम्—

हासः कटाक्षो मधुरा च वाणी
नृत्यं च गीतं परिरम्भणं च ।
चित्रे चरित्राणि यदा भवेयु-
र्गच्छेत्तदा का सखि! कृष्णमित्रम् ॥ १ ॥

अत्र सख्या उक्तशिक्षयोक्तनायिकाया अद्यावधि प्रत्यक्षमेलनसुखानुभवाभावो नायकसमागमाभिलाषश्च स्पष्टमवभासत इति मुग्धात्वम् । उत्तरार्द्धस्येदं तात्पर्यं, चित्रे प्रत्यक्षसदृशं सुखं भवेच्चेत्कुलकलङ्कादिदुःखं सोढ्वा कापि कृष्णं न यायात् । चित्रविनोदेनैव सत्तोऽभिलाषं पूरयेदिति ॥ उक्तोपदेशेन परकीयात्वम् । मित्रमिति कथनाच्च 'कृष्णस्योपपतित्वं स्पष्टमेव । निजपत्यर्थं मित्रशब्दस्य प्रयोगाभावात् ॥ विदग्धादिप्रकाराश्चार्वाचीनैः परकीयायामेवोक्ताः । तदपि प्रं-

मादः । स्वीयासामान्ययोरपि विदग्धात्वसंभवात् ॥ सामान्या क्रियाविदग्धा यथा—

विदेशे बहून्वासरान्यापयित्वा
प्रिये गेहमाप्ते प्रियाऽस्मारयद्द्राक् ।
सुवर्णं सुवर्णैः स्मितेनापि तारं
तथा मौक्तिकं हर्षजाश्रुच्छलेन ॥ १ ॥

वयःकृतप्रकाराश्च नायके न भणिताः । तदपि प्रमादः । नायिकायामिव नायकेऽपि क्रमेण यौवनवृद्धिचमत्कारस्य विद्यमानत्वात् । यथा—

अज्जवि कुमर अयाणो घरम्मि लेजाइ छंडियं बाला ।
महिलाजातिसुभावो नाना कज्जंति वढ्ढई णेहो(*) ।१।

अयं नायको मुग्धः ॥ शठधृष्टदक्षिणानुकूलेतिनायकप्रकाराश्च पतिविषय एवोक्ताः । तदपि प्रमादः । अनुकूलातिरिक्तप्रकारत्रयस्योपपतौ वैशिकेऽपि च संभवात् ॥ नायिकाभेदसंबन्धिरसमञ्जर्यादिग्रन्थेषु लक्षणकल्पनया साक्षात्स्वरूपज्ञाने यत्रतत्रार्वाचां प्रमादः प्रतीयते । वयमलंकारस्वरूपं नामार्थानुसारेण स्वच्छीकरिष्याम इति तेनैव दिग्दर्शनेन नायिकानायकप्रकारस्वरूपमपि नामार्थानुसारं विद्वद्भिः स्वयं स्वच्छीकरणीयम् ॥

(*) अद्यापि कुमारोऽज्ञानो गृहे नीत्वा त्यक्ता बाला । महिलाजातिस्वभावो नेति नेति कुर्वन्त्या वर्द्धते स्नेहः ॥ १ ॥

विभावो द्विविधः। आलम्बनमुद्दीपनं च। अनयोर्नामार्थानुसारेण विभिन्नस्वरूपं तु केवलं शृङ्गाररस एवोपलभ्यते। नायिकामवलम्ब्य नायकस्य नायकमवलम्ब्य च नायिकाया रतेरुद्भवान्नायिकानायकयोरालम्बनत्वम्। चन्द्रादयस्तयोरुद्भूतां रतिं प्रकृष्टतया दीपयन्तीति चन्द्रादीनामुद्दीपनत्वम्। चन्द्रादीनां कान्ताविषयकरतेः सर्वथा जनकत्वाभावान्नायिकानायकरूपाऽऽलम्बनतः सर्वथा तटस्थत्वम्। अन्यरसोद्दीपनानि त्वालम्बनान्न तथा सर्वथा तटस्थानि। तेषां क्वचिदालम्बनविशेषतया क्वचिच्चानुभावविशेषतया स्थितेः। प्रायस्तथादर्शनादेव विद्वद्भिरुद्दीपनस्य चत्वारः प्रकाराः कथिताः। तदेवोक्तं मन्दारमरन्दचम्प्वाम्—

"उद्दीपनविभावोऽपि प्रोक्तः प्राज्ञैश्चतुर्विधः।
आलम्बनालंकरणं तच्चेष्टा तद्गुणास्तथा॥ १॥
तटस्थश्चेति तत्सर्वं निर्दिशामि क्रमादिह॥
आलम्बनविभावास्तु नायकादय ईरिताः॥ २॥
आलम्बनालंकरणं हारनूपुरपूर्वकम्॥
तथालम्बनचेष्टास्तु हावभावादयो मताः॥ ३॥
आलम्बनगुणाश्चापि रूपयौवनपूर्वकाः॥
तटस्थाः शीतकिरणमलयानिलपूर्वकाः॥ ४॥

इति॥

आलम्बनस्यालंकार इति कथनेनालम्बनशोभाकरपदार्थो बोध्यः। यथा सुभटस्यायुधमलंकारः। प्रायो गुणचेष्टालंकार-

विशिष्टैव नायिकालम्बनास्पदं भवति। तदुक्तं प्राक् "नायिकानायकौ रम्यौ" इति ॥ परं तु क्वचिद्रत्युत्पत्तेः पश्चान्नायिकाया गुणचेष्टालंकारा अप्युद्दीपनानि भवन्ति। एवमन्यरसेष्वप्युद्दीपनविवेकः ॥

नृप! शृङ्गारो द्विविधः संयोगाख्यो वियोगनामा च
संयोगो वै सम्यग्योगो(*) विगतो वियोग इह बोध्यः ॥ १ ॥

वियोगः पञ्चधा पूर्वानुरागः प्रथमो मतः।
विरहश्च प्रवासश्च मानः शापश्च भूपते! ॥ २ ॥
पूर्वानुरागः स्नेहः स्यान्मेलनात्पूर्वसंभवः ॥
ईषत्कालस्यान्तरं हि विरहः परिकीर्तितः ॥ ३ ॥
विदेशवासः कान्तस्य प्रवासः कथितो नृप! ॥
मानजन्यस्तु मानः स्याच्छापः शापसमुद्भवः ॥ ४ ॥

सम्यग्योगः संयोगः। संयोग एकविधः। काव्यप्रकाशकारः "तत्राद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तत्वादपरिच्छेद्य एक एव गण्यते" इत्याह। मम तु मतं, परस्परावलोकनादीनां न शृङ्गाररसप्रकारयोग्यतेति तस्यायं प्रमादः ॥ विगतो योगो वियोगः। संयोगात्पूर्वमनुरागः पूर्वानुरागः। तत्संबन्धी वियोगः पूर्वानुरागहेतुकवियोगः। विरह इत्यत्र वीत्युपसर्गार्थ ईषत्। "वि ईषदर्थे" इति शब्दस्तोम-

(*) योगशब्दस्य देहलीदीपन्यायेनोभयत्र संबन्धः ॥

महानिधिकोषे ॥ "रह त्यागे" इत्यस्माद्धातोः घञि रहशब्दो निष्पन्नः । विरह इति समुदितशब्दार्थ ईषत्त्याग इति । अत्र संयोगे रूढिः । तथा च किञ्चित्कालपर्यन्तं संयोगस्य त्यागो विरहशब्दार्थः । विरहसंबन्धी वियोगो विरहहेतुकवियोगः । विरहस्य निमित्तं तु गुरुलज्जाकार्यपारवश्यादिकम् । प्रवासस्तु विदेशवासः । "प्रवासः विदेशवासे" इति शब्दस्तोममहानिधिकोषे । प्रवाससंबन्धी वियोगः प्रवासहेतुकवियोगः । मानस्तु कोपविशेषः । "मानः कोपविशेषे । स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ॥" इति चिन्तामणिः ॥ मानसंबन्धी वियोगो मानहेतुकवियोगः । मानो द्विधा । ईर्ष्याहेतुक ईर्ष्यामानः । प्रणयहेतुकः प्रणयमानः । ईर्ष्याशब्दार्थोऽसहनमिति । "ईर्ष्या, अक्षान्तौ" इति चिन्तामणिः ॥ अत्रान्यस्त्रीसंबन्धे रूढिः । प्रणयस्तु प्रेमपूर्वको वशीकारः । तदुक्तं दशरूपके "प्रेमपूर्वको वशीकारः प्रणयः" इति ॥ अत्र प्रणयभङ्गे रूढिः । शापो दुरीषणा । "दुरीषणा शापे । शापः, इदमेषामनिष्टमस्त्वित्येवंरूपेऽभिशापे" इति चिन्तामणिः ॥ शापसंबन्धी वियोगः शापहेतुकवियोगः ॥

संयोगशृङ्गारो यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ॥
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ।१।

नायकस्य निद्राव्याजेन नयननिमीलनं चेद्विस्रब्धनवोढेयम्।

औदासीन्येन चेन्मानिनी । मानमोचनोपायेषूपेक्षाप्येक उपायविशेषः । उपेक्षा त्वौदासीन्यम् ॥ "उपेक्षा, औदासीन्ये" इति चिन्तामणिः ॥

अत्र नायिकाया रतिस्थायिभावस्य नायक आलम्बनविभावः । शयाननायकस्पर्श उद्दीपनविभावः । लज्जाहर्षोत्कण्ठाः संचारिभावाः । तथाविधाधरचुम्बनमनुभावः । एवं रीत्याऽत्र नायिकासंबन्धी शृङ्गाररसः । तदनन्तरं च तथाविधाधरचुम्बनविधात्री नायिका नायकस्यालम्बनविभावः । नायिकायास्तादृशनम्रमुखचेष्टोद्दीपनविभावः । हर्षः संचारिभावः । तथाविधकण्ठाश्लेषणमनुभावः ॥

पूर्वानुरागहेतुकवियोगो यथा—

किं न यायाल्लोकलज्जा कुप्येद्गुरुजनो नु किम् ॥
कुञ्जे कुञ्जविहारी चेत्स्मयमानो मिलेद्धरिः ॥ १ ॥

उक्तनायिकायाः कृष्ण आलम्बनविभावः । कृष्णस्य कुञ्जविहारित्वमुद्दीपनविभावः । स्मृतिचिन्तोत्कण्ठादयः संचारिभावाः । वचनमनुभावः ।

विरहहेतुकवियोगो यथा—

विदेशाऽऽगतकान्तस्य विलम्बो वन्धुमेलने ॥
यो वभूव घटी सा तु विधातुर्घटिकाऽभवत् ॥ १ ॥

अत्र नायकस्य विदेशाद्गृहागमनेन नायिकायाः प्रवासवियोगो नष्टः । इदानीं वन्धुवर्गेण सह मेलने घटिकामात्र-

विलम्बो विरहरूपः । अत्र नायिकाविरहस्य घटिकामितकालविलम्ब आलम्बनविभावः। उत्कण्ठाऽऽवेगविषादाः संचारिभावाः । रतिः स्थायिभावः । वैवर्ण्यनेत्राकुलत्वादिकं गम्यानुभावः ॥ काव्यप्रकाशस्य बालबोधिनीटीकाकारः "अनयोरैक्ये तु प्रोषितभर्तृकातोऽस्या भेदो न स्यात् । न च मास्तु भेद इति वाच्यम् । भरतमुनिस्वीकृतानां स्वाधीनभर्तृकादिषोडशभेदानामसंगत्यापत्तेः" इत्याह ॥ अनयोर्विरहप्रवासयोः । अस्या विरहोत्कण्ठितायाः ॥ अत्रास्माकमपि संमतिः ॥ विरहप्रवासयोश्चमत्कारस्य विलक्षणत्वात् ॥

प्रवासहेतुकवियोगो यथा—

स्थायंस्थायमुपैति नीरदघटा गाढं तमस्तन्वती
पातंपातमहो तडिद्विलसति स्यान्मे गतिः क्वाधुना ॥
मार्गमार्गमिमे नटन्ति शिखिनः कूजन्ति चक्राह्वयाः
एष्वीयं हरिणा विना तु हरिणा ज्वालायते मे दृशोः।१।

अत्र प्रियस्य विदेशवास आलम्बनविभावः । नीरदघटादिकमुद्दीपनविभावः। त्रासोत्कण्ठादयः संचारिभावाः। रतिः स्थायिभावः । वचनमनुभावः । भूतभविष्यद्वर्तमानेतिप्रवासस्य प्रकारत्रयं मन्वाना अर्वाचीनास्तदनुसारेण प्रोषितपतिकाप्रवत्स्यत्पतिकाप्रवसत्पतिकेतिप्रवासवियोगिनायिकायाः प्रकारत्रयं मन्यन्ते ।

ईर्ष्याहेतुकमानवियोगो यथा—

दयितस्य निरीक्ष्य भालदेशं
चरणालक्तकपिञ्जरं सपत्न्याः ॥
सुदृशो नयनस्य कोणभासा
श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥ १ ॥

शिखरेण पद्मरागेण । "शिखरः पद्मरागः स्यात्" इति वैजयन्ती ॥ अत्रेर्ष्यामानस्य सचिन्हनायकभालदर्शनमालम्बनविभावः । प्रभाते आगमनमुद्दीपनविभावः । असूयाविषादादयः संचारिभावाः । रतिः स्थायिभावः । तादृशदृष्टिरनुभावः ॥

प्रणयभङ्गहेतुकमानवियोगो यथा—

विदेशायातस्यावधिदिवसमर्धं कथमपि
गतं तत्त्वां कृष्णो नमति न परं त्वं सहसितम् ॥
वृत्रीष्यस्मान्मन्ये कठिन उत काष्ठादपि हठो
न दग्धो यस्तेऽभूदतिविरहवैश्वानरवशात् ॥

अत्र नायिकामानस्यावधिदिनार्धगमनरूपाज्ञाभङ्गजन्यः प्रणयभङ्ग आलम्बनविभावः । प्रकोत्सवादिनार्धस्य विफलत्वमुद्दीपनविभावः । विषादोग्रतानिर्वेदाः संचारिभावाः । रतिः स्थायिभावः । मौनमनुभावः ॥

शापहेतुकवियोगो यथा—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ॥
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ १ ॥

अत्र यक्षसंवनिधवियोगस्य कुबेरशाप आलम्बनविभावः तादृशचित्रनाश उद्दीपनविभावः । स्मृतिविस्मयविषादोत्कण्ठादयः संचारिभावाः । रतिः स्थायिभावः । अश्रुतादृशवचनं चानुभावः ॥ भोजमहाराजो वियोगस्य पूर्वानुरागमानप्रवासकरुणेतिचातुर्विध्यं वदन्करुणस्येदं लक्षणोदाहरणमाह ॥

"लोकान्तरं गते यूनि वल्लभे वल्लभा यदा ॥
भृशं दुःखायते दीना करुणः स तदोच्यते॥१॥" इति ॥

करिणीकरुणो यथा–

नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः ॥
दानज्यानिविषण्णमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥१॥

दशरूपककारस्तु–
"मृते त्वेकत्र यत्रान्यः प्रलपेच्छोक एव सः ॥
व्याश्रयत्वान्न शृङ्गारः प्रत्यापन्ने तु नेतरः" ॥ १ ॥

इत्याह ॥ रसतरङ्गिणीकारोपि—

"यूनोरेकस्मिन्मृते प्रलापः करुणरसः।
जीवतोर्विश्लिष्टयोः प्रलापः शृङ्गारः ॥"

इत्याह ॥ तरङ्गिण्या नौकानामटीकायाम्—

"यथा मृतत्वेन निश्चित एव करुणः।
तथा जीवितत्वेन निश्चित एव विप्रलम्भः"

इति स्फुटीकृतम् ॥ तदेतन्मम मतेपि समीचीनम् ॥
इति शृङ्गाररसः ॥

## अथ हास्यरसः ॥

---

वेषवृत्तान्तवचनवपुराद्या नराधिप! ॥
अन्यथाभावमापन्ना विभावाः परिकीर्तिताः॥१॥
हासः स्थायी हर्षविस्मयाद्याः संचारिणो मताः ॥
अधरस्य विकासोऽथ हस्ततालाक्षिमीलने ॥२॥
इत्याद्या अनुभावाः स्युर्यशवन्तनरेश्वर!॥

यथा—

आगच्छन्मगरोपकण्ठमिलितैरावेष्टितो बालकैः
शुद्धान्तःपरिचारिकाभिरभितः सोल्लासमावेदितः ॥

साकूतं सकुतूहलं बलिवधूवृन्दे पुरो दापय-
त्यन्नं किंचिदुदञ्चितस्मितलवः पायात्स वो वामनः॥१॥

अत्र दैत्यराजबलिस्त्रीणां हास्यस्यान्यथादेहवेषो वामनावतार आलम्बनविभावः। तस्य स्मितादिकमुद्दीपनविभावः। हर्षविस्मयौ संचारिभावौ। कुतूहलपदबोध्यहस्ततालतादृशवचनौष्ठविकासादिकमनुभावः। रसगङ्गाधरसाहित्यदर्पणयोर्हासः षोढा भणितः।

"ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम्।
किंचिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः॥१॥
मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम्॥
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम्॥२॥"
इति॥

मम तु मतं, उक्तप्रकारेषु चमत्कारवैलक्षण्याभावात्तादृशप्रकाराङ्गीकारोऽर्वाचां प्रमादः॥

## अथ करुणरसः॥

"विभवादिहतिः क्लेशो मृत्युः शापो दरिद्रता॥
दुःखमित्यादयो राजन्! विभावाः करुणे स्मृताः॥१॥
चिन्ता दैन्यं विषादश्च त्रासो मरणमेव च॥
निर्वेदाद्या महाराज! मताः संचारिणोऽमिताः॥२॥

शोकः स्थायी शिरःकम्पो दैवोपालम्भ एव च ॥
निःश्वासश्चैव वैवर्ण्यमनुभावाः प्रकीर्तिताः॥३॥"

यथा—

आरामेषु सरस्सु मां प्रतिपदं योऽपाययत्प्रेमत
आतृप्त्यासवमासनैः सुवचनैर्योऽवर्धयद्गौरवम् ॥
नो मां विस्मृतवान्पवित्रसमये पत्रादिना सज्जन-
स्तस्मिन्नाकमिते न तेन हि गतान् धिङ्मे मुरारेरसून्॥१॥

अत्र मम कविराजमुरारिदानस्य शोकस्थायिभावस्य मेदपाटेश्वरमहाराणासज्जनसिंहपरलोकप्रयाणमालम्बनविभावः। तस्य तादृशानुग्रहस्मृतिरुद्दीपनविभावः। चिन्ता-स्मृतिविषादमरणनिर्वेदादयः संचारिभावाः। स्वारमधिक्कृतिरनुभावः॥

यथा वा—

विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ॥
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्तनम्॥१॥

अत्र दशरथमहाराजशोकस्थायिभावस्य रामवनवास आलम्बनविभावः। तस्य बाल्यावस्थोद्दीपनविभावः। चिन्तावितर्कविषादाः संचारिभावाः। तादृशवचनमनुभावः॥

## अथ रौद्ररसः॥

"शत्रुदाराद्यपहृतिर्मात्सर्यं कलहस्तथा ॥

आधिक्षेपश्चोपहासो विभावाः स्युर्नराधिप!॥१॥
मदोत्साहोग्रताऽऽवेगा नृप! संचारिणो मताः॥
रौद्रे रसे महाराज! स्थायी क्रोध उदाहृतः॥२॥
स्वबाहुवीक्षणं नेत्रारुणिमाऽधरदंशनम्॥
भ्रूभङ्गश्चैवमाद्याः स्युरनुभावा नरेश्वर!॥३॥

यथा—

अद्यैव श्रुतमस्ति मे रिपुरिति प्राहाधुना कस्त्विदं
धंश्यः पङ्गुदलस्य तस्य यशवन्नामास्मि यद्गौरवे(*)
मेरुः सर्षपतां गतो हयखरक्षुण्णान्विधायाचलान्
शिप्रा(†)पूर्तिमहं तनोमि(‡) न विधास्ये शिलिपतां-
रामवत् ॥ १ ॥

अत्र मरुधराधीशपूर्वयशवन्तसिंहक्रोधस्थायिभावस्य यवनेन्द्रकुमार औरङ्गजेबाख्यः शत्रुरालम्बनविभावः। तस्य संदेश उद्दीपनविभावः। हर्षगर्वोत्साहस्मृतिविस्मयाऽसूयाः संचारिभावाः। शिप्रापूर्तिमहं तनोमीत्यादिवचनमनुभावः॥

## अथ वीररसः॥

वीरे विभावः स्वा शक्तिरथवेष्टविनिश्चयः॥

(*) यस्य जयचन्द्रस्य गौरवे।

(†) शिप्रा मालवदेशवाहिनी नदी। यस्यास्तटे महाराजयशवन्तसिंहौरङ्गजेबायोः समरः समभवत्।

(‡) अत्र "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमानसमीपे भविष्यति वर्तमानप्रयोगः॥

रावितरणम्। अन्यथा त्ववश्यं दद्यादेवेति संभावनाऽलंकारः॥ अत्र परशुरामदानविषयोत्साहस्य यथेष्टपृथ्वीदानसमयलाभ आलम्बनविभावः। पृथ्वीनिःक्षत्रियकरणरूपकीर्तिख्यातिरुद्दीपनविभावः। हर्षगर्वादयः संचारिभावाः। अश्रूद्गमोऽनुभावः॥

दयावीरो यथा—

ज्ञात्वा नागपुरेश! यच्छरणदं मां मानसिंहाभिध-
मायातोऽसि सुरेश्वराज्जलनिधिर्मैनाकशैलं यथा॥
नूनं त्वां परिपालयामि विपदो मोक्ष्ये त्वदर्थे शिरः
क्षात्रं जन्म धृतायुधस्य सफलं भूयात्त्वयाद्यैव मे॥१॥

अत्र राजराजेश्वरमानसिंहदयाविषयोत्साहस्य मधुराजदेवाख्यनागपुरनरेशशरणागतिरालम्बनविभावः। अनाथोऽस्मीत्यादि नागपुरनरेशस्यार्तवचनमुद्दीपनविभावः। धृतिस्मृतिहर्षगर्वाः संचारिभावाः। वचनमनुभावः॥

धर्मवीरो यथा—

धन्यं खल्वद्य दिनं दिल्लीपतिना समं रणं कृत्वा॥
स्वाम्यर्थे मे मरणं सफलं कुर्यामिति ब्रवीति रघुः॥१॥

मरुधराधीशाजितसिंहसामन्तलवेराग्रामठक्कुरयादववंश्यरघुनाथसिंहस्योक्तिरियम्॥ अत्र रघुनाथसिंहनिष्ठस्वामिधर्मसंबन्ध्युत्साहस्य त्रिमासवयस्कस्वस्वाम्यजितसिंहमहाराजार्थं युद्धे मरणावसरप्राप्तिरालम्बनविभावः। अवरङ्गाख्ययवनेन्द्रेण

सह दिल्लीनगरे भावियुद्धमुद्दीपनविभावः। धृतिहर्षगर्वराजरतयः संचारिभावाः। वचनं मुखविकासो बाहुस्फुरणं चानुभावः। तत्र वचनमुक्तम्। अन्यद्गम्यम् ॥

## अथ भयानकः ॥

घातका जन्तवः शून्यवनं चासह्यवस्तु च ॥
बलिनश्चापराधश्चालम्बनानि भयानके ॥ १ ॥
उद्दीपनं तु राजेन्द्र! तेषां चेष्टा प्रकीर्तिता ॥
शङ्का त्रासश्चपलता विषादो दैन्यमेव च ॥ २ ॥
संचारिणो भयं स्थायी भयानकरसे स्मृतः ॥
अनुभावास्तु कम्पाश्रुरोमाञ्चाद्या उदाहृताः ॥३॥

यथा—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ॥
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

अत्र मृगभयस्य मृगमनुधावन्नाखेटकारी दुष्यन्त आलम्बनविभावः॥ तस्य शरसंधानमुद्दीपनविभावः। त्रासविषादचपलताः संचारिभावाः। ग्रीवाभङ्गुरत्वादिकमनुभावः॥

## अथ बीभत्सरसः ॥

विभावोऽहृद्यवस्तु स्याद्बीभत्से मरुनायक! ॥
स्थायी जुगुप्सा संचारी व्याधिश्चपलता तथा ॥१॥
नासिकाकूणनं कम्पः शिरसः ष्ठीवनं वमिः ॥
इत्याद्या मरुभूपाल! ह्यनुभावाः प्रकीर्तिताः ॥२॥

यथा–

विदार्य कुक्षिं नखरैः पिशाचा
अन्त्राणि चाकृष्य रदैरशङ्कम् ॥
पिबन्ति रक्तं पुनरुद्वमन्ति
कथं रणे राष्ट्रपते! रुचिस्ते ॥ १ ॥

अत्र युद्धं पश्यतां घृणाशीलस्य जुगुप्सास्थायिभावस्य यत्र तत्र मांसान्त्ररक्तदर्शनमालम्बनविभावः। पिशाचानां तादृशरक्तपानोद्वमनादिक्रियोद्दीपनविभावः। ततोऽपसरणार्थं चपलता व्याधिश्च संचारिभावः। निन्दावचनं ष्ठीवनादिकं चानुभावः ॥ पूर्वमुक्तमपरमनुक्तम् ॥

## अथाद्भुतरसः ॥

विभावोऽपूर्ववस्तु स्याददद्भुते तु रसे नृप! ॥

हर्षो वितर्कः संचारी स्थायी विस्मयं इष्यते ॥१॥
साधुवादः शिरःकम्पो नयनस्यानिमेषणम् ॥
इत्याद्या धरणीपालानुभावाः परिकीर्तिताः ॥

यथा—

कृष्णेनाम्ब! गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण! क एवमाह मुसली मिथ्याम्ब! पश्याननम् ॥
व्यादेहीति विकासिते शिशुमुखे माता समग्रं जगद्
दृष्ट्वा यस्य जगाम विस्मयपदं पायात्स वः केशवः ।२।

अत्र यशोदाया विस्मयस्थायिभावस्य लघुतरबालकृष्णमुखे त्रिलोकीदर्शनमालम्बनविभावः । तत्रत्यत्रिलोकीवासिनां विविधाः क्रिया उद्दीपनविभावः । हर्षो वितर्कश्च संचारिभावः । अनिमेषत्वादिर्गम्योऽनुभावः ॥

## अथ शान्तरसः ॥

जगतोऽनन्तदुःखानि विभावः शान्त इष्यते
निर्वेदः स्थायिभावः स्यात्संचारी तु मतिर्धृतिः ॥
अनुभावाः स्पृहाऽभावो दमश्च समदर्शिता ॥

यथा—

भोगा मेघवितानमध्यविलसत्सौदामनीचञ्चला

भावापेक्षया रसस्य सर्वदा प्रधानत्वेऽपि कचिद्भावोऽपि प्रधानत्वमापद्यते ॥ तदुक्तं सहृदयधुरंधरध्वनिकारेण—

"तेषामाधिकारिकवाक्यापेक्षया गुणीभावो विवाहप्रवृत्तभृत्यानुयायिराजवत्" इति ॥

यथा—

गच्छेयं गहनं वनं प्रियतमे कृष्णेपि तत्रागते
कृत्वा स्वाननशीतदीधितिकरैस्तापापनोदं मम ॥
यद्वन्मे हृदयं स्मितान्वितदृशाऽहार्षीत्तथा मामसौ
कुर्यात्स्वान्तगतां स्मितेन सहितं गोपीगणानन्ददः ।१।

एतस्याः पूर्वानुरागिपरकीयाया रतिस्थायिभावस्य श्रीकृष्ण आलम्बनविभावः ॥ "कृत्वा स्वाननशीतदीधितिकरैस्तापापनोदं मम" इति वचनाच्छ्रीकृष्णस्य तादृशसौन्दर्यमुद्दीपनविभावः । हर्षोत्कण्ठादयः संचारिभावाः । मौनमेकाग्रदृष्टिश्चेत्याद्या गम्यानुभावाः॥ अत्र शृङ्गाररसापेक्षया चिन्ताव्यभिचारिभावचमत्कारस्य प्राधान्यम् ॥

नाटके "अनुकर्तुं योग्योऽनुकार्यः" इति व्युत्पत्त्या यस्यानुकरणं क्रियते सोऽनुकार्य इति, अनुकरणकर्ता चानुकारीति कथ्यते ॥ तिरोहितपदार्थस्य पुनःप्रकाशनमाविर्भावः । यथा भस्माच्छन्नस्याग्नेर्वायुवशात्पुनः प्रज्वलनम् । वासना तु कस्तूर्याद्यपगमेऽपि तद्भाण्डस्य कस्तूर्यादिवासनावासितत्वम् । नाटके साक्षाद्रसस्त्वनुकार्यसीतारामादिवर्णनीयवृत्तिः । रामरतेः सीताविषयत्वात्सीतारतेश्च रामविषयत्वात् । अनु-

कारिणोर्नटीनटयोस्तु सीतारामादेस्ताद्रूप्यानुसंधानाच्छृङ्गार-रसस्याभासः ।

तत्तद्रसवासनावासितहृदयानां सामाजिकानां तु तत्तद्र-सस्याविर्भावः । तथाहि, सीतारामादितादृशानुकरणदर्शने शृङ्गाररसवासनावासितहृदयसामाजिकानां शृङ्गाररसस्या-विर्भावः । तत्र सामाजिकानां न खलु सीतारामादिविषयि-का, न वा नटीनटविषयिका, न वा निजप्रियाप्रियविषयिका रतिरुत्पद्यते; किं तु निजप्रियाप्रियरतिवासनावासितहृदयेषु सामान्यतया शृङ्गाररसस्याविर्भावः । एवमन्यरसेष्वपि ज्ञे-यम् । सामाजिकास्तु बालवृद्धतरुणस्त्रीपुरुषाः सर्वेऽपि भवन्ति । तत्तद्रसवासनावासितहृदयेषु तत्तद्रसस्याविर्भावाच्छृङ्गाररसं-वासनावासितहृदयानां युद्धानुकरणदर्शने न रौद्ररसाविर्भावः । इत्यादि ॥ यत्तद्रसविषयनाटकदर्शनार्थं तद्रसान्यरसवा-सनावासितहृदयसामाजिका अपि समायान्ति । तदा-गमनं तु दृश्यकाव्यनाटकरसास्वादप्रयोजनेनैव । रामायणादिश्रव्यकाव्येषु सकलरसवर्णनम् । तत्र श्रोतृव-र्गे शृङ्गाररसवासनावासितहृदयानां शृङ्गाररसस्याविर्भावः । करुणरसवासनावासितहृदयानां करुणरसस्याविर्भावः । इत्या-दि ॥ काव्यरसस्तु समस्तसामाजिकैरास्वाद्यते ॥ ननु काव्ये प्रायो वर्णनीयाः कल्पिता अपि भवन्तीति तेषु कथं साक्षा-द्रसः? इति चेच्छृणु । कविस्त्वनियतिकृतनियमरहितत्वादि-ह कल्पितं वास्तववज्जडश्च चेतनवत् । इत्यादि ॥ श्रव्यका-व्यस्य केवलवाणीमयत्वात्तत्र वर्णनीयसामाजिकयोरतिरिक्त-

स्यानुकरणकर्तुरितरपदार्थस्याभावात्कस्मिंश्चिदपि रसस्याभासो नास्तीति दृश्यकाव्यनाटकादेर्लक्षणम् ॥ काव्यस्य वक्ता तु सामाजिकश्रवणान्तःपाती ॥ मम तु मतं, कदाचित्कस्यचित्सामाजिकस्य कदाचिच्च कस्यचित्सामाजिकस्य तादृशरसाविर्भावो ह्यवान्तरफलम् । उभयविधस्यापि काव्यस्य मुख्यं फलं तु समस्तसामाजिकविषयः काव्यरसस्य सर्वदा समानतया युगपदास्वादः ॥ काव्यास्वादविषये, काव्यप्रकाशे " सद्यःपरनिर्वृतये " इति । काव्यरसस्तु कविरचनाचातुर्यास्वादः । कविरचनाचातुर्यमेव कविसरस्वतीत्युच्यते ॥ सरस्वती-भारती-वाणी-वाग्देवीतिपर्यायाः ॥ कविरचनाचातुर्यविषयं लोकप्रवादोऽयम्—

" रविर्न यायाद्यं देशं तं देशं प्राप्नुयात्कविः " इति ॥

कविभारत्या लोकविलक्षणत्वं दर्शयन्काव्यप्रकाशगतकारिकाकारः—

" नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ॥
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥१॥

इत्याह ॥ शृङ्गारादयो रसास्तु कविभारत्या अवयवविशेषाः । काव्यरसमहिमविषये चानेकानि प्राचीनपद्यानि—

" निवसन्ति सुराः स्वर्गे निवसामो वयं भुवि ॥

किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ १ ॥

अपि च—

सत्कविरसनासूर्पीनिस्तुषतरशब्दशालिपाकेन ॥
तृप्तो दयिताधरमपि नाद्रियते का सुधादासी ॥ २ ॥

पुनश्च—

किं कविवचसा किं वा कामिन्या किं च धन्विबाणेन ॥
यस्मिन्स्वान्ते नयने तनौ च लग्ने शिरो न धूनयति ॥

विभावादिसंयोगाद्रत्यादिस्थायिभावानां स्वादुत्वे शृङ्गारादयो रसा भवन्ति। एवं शृङ्गारादिरसा उपमाद्यलंकाराः प्रसादादयो गुणाश्चेत्येवमाद्या मिलित्वा काव्यं स्वादूकुर्वन्ति" तत्र तदास्वादः काव्यरसः ॥ अत एव च स शृङ्गारादिरसेभ्यः पर उत्कृष्टो विलक्षणश्च । विभावादयो मिलित्वा स्थायिभावं स्वादूकुर्वन्तीतीतरभावानां स्थायिभावपरिचारकतया स्थायिभावो राजत्वेन व्यवहृतः । "यथा नराणां नृपतिः" इति भरतः ॥ रसदशां प्राप्ताः स्थायिभावाश्च काव्यं स्वादूकुर्वन्तीति काव्यरसस्य राजराजपदयोग्यत्वम् ॥ प्रायः शृङ्गारादिरसाऽलंकारगुणादयो मिलित्वैव काव्यं स्वादूकुर्वन्ति । तथापि क्वचित्कस्यचिदभावेऽपि काव्यरसनिष्पत्तिर्भवत्येव ॥ साहित्यशास्त्रस्यायं सिद्धान्तः पूर्वमुक्तः । स च सर्वत्र स्मरणीयः ॥

इतिश्रीमन्मरुमण्डलमुकुटमणि-राजराजेश्वराधिराज जी. सी. एस. आई. ...
कविराजमुरारिदानविरचिते यशवन्तभूषणे
नाम द्वितीयाकृतिः समाप्ता ॥

स्यानुकरणकर्तुरितरपदार्थस्याभावात्कस्मिंश्चिदपि रसस्याभासो नास्तीति दृश्यकाव्यनाटकाद्वैलक्षण्यम् ॥ काव्यस्य वक्ता तु सामाजिकश्चएवन्तःपाती ॥ मम तु मतं, कदाचित्कस्यचित्सामाजिकस्य कदाचिच्च कस्यचित्सामाजिकस्य तादृशरसाविर्भावो ह्यवान्तरफलम्। उभयविधस्यापि काव्यस्य मुख्यं फलं तु समस्तसामाजिकविषयः काव्यरसस्य सर्वदा समानतया युगपदास्वादः ॥ काव्यास्वादविषये काव्यप्रकाशे "सद्यःपरनिर्वृतये" इति। काव्यरसस्तु कविरचनाचातुर्यास्वादः। कविरचनाचातुर्यमेव कविसरस्वतीत्युच्यते ॥ सरस्वती-भारती-वाणी-वाग्देवीतिपर्यायाः ॥ कविरचनाचातुर्यविषयं लोकप्रवादोऽयम्—

"रविर्न यायाद्यं देशं तं देशं प्राप्नुयात्कविः" इति ॥

कविभारत्या लोकविलक्षणत्वं दर्शयन्काव्यप्रकाशगतकारिकाकारः—

"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ॥
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥१॥

इत्याह ॥ शृङ्गारादयो रसास्तु कविभारत्या अवयवविशेषाः। काव्यरसमहिमविषये चानेकानि प्राचीनपद्यानि—

"निवसन्ति सुराः स्वर्गे निवसामो वयं भुवि ॥

किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥१॥

अपि च–

सत्कविरसनासूर्पीनिस्तुषतरशब्दशालिपाकेन ॥
तृप्तो दयिताधरमपि नाद्रियते का सुधादासी ॥ २ ॥

पुनश्च–

किं कविवचसा किं वा कामिन्या किं च धन्विबाणेन ॥
यस्मिन्स्वान्ते नयने तनौ च लग्ने शिरो न धूनयति ॥

विभावादिसंयोगाद्रत्यादिस्थायिभावानां स्वादुत्वे शृङ्गारादयो रसा भवन्ति। एवं शृङ्गारादिरसा उपमाद्यलंकाराः प्रसादादयो गुणाश्चेत्येवमाद्या मिलित्वा काव्यं स्वादूकुर्वन्ति तत्र तदास्वादः काव्यरसः ॥ अत एव च स शृङ्गारादिरसेभ्यः पर उत्कृष्टो विलक्षणश्च । विभावादयो मिलित्वा स्थायिभावं स्वादूकुर्वन्तीतीतरभावानां स्थायिभावपरिचारकतया स्थायिभावो राजत्वेन व्यवहृतः । " यथा नराणां नृपतिः " इति भरतः ॥ रसदशां प्राप्ताः स्थायिभावाश्च काव्यं स्वादूकुर्वन्तीति काव्यरसस्य राजराजपदयोग्यत्वम् ॥ प्रायः शृङ्गारादिरसाऽलंकारगुणादयो मिलित्वैव काव्यं स्वादूकुर्वन्ति । तथापि क्वचित्कस्यचिदभावेऽपि काव्यरसनिष्पत्तिर्भवत्येव ॥ साहित्यशास्त्रस्यायं सिद्धान्तः पूर्वमुक्तः । स च सर्वत्र स्मरणीयः ॥

इतिश्रीमन्मरुमण्डलमुकुटमणि- राजराजेश्वर- महाराजाधिराज जी. सी. एस. आई.. श्रीयशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तभूषणे काव्यनिरूपणं नाम द्वितीयाकृतिः समाप्ता ॥

स्यानुकरणकर्तुरितरपदार्थस्याभावात्कस्मिंश्चिदपि रसस्याभासो नास्तीति दृश्यकाव्यनाटकादेर्लक्षणम् ॥ काव्यस्य वक्ता तु सामाजिकश्चैवान्तःपाती ॥ मम तु मतं, कदाचित्कस्यचित्सामाजिकस्य कदाचिच्च कस्यचित्सामाजिकस्य तादृशरसाविर्भावो ह्यवान्तरफलम् । उभयविधस्यापि काव्यस्य मुख्यं फलं तु समस्तसामाजिकविषयः काव्यरसस्य सर्वदा समानतया युगपदास्वादः ॥ काव्यास्वादविषये काव्यप्रकाशे " सद्यःपरनिर्वृतये " इति । काव्यरसस्तु कविरचनाचातुर्यास्वादः । कविरचनाचातुर्यमेव कविसरस्वतीत्युच्यते ॥ सरस्वती-भारती-वाणी-वाग्देवीतिपर्यायाः ॥ कविरचनाचातुर्यविषयं लोकप्रवादोऽयम्—

" रविर्न यायाद्यं देशं तं देशं प्राप्नुयात्कविः " इति ॥

कविभारत्या लोकविलक्षणत्वं दर्शयन्काव्यप्रकाशगतकारिकाकारः–

" नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ॥
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥१॥

इत्याह ॥ शृङ्गारादयो रसास्तु कविभारत्या अवयवविशेषाः । काव्यरसमहिमविषये चानेकानि प्राचीनपद्यानि–

" निवसन्ति सुराः स्वर्गे निवसामो वयं भुवि ॥

किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥१॥

अपि च–

सत्कविरसनासूर्पीनिस्तुषतरशब्दशालिपाकेन ॥
तृप्तो दयिताधरमपि नाद्रियते का सुधादासी ॥ २ ॥

पुनश्च–

किं कविवचसा किं वा कामिन्या किं च धन्विबाणेन ॥
यस्मिन्स्वान्ते नयने तनौ च लग्ने शिरो न धूनयति ॥

विभावादिसंयोगाद्रत्यादिस्थायिभावानां स्वादुत्वे शृङ्गारादयो रसा भवन्ति। एवं शृङ्गारादिरसा उपमाद्यलंकाराः प्रसादादयो गुणाश्चेत्येवमाद्या मिलित्वा काव्यं स्वादूकुर्वन्ति तत्र तदास्वादः काव्यरसः ॥ अत एव च स शृङ्गारादिरसेभ्यः पर उत्कृष्टो विलक्षणश्च । विभावादयो मिलित्वा स्थायिभावं स्वादूकुर्वन्तीतीतरभावानां स्थायिभावपरिचारकतया स्थायिभावो राजत्वेन व्यवहृतः । "यथा नराणां नृपतिः" इति भरतः ॥ रसदशां प्राप्ताः स्थायिभावाश्च काव्यं स्वादूकुर्वन्तीति काव्यरसस्य राजराजपदयोग्यत्वम् ॥ प्रायः शृङ्गारादिरसाऽलंकारगुणादयो मिलित्वैव काव्यं स्वादूकुर्वन्ति । तथापि कचित्कस्यचिदभावेऽपि काव्यरसनिष्पत्तिर्भवत्येव ॥ साहित्यशास्त्रस्यायं सिद्धान्तः पूर्वमुक्तः । स च सर्वत्र स्मरणीयः ॥

इतिश्रीमन्मरुमण्डलमुकुटमणि- राजराजेश्वर- महाराजाधिराज जी. सी. ऐस. आई.. श्रीयशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तभूषणे काव्यनिरूपणं नाम द्वितीयाकृतिः समाप्ता ॥

॥ श्रीहरिः ॥

# ॥ अथालंकाराः ॥

जगतोऽलंकृतिं नित्यं नानारूपस्य धारणात् ॥
प्रभुं प्रणम्य काव्यस्यालंकारान्वच्मि भूपते! ॥१॥

अलंकारा द्विविधाः ॥ शब्दरूपेण काव्यशोभाकरः शब्दालंकारः । अर्थरूपेण काव्यशोभाकरोऽर्थालंकारः ॥

## ॥ अथ शब्दालंकारः ॥

वदन्ति शब्दं ब्रह्मेति वैयाकरणपण्डिताः ॥
अलंकारोऽस्य शब्दस्य राजन्नद्य निरूप्यते ॥१॥

शब्दनिष्ठः काव्यशोभाकरो धर्मः शब्दालंकारः ॥

## ॥ अनुप्रासः ॥

अत्रानूपसर्गार्थो वीप्सा । "अनु वीप्सायाम्" इति चिन्तामणिः ॥ प्रोपसर्गार्थः प्रकृष्टः । प्रकृष्ट उत्तमः । "प्रकृष्ट उत्तमे" इति चिन्तामणिः ॥ आसशब्दार्थो न्यासः । "प्रकृष्टो न्यासः प्रासः" इति चिन्तामणिः । अनुप्रासेतिसमुदितशब्दार्थस्तु

वारं वारमुत्तमन्यास इति॥ अर्थस्य वारं वारं न्यासे पुनरुक्तिर्दूषणम्। तद्विपरीतस्य भूषणस्य बोधार्थमस्मिन्नामनि धुरंधरेण प्रोपसर्गः प्रयुक्तः। वारं वारमुत्तमरीत्या न्यासस्त्वनेकेषां वस्तूनां भवतीत्यन्यत्रातिव्याप्तिवारणायात्र शब्दस्य वारं वारं न्यासे रूढिः। अत्र काव्यालंकारप्रकरणम्। काव्ये च शब्दार्थरूपं वस्तुद्वयमेव भवति। तत्र वारं वारमर्थन्यासस्य दूषणरूपतयाऽनुत्तमत्वाच्छब्दालंकारप्रकरणाच्चेह वारं वारं शब्दन्यासस्यार्थसिद्धत्वमपि। तथा च, अनु वारं वारं प्रकृष्टस्योत्तमस्य शब्दस्य न्यासोऽनुप्रास इति फलितोऽर्थः॥

## अनुप्रासस्तु शब्दस्योत्तमो न्यासः पुनः पुनः॥

यथा—

जयी जगत्सु विख्यातो जसवन्तजनाधिपः॥

वर्णः, पदं, वाक्यं, चरण इत्येतत्सर्वं शब्दः। अत्र जवर्णस्य वारं वारमावृत्तेरनुप्रासालंकारः॥

यथावा—

छत्रं श्रीयशवन्तसिंहनृपतिः पुत्रेषु राज्ञां यथा
तद्वद्वाजिषु सज्जनो(*)ऽस्ति बहुलं चाश्चल्यमेतत्समम्।
नो नद्यां न च नेत्रयोर्न च नटे नो वापि नार्यां तथा
नो मीने न च मारुते न च मृगे नो मानसे दृश्यते॥१॥

अत्र नकारमकारात्मकवर्णयोरावृत्तेरनुप्रासालंकारः॥

यथावा—

(*) राजराजेश्वरस्य प्रीतिपात्रमेतन्नामकोऽश्वः।

यशवन्तमहामात्यप्रताप! मतिमंस्त्वया।
मरुभूमिर्निर्भयाद्य विहिता भुजविक्रमात् ॥१॥

अत्र पूर्वार्धे मवर्णस्योत्तरार्धे च भवर्णस्यावृत्तेरनुप्रासालंकारः।

महाराजाधिराज-के. सी. एस. आई.-एडिकाङ्ग टु हिज रोयल हाईनेस दि प्रिंस आफ वेल्स-मरुदेशमहाराजमहामात्यकरनलसरप्रतापसिंहस्येदं चित्रम् ॥



यथावा—

यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य॥
यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।१।

अत्र "दवदहनः" इत्यस्य "तुहिनदीधितिः" इत्यस्य च पदस्य, "यस्य सविधे दयिता" इति वाक्यस्य चावृत्तेरनुप्रासः॥ पूर्वपदयोः समसितत्वात्पदत्वम्। "यस्य सविधे दयिता" इत्यस्य पदसमुदायरूपत्वाद्वाक्यत्वम्॥

यथावा—

हारहारकुचाभोगा रमणी राजतेतराम्॥

अत्र हारशब्दस्यावृत्तिः। अत्र प्रथमहारशब्दार्थो मुक्तामाला। द्वितीयहारशब्दार्थो मनोहर इति। पूर्वोदाहरणे शब्दयुगलस्यैकार्थत्वम्। इह त्वर्थयुगलस्य पार्थक्यम्॥

यथावा—

समरसमरसा ते वाहिनी शूरमान्या॥

अत्र समरशब्दस्यावृत्तिः। प्रथमसमरशब्दार्थो युद्धम्। द्वितीयसमरशब्दस्यार्थाभावः। "समरसा" इति संपूर्णशब्दस्य सार्थकत्वेन विवक्षितत्वात्। समरसा समानरसवती॥

यथावा—

मधुपराजिपराजितमानिनी॥

भ्रमरपङ्क्तिर्मानिनीमजयत् । उद्दीपनतया मानिन्या मानमोचनमकरोदिति भावः । अत्र पराजिशब्दस्यावृत्तिः । उभयत्राप्यर्थाभावः । "मधुपराजि" इत्यत्र मधुप-राजि-शब्दयोः, "पराजित" इत्यत्र परा-जित-शब्दयोश्च पार्थक्यात् ॥

यथावा–

यदङ्गारवद्गां खुरैः स्पर्शयन्तः
कुरङ्गा इवाङ्गानि संकोचयन्तः ।
नटन्तो रटन्तो भटं तोषयन्त-
स्तुरङ्गाः सुरङ्गाः पुरं गाहयन्ते ॥ १ ॥

अत्र "अङ्गा-अयन्तः-अन्त" इत्येवंरूपा पदांशस्यावृत्तिः। सा च न केवलमुक्तरूपेणैव श्रवणसुखावहा । किं तु दकाररकारादिविशिष्टैव श्रवणसुखमातनोतीत्यनुभवसिद्धम् । एवमन्यत्रापि ज्ञेयम् ॥

एतानि सर्वाण्यनुप्रासस्योदाहरणान्तराणि ॥ अर्वाचीनाश्छेकानुप्रासलाटानुप्रासादीन् बहून्प्रकारान्मन्यन्ते । तत्तुच्छम् । किं च वर्णस्य पुनरावृत्तिरनुप्रासः, शब्दस्य पुनरावृत्तिर्यमकमितिशब्दालंकारस्य द्वैविध्यं वदन्ति । यमकस्य च प्रकारत्रयं कथयन्ति । शब्दयुगलस्याप्यर्थाभावे एकः । एकस्य सार्थकत्वेऽपरस्य चानर्थकत्वे द्वितीयः । उभयोश्चार्थवत्त्वे [illegible] । उभयोरर्थवत्त्वेऽपि भेदस्त्ववश्यं भाव्यः । एते शब्दा-[illegible]र्थवत्त्वेऽनुप्रासालंकारं स्वीकुर्वन्ति । यथा

"यस्यं न सविधे" इत्यत्र। अत एवानुप्रासाच्छेददर्शनायात्र भिन्नार्थकत्वमित्युक्तम् । प्रथमस्य "मधुपराजि-" इत्युदाहरणम्। द्वितीयस्य " समरसमरसा- " इत्युदाहरणम् । " तृतीयस्य "हारहार-" इत्युदाहरणम् । मम मते तु यमकस्यानुप्रासेऽन्तर्भावः । पृथगलंकारार्हत्वाभावात् ॥

केचनैकाक्षरकाव्यं शब्दालंकारं पृथङ्मन्यन्ते ॥ यथा सरस्वतीकण्ठाभरणे भोजः—

न नोननुन्नो नुन्नोनो नाऽना नानानना ननु ॥
नुन्नोऽनुन्नोन नुन्नेनो नाऽनेनानुन्ननुन्ननुत् ॥ १ ॥

मम तु मतं, सर्ववर्णानामेकत्वेऽनुप्रासतुल्यं रोचकत्वं नास्तीत्यनुभवसिद्धम् । अर्वाचीनाः पद्मखड्गधनुराद्याकारेण काव्यलेखे चित्रकाव्यमित्युक्त्वा शब्दालंकारप्रभेदं मन्यन्ते ॥

॥ पद्मबन्धः ॥

भासते प्रतिभासार! रसाभाताहताविभा ॥
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥१॥

रसैराभाता शोभिता अहताऽप्रतिहता आविभा सम्यग्दीप्तिर्यस्याः सा। भावितो निर्णीत आत्मा यस्यां सा। वादे तत्त्वकथायां शुभा। देवाभा देवतुल्या ॥



## ॥ खड्गबन्धः ॥

मारारिशक्ररामेभमुखैरासाररंहसा ॥
सारारब्धस्तवा नित्यं तदार्त्तिहरणक्षमा ॥ १ ॥
माता नतानां संघट्टः श्रियां बाधितसंभ्रमा ॥
मान्याथ सीमा रामाणां शं मे दिश्यादुमादिमा ॥ २ ॥

मारस्य कंदर्पस्यारिः शिवः, शक्र इन्द्रः, रामो दाशरथिः परशुरामो वा, इभमुखो गणेशः, एतैरासाररंहसा धारापाततुल्यवेगेन सारमतिशयमारब्धः स्तवो यस्याः सा। तेषां मारारिशक्रादीनां नित्यं पीडाहरणसमर्था। श्रियां संघट्टः संमेलनस्थानम्। बाधितो निरस्तः संभ्रम उद्वेगो यस्याः सा। रामाणां नारीणां सीमा परा काष्ठा। अन्यत्सुगमम्॥




मम तु मतं, शब्दे स्थित्वा काव्यशोभाकरो धर्मः शब्दालंकारः । उक्तकाव्यलेखक्रिया तु मनागपि न काव्यशोभाकरा । इदं त्विच्छालिप्यादिवत्क्रियाचातुर्यमात्रम् ॥ ईदृशप्रकाराङ्गीकारस्तु प्रकारगणनारसिकानामिन्द्रजालम् ॥

इतिश्रीमन्मरुमण्डलमुकुटमणि- महाराजाधिराज- राजराजेश्वर जी. सी. ऐस. आई. श्रीयशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तभूषणे शब्दालंकारनिरूपणं नाम तृतीयाकृतिः संपूर्णा ॥ ३ ॥

---

# अथार्थालंकाराः ॥

एको भवत्यनेको यः पुनरेकोप्यनेकतः ॥
तं नत्वा मरुभूपालार्थालंकारान्प्रचक्ष्महे ॥१॥

काव्येऽलंकाराणामावश्यकत्वे भगवान्वेदव्यासः—

" अर्थालंकाररहिता विधवेव सरस्वती " इति ॥

अलंकाराणां तिस्रो गतयो भवन्ति। अलंकारान्तरं, प्रकारान्तरं, उदाहरणान्तरं चेति ॥

विलक्षणत्वं यत्र स्यान्नामार्थेन हि सर्वथा ॥
अलंकारान्तरं तत्र ज्ञेयं मरुधराधिप! ॥ १ ॥
विलक्षणत्वं लीनं स्यान्नामार्थे यस्य तस्य तत् ॥
प्रकारान्तरमादेश्यं यशवन्तनरेश्वर! ॥ २ ॥
विलक्षणत्वं यत्र स्यादुक्तिमात्रेण केनचित् ॥
विजानीहि महाराज! तत्रोदाहरणान्तरम् ॥ ३ ॥

अयं विवेकोऽस्माभिर्विहितः ॥ ग्रन्थकारैरलंकारा भिन्नभिन्नक्रमेण प्रदर्शिताः । तत्रालंकारप्रदर्शनक्रमे वक्तुरिच्छातिरिक्तं निमित्तं नोपलभामहे ॥ वयं तु वर्णमालाक्रमेणालंकारान्वक्ष्यामः। तत्र—

ऋजुर्मनोहरा राजन्बहुभूषणशालिनी ॥

नानोज्ज्वलविधायुक्ता प्रोक्तादौ तन्मयोपमा ।१।

ईदृशी कामिन्यप्यादरणीया भवति ॥ विधाः प्रकारा विधानं च । बहुभूषणशालिनीतिपदं साधर्म्यमूलकरूपकाद्यनेकालंकाराश्रयत्वं बोधयति ॥ तदुक्तं चित्रमीमांसाकारेण—

उपमैषा शैलूषी संप्राप्ता चित्रभूमिकाभेदान् ॥
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥१॥

इति ॥

## अथोपमा ॥

---

लोके हि भारम्य निर्णयः खलु गुञ्जामापकर्षप्रस्थादिभिस्तत्तत्पदार्थं तुलायां तोलयित्वा विधीयते । यथा सुवर्णादीनाम् । उच्चनीचदीर्घत्वादिनिर्णयश्च हस्ताङ्गुलधनुरादिभिस्तत्तत्पदार्थस्य मानं कृत्वा विधीयते । यथा गिरिकूपादीनाम् । स्थूलसूक्ष्मत्वादिनिर्णयस्तु तत्तत्पदार्थस्येतरपदार्थं समीपे कृत्वा विधीयते । यथा वस्त्रादीनाम् ॥ उक्तलोकन्यायेन धुरंधरेणोपमालंकारोऽङ्गीकृतः ॥ प्रायो लोकच्छायानुसारेणैवालंकाराङ्गीकारात् ॥ उपमेत्यत्रोपोपसर्गार्थः सामीप्यम् । "उप सामीप्ये" इति चिन्तामणिः॥"माङ् माने" इत्यस्मान्माशब्दो निष्पन्नः । मानं मितिर्विज्ञानमिति पर्यायान्तरम् ॥ "मितिः, माने विज्ञाने" इति चिन्तामणिः । अत्र विज्ञाने विवक्षा ॥ विज्ञानं विशेषज्ञानम् ॥ तथा च, उप सामीप्यात् मा मितिः विशेषज्ञानमुपमेत्यर्थः ॥ अपरपदार्थं समीपे कृत्वा वस्तूना-

मनेके धर्मा निर्णीयन्ते। तथाप्यत्र वर्णाकृतिशीलरूपधर्मेषु रूढिः॥ तदुक्तं भगवता भरतेन—

"उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया ॥" इति॥

अत्र गुणशब्देन वर्णशीलयोः संग्रहः। न्यायशास्त्रे क्रिया गुणात्पृथगभिहिता। आकृतेश्च गुणे संग्रहः संभवति, तथापि साहित्यशास्त्रज्ञैस्तु तद्विवादः प्रणामेनानुनीतः॥ तथाहि भानुदत्तः—

गिरां तव तरङ्गिण्यां वारयोन्मत्तवारणान्॥
यद्भविष्यति लोकानामाविलो विरलो रसः॥"·इति॥

अत्र रसशब्दे श्लेषः। रसो जलं शृङ्गारादिश्च। अत्रोन्मत्तवारणा वैयाकरणा नैयायिकाश्च विवक्षिताः॥ सामाजिकानां वर्णाकृतिशीलरूपधर्मसादृश्याद्भिन्नभिन्नचमत्कारास्वाद इतीह तेषु विलक्षणत्वं विवक्षितम्॥ एकं वस्त्वन्यस्य समीपे क्रियते तदा कचिन्न्यूनत्वस्य कचिदाधिक्यस्य कचिच्च समताया निर्णयः। अत्रोपमेयस्य वर्णनीयतया तन्न्यूनत्वस्यानिष्टत्वादुपमेयाधिक्ये च व्यतिरेकालंकाराङ्गीकारादत्रोपमानोपमेययोः समतायां रूढिः॥ एकं च समीपे कृत्वा वर्णाकृतिशीलसादृश्यस्य विशेषज्ञानमुपमानामार्थः। कविरचना तु मानसी सृष्टिः। अत एवात्र मनसोपमेयमुपमानस्य समीपे कृत्वा सादृश्यनिर्णयस्य विधानम्॥ उपमेयमुपमानं धर्मो वाचकश्चेति चत्वार उपमावयवाः॥ उपमीयते यत्तदुपमेयम्। उपमीयते येन तदुपमानम्। अविकृतमुच्य-

माननिति वदतामर्वाचामुपमेयस्य न्यूनगुणत्वमर्थसिद्धम्। उपमेयस्य वर्णनीयस्य न्यूनत्वे च कथमुपमाया भूषणत्वम्। वर्णनीयन्यूनतायाः सहृदयहृदयोद्वेजकत्वाद्दूषणत्वापत्तेः॥ प्रसिद्धगुणमुपमानमिति केचित्। तत्तु समीचीनम्॥ ध्रियते इति धर्मः। वक्तीतिवाचकः।

सामीप्याद्यत्तु विज्ञानमुपमाऽसौ निगद्यते॥

यथा—

मरुद्वन्मरुभूपाल! सर्वसंचारि ते यशः॥

राजराजेश्वरयशवन्तसिंहस्य यशः सर्वसंचारीतिसामान्यज्ञाने मन्मतिगोचरेऽपि सर्वनगरे संचारकरणाद्वैश्यस्य, सर्वदेशे संचारकरणाद्राजाज्ञायाः, सर्वलोकेषु च संचारकरणान्मारुतस्य सर्वसंचारितया नेदं विशेषज्ञानमासीत्, राजराजेश्वरयशसः सर्वसंचारिता कीदृशीति। तन्निर्णयार्थं मनसि सर्वोत्कृष्टसर्वसंचारिमारुतस्य राजराजेश्वरयशसि समीपे कृते इदं विशेषज्ञानमभूत्, राजराजेश्वरयशसः सर्वसंचारिता मारुतेन सदृशीति॥ अत्र राजराजेश्वरयशो मारुतसमीपे कृत्वा यशसः सर्वसंचारितायाः विशेषज्ञानं विधीयत इति यशस उपमेयत्वम्। मारुतस्य समीपे कृत्वा विशेषज्ञानं विधीयते इति मारुतस्योपमानत्वम्। उपमानोपमेयाभ्यामुभाभ्यां ध्रियते इति सर्वसंचारितायाः धर्मत्वम्। उभयोर्धर्मसादृश्यस्य वाचकत्वादिवशब्दस्य वाचकत्वम्॥ इवसमसदृश-

तुल्यादयः शब्दा उपमावाचकाः। अत्र केवलं मारुतस्य क्रियारूपसर्वसंचारितधर्मस्योपमा ॥

यथा वा—

ओष्ठस्ते सखि! विद्रुमेण सदृशः कण्ठः समः कम्बुना
वाणी कोकिलवाक्समा गिरिसमावेतौ च वक्षोरुहौ ॥
वेणी नागवधूसमा तनुरसौ सौदामनीविभ्रमा
वक्त्रं चन्द्रसमं त्वदीयविभवो नान्यत्र संदृश्यते ॥१॥

"ओष्ठस्ते सखि! विद्रुमेण सदृशः" इत्यत्र वर्णविषये, "कण्ठः समः कम्बुना" इत्यत्राकृतिविषये, "वाणी कोकिलवाक्समा" इत्यत्र शीलविषये, "गिरिसमावेतौ च वक्षोरुहौ", इत्यत्र कठोरत्वशीलविषये आकृतिविषये च, 'वेणी नागवधूसमा" इत्यत्र वर्णाकृतिविषये, "तनुरसौ सौदामनीविभ्रमा" इत्यत्र तनुत्वचाञ्चल्यशीलविषये वर्णविषये च, "वक्त्रं चन्द्रसमम्" इत्यत्र वर्णाकृतिविषये आनन्ददायित्वादिशीलविषये चोपमा॥उक्तोपमासु सर्वास्वप्युक्तिमात्रस्य वैलक्षण्यादुदाहरणान्तरत्वम्। न तु प्रकारान्तरत्वम्। एवमन्यत्रापि ज्ञेयम्। सकलसामग्रीं विनाप्युपमा सिध्यतीति प्रागुक्तम् ॥
साधर्म्यस्योपमाबीजत्वेऽपि क्वचिद्वैधर्म्येणाप्युपमा प्रदर्शिता॥

यथा—

स्फुरदर्धमिलन्नेत्रा क्रान्ता दोहददुःखिता ॥
विभाति मृगशावाक्षी रतान्तसखिना यथा ॥१॥

अत्र सुखदुःखयोः परस्परं विरुद्धधर्मत्वाद्वैधर्म्यम् । अर्वाचीनैरुपमाया अनेके प्रकाराः कथिताः । मम तु मतं, तत्र दशैव मुख्या इति ॥

शुद्धा विपरीतापि च परस्परं स्यात्तथा परंपरिता ॥
प्रोक्ता निजोपमा वै समुच्चयाख्या बहूपमा माला
रसना च कल्पिताह्वेत्युपमाभेदा दशैव राजेन्द्र! ॥

अत्र शुद्धेतिकथनेन निस्तरङ्गसमुद्रवत्स्वभावसिद्धोपमा विवक्षिता । शुद्धेतराः सर्वेऽपि प्रकारास्तरङ्गतुल्याः । उक्तसमस्तोदाहरणानि शुद्धोपमाविषयाणि ।

प्रसङ्गवशादुपमेयस्योपमानकरणे विपरीतोपमा ॥

यथा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी ॥
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥१॥

अत्र सीतावियोगव्याकुलरामचन्द्रेण तादृशवर्षतोरागमप्रसङ्गे उपमानान्युपमेयैरुपमितानि ॥

परस्परमुपमानोपमेययोरुपमा परस्परोपमा ॥ इयमन्योन्योपमेत्यपि भण्यते । सादृश्यस्य दृढनिर्णयोऽत्र फलम् । लोकेऽपि मानस्य दृढनिर्णयार्थं पदार्थं तुलायामितस्ततस्तोलयन्ति ॥

यथा—

स्वल्पेनापि गुणेन तोषमयते, दाने प्रमाणं न हि,
शुद्धा च प्रकृति,र्महेशपदभाक्त्वे(*)प्येषसाधारणः ।
वेषे, यस्य मुधा क्रुधा न, यशवन्तेशोऽस्ति भर्गोपमो
भर्गः श्रीयशवन्तसिंहनृपतेस्तुल्यः सदा वर्तते ॥१॥

अत्र महादेवेन सह राजराजेश्वरो राजराजेश्वरेण च महादेवः परस्परमुपमितः ॥

यत्रोपमामूलाऽपरोपमा तत्र परंपरासद्भावात्परंपरितोपमा ॥

यथा——

आसीनौ शुचिसायमङ्कन उभौ सानन्दमत्रान्तरे
निर्यातं प्रियवक्रतोऽन्यवनितानाम प्रियाया मुखे ॥
क्रोधो मेघ इवोत्थितः, सुरधनुस्तुल्ये भ्रुवौ वक्रिते,
वाष्पो विन्दुरिवाजनि, व्यपगतो हर्षश्च हंसो यथा ॥१॥

अत्र मुखोपरिप्रकाशमानकोपविषये तादृशमेघोपमाकरणात्तत्परंपरया भ्रुवोरिन्द्रधनुषा वाष्पस्य च वारिदविन्दुभिरौपम्यम् ॥ नायिकाया उक्तकोपसामग्रीविषये तादृशवर्षोपमाकरणात्तत्परंपरया गतहर्षस्य हंसेनौपम्यम् ॥

समयभेदेन तस्मिन्विषये तस्यैवोपमा निजोपमा ॥

यथा——

प्रसन्नचक्षुर्वदनः स्फुरद्भुज
उदारचेता यशवन्तभूपतिः ॥

(*) शिवस्य महेशपदवद्वर्णनीयनृपस्य राजराजेश्वरपदधारणम् ॥

यथा विवाहोत्सवमण्डपे स्थित-
-स्तथाविधः संप्रति लक्ष्यते रणे ॥ १ ॥

अत्र समयभेदात्समरसमये तादृशराजराजेश्वरो विवाह सामयिकतादृशराजराजेश्वरेणोपमित इति निजोपमा ॥

एकस्यैवोपमानस्य धर्मसमुच्चयेनोपमा समुच्चयोपमा ॥

यथा—

जयी यशस्वी विद्यावान्परार्त्तिहरणक्षमः ॥
विक्रमादित्यवद्विश्वविदितो मरुभूपतिः ॥ १ ॥

अत्रैकस्यैवोपमानभूतस्य विक्रमादित्यस्य जयशीलादिधर्मसमुच्चयेन राजराजेश्वरविषये उपमाकरणात्समुच्चयोपमा ॥

बहूनामुपमानानामेकेनैव धर्मेणोपमा बहूपमा ॥

यथा—

हंसेन हीरेण हलायुधेन
तुल्यं यशस्ते यशवन्तभूप! ॥

अत्र राजराजेश्वरयशोविषये हंसादीनां बहूनामुपमानानामेकेनैव श्वेतधर्मेणोपमाकरणाद्बहूपमा ॥ कश्चिद्बहूपमां मालोपमां मत्वैकोपमयैव सादृश्यसिद्धौ पुनरुपमाप्रदर्शनं व्यर्थमित्याह ॥ मम मते तु तस्यायं प्रमादः । लोकेऽपि दृढनिश्चयार्थं सजातीयैरितरप्रस्थादिपरिमाणैस्तोलनरीतिरस्तीतीहापि बहूनां समीपे कृत्वा विशेषज्ञाने चमत्काराधिक्यस्यानुभवसिद्धत्वात् ॥

अनेकोपमानानां पृथक्पृथगनेकधर्मैरुपमा मालारूपतया मालोपमा ॥

यथा—

भाग्यात्तस्तनृपात्मजोऽयमधुना शास्ति प्रजा रामवं-
द्धर्मो यस्य भुजाश्रितः क्षितिभुजां स्यातः पवित्रैर्गुणैः ॥
गाम्भीर्येऽम्बुधिना समः शशभृता तापापहारे सम
ऐश्वर्ये सुरनायकेन सदृशस्तुल्यः प्रतापे रवेः ॥१॥

अत्र राजराजेश्वरविषये समुद्राद्यनेकोपमानानां पृथक्पृथग्गाम्भीर्याद्यनेकधर्मैर्मालारूपतयोपमाकरणान्मालोपमा ॥

उत्तरोत्तरान्वयिवलयनिर्मितलोकशृङ्खलान्यायेनोत्तरोत्तरमुपमायां कश्चिच्छृङ्खलोपमामाह ॥ रसनाऽर्थात्कटिमेखलाऽलंकारोऽपि प्रायः शृङ्खलाकृतिर्भवतीति केनचिद्रसनोपमेत्युक्तम् । रसनेतिकथनं शृङ्खलातो मनोहारि ॥

यथा—

चन्द्रायते शुक्लरुचाथ हंसो
हंसायते चारुगतेन कान्ता ॥
कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः ॥१॥

उपमेयविषयोपमानालाभे उपमेयोचितोपमानकल्पनयोपमा कल्पितोपमा ॥

यथा—

स्तनाभोगे पतन् भाति कपोलात्कुटिलोऽलकः ॥
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥ १ ॥

अत्रोपमानस्यासिद्धत्वात्कल्पितत्वम् ॥ इयमेवाभूतोपमेत्युच्यते । उक्तोपमासु चमत्कारवैलक्षण्येऽप्युपमानाम्नि तासां चमत्कारस्य लीनतयोपमाप्रकारत्वम् ॥ एवमन्यत्रापि ज्ञेयम् । सर्वाण्यप्युक्तोदाहरणानि स्तुतिपर्यवसायीनि ॥

निन्दापर्यवसायि यथा—

सिरोहीशश्चाहुमानो चन्यद्रिवलदर्पितः ॥
निःसारितो मानभटैर्होलिकाराव(*)वत्पुरात् ॥ १ ॥

अत्रापि युक्तिचमत्कारस्य तादृशकाव्यशोभाकरतयाऽलंकारत्वम् ॥ एवमन्यालंकारेष्वपि ॥ अर्वाचीनाः श्रवणमात्रेणौपम्यबोधे श्रौती, अर्थविचारेणौपम्यबोधे चार्थीतिप्रकारद्वयमाहुः ॥ तन्मते वाच्योपमा श्रौती, लक्ष्योपमा व्यङ्ग्योपमा चार्थी । कश्चिदर्वाचीन इवादिवाचकशब्दप्रयोगे श्रवणसमकालमेव सादृश्यबोधाच्छ्रौती, तुल्यादिवाचकशब्दप्रयोगे क्षणं विचारेण सादृश्यबोधादार्थीत्याह ॥ तन्मते इवार्थो यथेति । तुल्यार्थः समान इति । उपमायाः साक्षात्स्वरूपं च यथाशब्दप्रतिपाद्येर्थे ॥ तदेतत्तुच्छम् ॥ सर्वेषामप्यर्थालंकाराणां वाच्यलक्ष्यव्यङ्ग्यार्थमूलत्वात्तत्रार्थस्यैव वैलक्षण्यम् ।

(*) होलिकोत्तरदिने नगरनिवासिनो मिलिताः कंचिदेकं नरं व्यत्यस्तमञ्चकारूढं विधाय स्कन्धैरुद्वहन्तो भस्मरजो वर्षन्तो दुर्वचनान्युच्चारयन्त. रञ्जनार्थं पुराद्बहिर्नयन्ति सं मरुदेशे होलिकाराव इत्युच्यते.॥

न तु शब्दस्य ॥ उक्ताखिलोदाहरणेषूपमाया वाच्यत्वम् ॥

लक्ष्योपमा यथा—

चौरो हास्यरसस्य किं, हिमगिरेः किं वा प्रभाणां प्रभुः,
क्षीराब्धेः किमु पृच्छकः, किमथ वा मित्रं तु मुक्तामणेः ॥
बन्धुः किं शशिनो, ऽथ वा प्रतिनिधिः कुन्दस्य किं, भूपते!
किं पीयूषरिपुर्यशस्तव पुनर्हंसस्य पुत्रोऽथ वा ॥ १ ॥

अत्र नृपयशसि हास्यरसचौरत्वाद्यभाव इति वाच्यार्थबाधाच्छुक्लत्वसाधर्म्ये लक्षणा ॥ प्रयोजनं तु पर्यायोक्त्या कथनान्मनोहारित्वम् ॥ शत्रुमित्रपुत्रबन्धुप्रभुपृच्छकप्रतिनिधीनां प्रायः सदृशतया बन्ध्वादिशब्दानां सदृशार्थे लाक्षणिकप्रयोगः । चौरस्तु धनाद्यपहरणेन धनवान् भूत्वा तत्सदृशो भवति ॥

व्यङ्ग्योपमा यथा—

तस्यैतौ नयने विभोर्दिनपती रात्रीपतिर्नाधिको
न्यूनो वापि तयोर्वदान्यकमणेः कर्णस्य सूर्याज्जनेः॥
चिन्ताऽभूद्विकटा विधोर्नृपवराद्योद्योतचन्द्र! त्वयि
निर्मूला चिरकालिकी समभवत्सिंहासनाधिष्ठिते॥ १ ॥

अत्र भवान्दाने कर्णेन संदृश इत्युपमा व्यङ्ग्यलभ्या ॥ एवमन्यालंकारेष्वपि ज्ञेयम् ॥ अर्वाचीना उपमानोपमेयधर्मवाचकानां चतुर्णामवयवानां कथने पूर्णोपमेति, तेषु

चैकस्य द्वयोस्त्रयाणां वाऽकथने लुप्तोपमेतिप्रकारमाहुः।

यथा—

आखण्डल इवोदारो यशवन्तनरेश्वरः॥

अत्र राजराजेश्वर उपमेयम्। इन्द्र उपमानम्। उदारता धर्मः। इवशब्दो वाचकः। एषां चतुर्णामप्यवयवानां कथनात्पूर्णोपमा॥

आखण्डलेन सदृशो यशवन्तनरेश्वरः॥

अत्र छन्दोवशाद्वाञ्छावशाद्वोदारताधर्मस्याकथनेऽपि प्रसिद्धया लाभः। अर्वाचीना इमं धर्मलुप्तोपमाख्यं प्रकारं वदन्ति॥

"अहो चन्द्रमुखीवाञ्छा"

अत्र छन्दोवशादिच्छावशाद्वा प्रकाशादिधर्मस्येवादिवाचकशब्दस्य चाकथनेऽपि चन्द्र इव प्रकाशकारि मुखं यस्या इत्यर्थविधिना धर्मवाचकयोर्लाभः॥ अर्वाचीना अत्र धर्मवाचकलुप्तोपमाख्यं प्रकारमाहुः। काव्यप्रकाशे धर्मवाचकोपमानलुप्ताया इदमुदाहरणम्—

तरुणिमनि कृतावलोकना
ललितविलासवती वितीर्णविग्रहा॥
स्मरशरविसरार्चितान्तरा
मृगनयना हरते मुनेर्मनः॥ १॥

अत्र चञ्चलताधर्मेण नायिकानेत्रयोर्मृगोऽप्युपमानम्।

तथात्वे तु चञ्चलताधर्मेण मृगस्योपमानत्वे विवक्षिते "मृग इव नयने यस्याः" इति विग्रहः। अस्मिन्पक्षे मृगस्योपमानस्योक्तत्वाद्धर्मवाचकलोपः॥ वर्णाकृतिचञ्चलताशीलधर्मैस्तु नायिकानेत्रयोर्मृगनयनमुपमानम्। मृगनयनस्योपमानत्वे विवक्षिते "मृगनयने इव नयने यस्याः" इति विग्रहः। अस्मिन्पक्षे "अनेकमन्यपदार्थे॥ २। २। २४॥" इति पाणिनिसूत्रस्थेन "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च" इति वार्तिकेन मृगनयनेतिपदे उत्तरपदभूतस्योपमानरूपनयनशब्दस्य लोपादुपमानस्यापि लोपः॥ साहित्यदर्पणादिषूपमेयलुप्तोपमाया इदमुदाहरणम्—

यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे॥

अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा। साधारणधर्मः शुक्लता। अनयोर्लोपः॥ कुवलयानन्दे लुप्तोपमाया अष्टौ, काव्यप्रकाशे च समासादिभेदादेकोनविंशतिः-प्रकारा गदिताः। अप्पयदीक्षितेन प्रथमं कुवलयानन्दे लुप्तोपमाऽष्टविधा प्रज्ञप्ता। परं तु पश्चात्तेनैव पूर्णविमर्शविहितचित्रमीमांसायाम् "अयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययविशेषद्वारोदाहरणदर्शनफलं च व्याकरणशास्त्रस्य कौशलप्रदर्शनमात्रम्। अलंकारशास्त्रस्य बोधेऽनुपयोगात्" इत्युक्तम्॥ मम तु मतं, समासविधिनोपमानादिलोपो वाच्यार्थस्य च प्रत्ययादिना प्रतिपादनं तु व्याकरणशास्त्रे प्रचलिता रीतिरिति नेह व्याकरणस्यापि श्लाघनीयकौशलम्।

प्रसिद्धधर्मस्य च स्वतो लाभात्तदनुपादानं तु गौरवनिवृत्तिमात्रम् । नात्र चमत्कारलेशोऽपि ॥

चन्द्रालोके उपमाया इदं लक्षणम्—

"उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ॥" इति ॥

लक्ष्मीः शोभा । उल्लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते । न हीदं लक्षणमुपमायाः साक्षात्स्वरूपस्य बोधकम् । उपमानोपमेययोरुभयोः सादृश्यलक्ष्म्या उल्लासस्तु संदेहालंकारे । उपमायां तूपमेयस्यैव सादृश्यलक्ष्म्या उल्लास इत्युपमायामुक्तलक्षणस्यासंभवादसंभवदोषः । किं च भ्रान्तिसंदेहाद्यलंकाराणां सादृश्यमूलत्वात्तन्मतोक्तलक्षणस्य तेष्वतिव्याप्तिरपि ॥ अयं विषयस्तीक्ष्णया बुद्ध्याऽवधारणीयः ॥ इत्युपमाप्रकरणम् ॥ १ ॥

## ॥ अतद्गुणः ॥

धुरंधरो वक्ष्यमाणतद्गुणालंकारस्य विपरीतभावेऽतद्गुणालंकारमङ्गीचकार ॥ वर्णक्रमवशादस्माभिरयमलंकारः पूर्वमभिहितः । न तद्गुणः, अतद्गुणः । अत्र नञ् निषेधार्थकः । परगुणसंबन्धस्य निषेध इतिभावः ॥ अत्र न्यायशास्त्रोक्तरूपरसादिगुणा एव न धुरंधरविवक्षिताः । किं तु लोकप्रसिद्धगुणो विवक्षितः । लोके हि सद्भावो गुणशब्देनोच्यते । अत्रोपलक्षणेनासद्भावस्यापि संग्रहः ॥ अत्र कारणकार्यजनिरूपचमत्कारोऽविवक्षितः । तत्र विचित्रालंकारस्य विवक्षितत्वात् ।

अत्र तु स्वगुणागुणसामर्थ्यवशात्परगुणागुणधारणाभावे चमत्कारः। परगुणासंबन्धो हि कार्यकारणभावतो विलक्षणः। इहाश्चर्यबुद्ध्यभावो विचित्रे त्वाश्चर्यबुद्धिरिति भेदः ॥

संगत्यामप्यसंबन्धो राजन्परगुणस्य हि।
अतद्गुणाख्योऽलंकारः कीर्तितोऽतिमनोहरः ।१।

यथा—

पयोधिपङ्केऽपि शशाङ्कबिम्बे
मदाम्बुनीलेष्वपि दिग्गजानाम् ॥
मुखेषु खेलद्यशवन्तसिंह!
यशः सदा ते विमलं विभाति ॥ १ ॥

अत्र राजराजेश्वरयशसि मदकलङ्कयोः संगतेः सत्त्वेऽपि तदीयश्यामगुणस्य संबन्धो न जात इत्यतद्गुणत्वम् ॥ अत्रापकृष्टगुणस्यातद्गुणता ॥ गुणश्च वर्णरूपः ॥

यथा वा—

मरुनाथ! तवारियोषितां
सहवासेऽपि वनेचरस्त्रियः ॥
न विदुर्मणिगुञ्जयोर्भिदां
न हृतं तेन तदीयभूषणम् ॥ १ ॥

अत्रोत्तमपदार्थाऽऽदरकारिराजयोषितां निरन्तरसंसर्गेऽपि स्वमौढ्यसामर्थ्यवशाच्छबराङ्गनानामुत्तमानुत्तमवस्तुभेदज्ञान-

गुणस्यासंबन्धादतद्गुणत्वम् ॥ अत्रोत्कृष्टगुणस्यातद्गुणता ॥

चन्द्रालोके इदं लक्षणम्—

" संगतान्यगुणानङ्गीकारमाहुरतद्गुणम् ॥" इति ॥

इदं लक्षणं नामार्थानुसारि ॥ इत्यतद्गुणप्रकरणम् ॥२॥

## अतिशयोक्तिः ॥

अत्रातिशयशब्दार्थोऽतिक्रमणम् । अतिक्रमणं तूल्लङ्घनम् । "अतिशयितः, अतिक्रान्ते" इति चिन्तामणिः । अतिशयस्योक्तिरतिशयोक्तिः ॥ उल्लङ्घनं तु गिरिसागरज्ञादीनामनेकेषां भवतीतिलोकमर्यादोल्लङ्घनेऽत्र रूढिः । इयमतिशयोक्तिः सर्वालंकारजीवनम् । तदुक्तं " कोऽलंकारोऽनया विना" इति ॥ अलौकिकत्वमन्तरा तु काव्यसंज्ञापि न भवति । अलंकारत्वं तु तस्यापि शोभाकरमित्यलौकिकत्वं विना कथं वा तत्संभवः ॥

" वचनं श्रूयते प्राचां सर्वालंकृतिजीवनम् ॥
एषैवातिशयोक्तिर्वै कोऽलंकारोऽनया विना ॥"

उपमादिष्वतिशयापेक्षयोपमादिचमत्कारस्य प्राधान्यादुपमादिरलंकारः । अत्र तु केवलमतिशयस्यैव प्रधानचमत्कारित्वं तत्रैव च पर्यवसानमित्यतिशयोक्तिरलंकारः ॥

काव्येऽलौकिकत्वमिष्टमिति विधिसृष्टिलङ्घनं तु कविसृष्टौ बहुधा भवत्येव ॥

यथा—

रे रे चन्द्र! यदि त्वमिच्छसि मुखेन्दोः साम्यमेवं कुरु
पूर्वं स्नाहि सुधाम्बुधौ हि भवतो यत्स्यात्कलङ्कक्षयः॥
देहे ते विमलेऽमलेऽम्बुजदले वासात्सुगन्धिर्भव
तुल्यस्त्वं हि तदा न चेत्क वदनं तस्य भवान्क्वासि भोः॥

अस्मिन्नलंकारे तु कविसृष्टेरप्युल्लङ्घनम् । तादृशवर्णनस्य कविसृष्टिमर्यादातोऽपि बहिर्गतत्वप्रतीतेः । तादृशलोकसीमालङ्घनं सामाजिकोद्वेगजनकत्वे तु प्रसिद्धिविरुद्धदूषणं भवति॥

यथा—

राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ॥
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥ १ ॥

क्वचिच्च चमत्कारपुरस्कारेण लोकसीमालङ्घनस्य सामाजिकाल्हादजनकत्वे भूषणरूपत्वम् ॥

यथा परिहासः ॥

अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ।
इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥ १ ॥

एवमेवोक्तं श्रृङ्गाररसरसिकविहारिकविनापि—

अरसोऽपि रसं यायाद्रसवद्रसिकान्तिके ॥
इक्षोर्ग्रन्थिः कठोरोऽपि यथा मधुरिमान्वितः ॥ १ ॥

गुणस्यासंबन्धादतद्गुणत्वम् ॥ अत्रोत्कृष्टगुणस्यातद्गुणता ॥

चन्द्रालोके इदं लक्षणम्—

"संगतान्यगुणानङ्गीकारमाहुरतद्गुणम् ॥" इति ॥

इदं लक्षणं नामार्थानुसारि ॥ इत्यतद्गुणप्रकरणम् ॥२॥

# अतिशयोक्तिः ॥

अत्रातिशयशब्दार्थोऽतिक्रमणम् । अतिक्रमणं तूल्लङ्घनम् । "अतिशयितः, अतिक्रान्ते" इति चिन्तामणिः । अतिशयस्योक्तिरतिशयोक्तिः ॥ उल्लङ्घनं तु गिरिसागरज्ञादीनामनेकेषां भवतीति लोकमर्यादोल्लङ्घनेऽत्र रूढिः । इयमतिशयोक्तिः सर्वालंकारजीवनम् । तदुक्तं "कोऽलंकारोऽनया विना" इति ॥ अलौकिकत्वमन्तरा तु काव्यसंज्ञापि न भवति । अलंकारत्वं तु तस्यापि शोभाकरमित्यलौकिकत्वं विना कथं वा तत्संभवः ॥

"वचनं श्रूयते प्राचां सर्वालंकृतिजीवनम् ॥
एषैवातिशयोक्तिर्वै कोऽलंकारोऽनया विना ॥"

उपमादिष्वतिशयापेक्षयोपमाविचमत्कारस्य प्राधान्यादुपमादिरलंकारः । अत्र तु केवलमतिशयस्यैव प्रधानचमत्कारित्वं तत्रैव च पर्यवसानमित्यतिशयोक्तिरलंकारः ॥

काव्येऽलौकिकत्वमिष्टमिति विधिसृष्टिलङ्घनं तु कविसृष्टौ वहुधा भवत्येव ॥

यथा—

रे रे चन्द्र! यदि त्वमिच्छसि मुखेन्दोः साम्यमेवं कुरु
पूर्वं स्नाहि सुधाम्बुधौ हि भवतो यत्स्यात्कलङ्कक्षयः॥
देहे ते विमलेऽमलेऽम्बुजदले वासात्सुगन्धिर्भव
तुल्यस्त्वं हि तदा न चेत्क वदनं तस्या भवान्कासि भोः॥

अस्मिन्नलंकारे तु कविसृष्टेरप्युल्लङ्घनम् । तादृशवर्णनस्य कविसृष्टिमर्यादातोपि वहिर्गतत्वप्रतीतेः । तादृशलोकसीमालङ्घनं सामाजिकोद्वेगजनकत्वे तु प्रसिद्धिविरुद्धदूषणं भवति॥

यथा—

राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ॥
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥ १ ॥

क्वचिच्च चमत्कारपुरस्कारेण लोकसीमालङ्घनस्य सामाजिकाल्हादजनकत्वे भूषणरूपत्वम् ॥

यथा परिहासः ॥

अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ।
इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥ १ ॥

एवमेवोक्तं श्रृङ्गाररसरसिकविहारिकविनापि—

अरसोऽपि रसं यायाद्रसवद्रसिकान्तिके ॥
इक्षोर्ग्रन्थिः कठोरोऽपि यथा मधुरिमान्वितः ॥ १ ॥

लोकसीमालङ्घनोदाहरणानां दूषणभूषणत्वनिरूपणविषये सहृदयहृदयमेव साक्षि ॥

लङ्घनं लोकसीमायाः प्रोच्यतेऽतिशयो बुधैः ॥
राजन्नतिशयस्योक्तिस्तदाख्यालंकृतिर्मता ॥१॥

यथा—

गरलं मलिनाङ्गारा और्वश्चाग्निर्भुजङ्गराड्धमनी ।
वज्राघातैर्मेरौ घटनं प्रलयाम्बुनिर्वापः ॥१॥
शाणस्तिग्ममरीचिश्चेत्थं यमराजकारुणा रचितः ।
श्रीयशवन्तनृपाल! खड्गस्ते घोरतर एषः ॥२॥

राजराजेश्वरखड्गस्योत्पत्तिसामग्री लोकसीमालङ्घनं बोधयन्त्येव तादृशसामग्रीकल्पनारूपकविप्रतिभाचातुर्येण चमत्कारप्रदतया सामाजिकमनांस्याल्हादयन्ती भूषणं भवति । न तूद्वेगजनकतया दूषणम् ॥

यथा वा—

न नीतवान्यां तु हिरण्यनेत्रो
मग्ना न चाभूत्प्रलयाम्बुधौ या ॥
कस्यापि रूढा न दलं नृपस्य
न कम्पिता याऽहिवरस्य मूर्ध्ना ॥१॥
दत्ता द्विजेभ्यो न च भार्गवेण
चक्रेण सूर्यस्य रथस्य नाशा ॥

क्रान्ता न पादैः खलु वामनेन
जिगाय तां क्ष्मां किल मानभूपः ॥ २॥

जयनगरनरेशमानसिंहो दिल्लीश्वराकबरसेनापतिर्भूत्वा भारतवर्षमजयत्। तस्येदं वर्णनं लोकसीमालङ्घनं बोधयदेव तादृशापूर्वपृथ्वीकल्पनारूपकविप्रतिभाचातुर्येण सामाजिकचमत्कारदायितयाऽऽनन्दजनकं सद्भूषणम्। न तूद्वेगजनकं सद्दूषणम्॥ दण्ड्याचार्यस्येदमुदाहरणम्—

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः॥
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥१॥

इदं शुक्लाभिसारिकावर्णनं लोकसीमालङ्घनं बोधयदेव चन्द्रवदनाज्योत्स्नाभिसारसंबन्धियथोचितभूषणवसनादिसामग्रीसहायेन सामाजिकचमत्कारदायितयाऽऽनन्दप्रदं सद्भूषणम्। न तूद्वेगजनकतया दूषणम्॥

यथा वा—
न दृश्यते सा तन्वङ्गी शयाना नन्दनन्दन!॥
अङ्गोष्मणोऽनुमानेन पर्यङ्के ज्ञायते तु सा॥ १॥

नायकं प्रति सख्या इयमुक्तिः। वियोगिन्या इदं वर्णनं लोकसीमालङ्घनं बोधयदेव तस्या वियोगजन्यकार्श्यस्य स्वाभाविककार्श्यादेवंरीत्या पृथग्दर्शनं रोचकमितिसामाजिकचमत्कारदायितयाऽऽनन्दजनकं सद्भूषणम्। न तूद्वेगजनकं सद्दूषणम्॥ अतिशयोक्तौ प्रसिद्धिविरुद्धदोषस्य समाधानं स्वस्मरप्रदर्शितमेव

धुरंधराभिप्रेतम् । दण्ड्याचार्यादर्वाचीनास्तु लोकसीमालङ्घने लोकसीमाया अलङ्घनस्य निगरणमिति समादधते । अलंकारसर्वस्वकारस्त्वतिशयोक्तेः सामान्यलक्षणमपीदमेवाह—

"अध्यवसितप्राधान्येऽतिशयोक्तिः" इति ॥

अध्यवसायस्य चेदं लक्षणमाह—

"विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः" इति ॥

निगरणं तु निगलनम् । तच्चात्र स्फटिककलशगतासवन्यायेन विवक्षितम् । स्फटिककलशगतासवो यथा बहिरुद्भासते, तथा विषयिण उदरगतस्य विषयस्योद्भासनमध्यवसाय इत्यर्थः । अध्यवसायोदाहरणं च रूपकातिशयोक्तौ स्पष्टतरम् । अतिशयोक्तेः प्रकाराष्टकं भणता चन्द्रालोककारेणातिशयोक्तेः सामान्यलक्षणमनुक्त्वा रूपकातिशयोक्त्याख्यप्रकारे उक्तसिद्धान्तस्य दिग्दर्शनं कृतम् ॥

"रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः" इति ॥

यथा—

पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥

एषां मते नयनेभ्यो नीलोत्पलानां कटाक्षेभ्यश्च बाणानां भेदे सत्यभेदकथनम् । एतच्च लोकसीमालङ्घनं प्रसिद्धिविरुद्धत्वाद्दोषार्हम् । तथाप्यत्र नीलोत्पलेषु नयनानां बाणेषु च कटा-

चारणामुद्भासनमर्थाच्छ्रोतृबोध्यत्वमित्युक्तदोषस्य समाधानम् । मम मतेऽपीदं निगरणं लोकसीमालङ्घनस्य वारणम् । तत्त्वे च न वा तत्संबन्धि दूषणं न च भूषणम् । क्षणमात्रं कस्यचिद्भानं चेदाभासालंकारः । अन्यथा रूपकालंकारः॥१॥

तस्यैवान्यतया वर्णनं भेदकसंबन्धिलोकसीमातिलङ्घनरूपमितिभेदकातिशयोक्तिः ॥

यथा–

हसितं दर्शनं चास्या जल्पनं चान्यदेव हि ॥

सर्वेषां हसितदर्शनजल्पनानां मुखनयनरसनासाध्यत्वमित्यभेदे सति भेदकथनं पूर्ववद्दोषः । तथाप्युक्तकथने हसितादीनामन्यप्रकारतोद्भासनं समाधानम् । मम मतेऽपि नात्रातिशयोक्तिः । किं तु व्यतिरेकालंकारः ॥ २ ॥

अयोगेऽसंबन्धे संबन्धस्य कल्पना संबन्धसंबन्धिलोकसीमालङ्घनरूपेति संबन्धातिशयोक्तिः ॥

यथा–

सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥

सौधाग्राणां विधुमण्डलस्पर्शस्यासंबन्धादत्रान्यसौधेभ्योऽत्युत्तुङ्गतोद्भासनं समाधानम् । मम मतेऽपि पूर्ववन्नात्रातिशयोक्तिः । किं तु व्यतिरेकालंकारः ॥ ३ ॥

योगे संबन्धेऽसंबन्धस्य कल्पनाऽसंबन्धसंबन्धिलोकसीमालङ्घनरूपेत्यसंबन्धातिशयोक्तिः ॥

यथा–

त्वयि दातरि राजेन्द्र ! स्वर्द्रुमान्नाद्रियामहे ॥

राज्ञः समीपे कल्पतरोः सन्मानस्य नासंबन्ध इतीह राज्ञ उत्कर्षाधायकतया संबन्धोद्भासनं समाधानम् ॥ मम मतेऽपि पूर्ववन्नात्रातिशयोक्तिः । किं त्वाभासालंकारः ॥ ४ ॥

कारणप्रसक्त्या कार्यस्योत्पत्तौ कार्यचपलताया लोकसीमालङ्घनरूपत्वाच्चपलातिशयोक्तिः ॥

यथा—

यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥५॥

कार्यकारणयोर्युगपद्भावोऽक्रमः । अस्य चाक्रमस्य लोकसीमालङ्घनरूपत्वात्तत्त्वेऽक्रमातिशयोक्तिः ॥

यथा—

आलिङ्गन्ति समं देव! ज्यां शराश्च पराश्च ते ॥६॥

कार्यकारणयोः पूर्वापरभावव्यतिक्रमस्यात्यन्तं लोकसीमालङ्घनरूपत्वादत्यन्तातिशयोक्तिः ॥

यथा—

अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥

उक्तप्रकारत्रयेऽपि कार्यशैघ्र्यस्योद्भासनं समाधानम् । मम मतेऽपि पूर्ववन्नात्रातिशयोक्तिः । किं तु विचित्रालंकारः॥७॥

अपन्हुतिसहितत्वे सापन्हवातिशयोक्तिः ॥८॥ अत्र प्रकारेऽपि निगरणरूपसमाधानमतिशयोक्तेर्बीजम् । तदा-

चोक्तप्रकारादेकेऽप्यतिशयोक्तेरभावादत्रातिशयोक्तेरसंभवः ॥ सापन्हवातिशयोक्तेरपन्हुत्यतिशयोक्तयोः संसृष्टिरूपत्वात्प्रकारत्वाङ्गीकारः प्रमादः । निगरणनिश्चयरूपमतिशयोक्तेर्लक्षणं तत्स्वरूपबोधकं न भवतीत्यसंभवदोषः । किं चोक्तातिशयोक्तिप्रकारेभ्योऽन्यत्र तन्मतोक्तलक्षणस्याव्याप्तिरपि ॥

यथा—

नासाकूणनपूर्वं संनत्याक्षि भ्रुवं च कुटिलतराम् ॥
कृत्वा मातुः शपथं चकार तत्तुदति कण्टकवत् ॥ १ ॥

अत्र नायिकाया अरुचिबोधकचेष्टायां रुचेर्निगरणम् ॥

इत्यतिशयोक्तिप्रकरणम् ॥ ३ ॥

## अतुल्ययोगिता ॥

धुरंधरेण तद्गुणस्य विपरीतभावेऽतद्गुणालंकारं मत्वाऽलंकारस्य विपरीतभावेऽलंकारान्तरसंभवस्य दिग्दर्शिता । तदनुसारेण तुल्ययोगिताद्यलंकाराणां विपरीतभावेऽतुल्ययोगितादयोऽलंकारा अस्माभिर्लक्षिताः । न तुल्ययोगिता, अतुल्ययोगिता ॥

तुल्ययोगजनैर्यत्र संभवो भरनायक ॥
न भवेत्तुल्ययोगश्चेत्तत्रोक्ताऽतुल्ययोगिता ॥ १ ॥

यथा—

श्रान्ता विक्रयिणोऽतिविक्रयवशात्संढौकयन्तो(*)भृशं
श्रान्ता दूतगणा विलिख्य बहुशो देशान्तरे पत्रिकाः॥
श्रान्तास्ते विनिवेदनात्परिजनास्त्वं राजराजेश्वर!
विश्रान्तो न हि तख्तसिंह! वितरन्हेमाम्बराणि प्रभो! १।

भृशं कार्यकरणाच्छ्रान्तत्वे सर्वेऽपि मनुजाः समानधर्मिणः। अत्र विदेशाद्धेमाम्बराण्यानयतां वणिजां, स्वस्वामिनः प्रति तद्दानोदन्तं लिखतामितरभूपदूताना, हेमाम्बरदानार्थं निवेदयितॄणामधिकारिणां च श्रान्तत्वेन सह हेमाम्बरदानविषये श्रान्तत्वस्य संयोगो राजराजेश्वरतख्तसिंहस्याप्यवश्यं संभवति। स च न जात इत्यतुल्ययोगिताऽलंकारः ॥ इत्यतुल्ययोगिताप्रकरणम् ॥ ४ ॥

# अधिकम् ॥

---

अस्मादयमाधिक इत्यस्मिन्नर्थेऽप्यधिकशब्दः प्रयुज्यते। तत्र तु व्यतिरेकालंकारः। वाञ्छितार्थादधिकलाभेऽप्यधिकशब्दस्य प्रयोगो दृश्यते। तत्र प्रहर्षणालंकारः ॥ इत्यादि ॥ अत्र त्वेकस्माद्वस्तुनोऽपरस्य भाव आधिक्यमित्यस्मिन्नर्थेऽधिकशब्दस्य रूढिः। अत्र कस्यचित्प्रकृष्टहर्षोत्पादकत्वेनैव च पर्यवसानं चेत्तत्र प्रहर्षणालंकारो भविष्यति॥

---

(*) चतुर्थचरणाद्धेमाम्बराणीति कर्मपदमाकर्षणीयम् ॥

एकस्माद्वस्तुनोऽन्यस्य भाव आधिक्यमत्र हि ॥
अधिकालंकृतिर्ज्ञेया धुरंधरमतानुगैः ॥ १ ॥

यथा—

वागम्बुपरिपूर्णोऽस्मिन् रम्ये विश्वसरोवरे ॥
यशवन्तयशःपद्मद्विरेफो राजते वियत् ॥ १ ॥

अत्र कमलेन सरोवरस्येव यशवन्तसिंहयशसा जगतः शोभेति कवे राजराजेश्वरस्तुतिरभिलपिता ॥ तत्र यशसः कमलत्वसिद्धये परंपरितरूपके कवेः प्रयत्नः । परंपराक्रमनिर्वाहार्थं चाकाशस्य भ्रमरत्वेन रूपणम् । तत्राकाशकमलयोर्विस्तारतारतम्याद्राजराजेश्वरयशस आकाशतोऽपि महाविस्ताररूपस्तुतिलाभोऽधिकालंकारः ॥

यथा वा —

अमरीकबरीभारभ्रमरीमुखरीकृतम् ॥
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥ १ ॥

अत्र पार्वत्या रमादिसकलदेवाङ्गनाः पादारविन्दं पूजयन्तीत्यैश्वर्यरूपा स्तुतिः कवेरभिलपिता । अत्र प्रारम्भात्पूर्तिपर्यन्तमनुप्रासस्य निर्वाहे कवेः प्रयत्नः । कविसंप्रदाये च प्रायो भ्रमरवर्णनं जातिपरतया विधीयते । न तु स्त्रीपुंविशेषतया । अत्र तु भ्रमरीतिस्त्रीवाचिपदप्रयोगोऽनुप्रासस्य निर्वाहार्थकः । देवाङ्गनानां सौन्दर्यमेव प्रसिद्धम् । न तु रतीत्वमपि । अत एव देवाङ्गनाकेशपाशेषु सुगन्धिलुब्धानां भ्रमरीभ्रम-

राणां सर्वेषामपि संभवः । पार्वतीपादारविन्दप्रणामसमये च समीपवर्तित्वाविशेषेऽपि भ्रमर्य एव चरणस्पर्शमाचरन्ति। न तु भ्रमरा अपीति पार्वत्या असाधारणपातिव्रत्यमहिमरूपस्तुतिलाभोऽधिकालंकारः ॥

चन्द्रालोककारोऽधिकस्य प्रकारद्वयं वदन्निदं लक्षणोदाहरणमाह—

"अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् ॥
पृथ्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम् ॥"

यथा—

ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः ॥
कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव ॥१॥

पूर्वोदाहरणे सर्गारम्भापारवारिण आधारस्याधिकतया वर्णनीयनृपयशस आधेयस्याधिकत्वबोधः । उत्तरोदाहरणे च वर्णनीयनृपगुणगणस्याधेयस्याधिकतया वाग्ब्रह्मण आधारस्याधिकत्वबोधः । मम तु मतं, पृथुलाधारादाधेयाधिक्यप्रतीतिः पृथुलाधेयाच्चाधाराधिक्यप्रतीतिर्वा न लोकोत्तरा। अत एव कविकर्मरूपत्वाभावात्तादृशाधिक्यस्य नालंकारपदार्हत्वम् ॥ "वागम्बुपरिपूर्णे-" इत्यत्राकाशरूपान्महत आधेयाद्राजराजेश्वरयशस आधारस्याधिक्यप्रतीतौ सत्यामप्यस्मिन्नंशे तु नाधिकालंकारः । अपि तु परंपरितरूपकप्रयत्ने राजराजेश्वरयशसस्तादृगाधिक्यरूपस्तुतेरधिकलाभरूपांशेऽधिकालं-

कारः ॥ उक्तलक्षणमधिकालंकारस्वरूपावृत्तितयाऽसंभवदोष-ग्रस्तम् ॥ इत्यधिकालंकारप्रकरणम् ॥५॥

# अनवसरः ॥

---

वक्ष्यमाणावसरालंकारस्य विपरीतभावेऽनवसरालंकारोऽस्माभिर्लक्षितः ॥

अलंकारोऽनवसरोऽवसरापगमे कृतिः ॥
अप्रियस्ते महाराज! तथापि श्रूयतामसौ ॥ १ ॥

यथा—

संदेश आयान्मरुभूपतेः पुरा
ततश्चमूर्मार्गणवर्षणं ततः ॥
संधौ रुचिस्ते न तदाऽभवत्प्रिय!
वनेऽधुना काङ्क्षसि का विवेकिता ॥ १ ॥

यथा वा—

विदेशं बान्धवा याता विनष्टाः कृषयोऽपिच ॥
मृताश्च पशवो मेघो दुग्धं कामं प्रवर्षतु ॥ १ ॥

इत्यनवसरप्रकरणम् ॥ ६ ॥

# अनुज्ञा ॥

---

अनुज्ञाशब्दार्थः संमतिः । "अनुज्ञा, अनुमतौ । अनुमतिः

संमतौ।" इति चिन्तामणिः॥ अनुज्ञायते इत्यनुज्ञा। संमतिस्त्वङ्गीकारः। अङ्गीकारयोग्यस्याङ्गीकारस्तु न लोकोत्तरः। तस्मादिहानङ्गीकारयोग्यस्याङ्गीकारे रूढिः। अनङ्गीकारयोग्यस्याङ्गीकारश्च केनचिन्निमित्तेनैव रमणीयतयाऽलंकारत्वमापद्यते। अलंकारप्रकरणान्निमित्तस्य लाभः। रूढिर्वा। केनचिन्निमित्तेनानङ्गीकारयोग्यस्याङ्गीकारोऽनुज्ञालंकार इत्यर्थः॥

**अनङ्गीकारयोग्यस्याङ्गीकारो मरुवल्लभ!॥**
**केनापि हि निमित्तेनानुज्ञालंकृतिरिष्यते॥१॥**

यथा—

द्वाःपालवेत्रैः किल कन्दुकाभं
नृत्यन्ति राज्ञां मुकुटानि यत्र॥
सिन्धोरधीशो(*) विशति प्रभीतो
द्वारे तु तस्मिन्मरुनायकस्य॥१॥
सत्कारपूर्वं हि लभे प्रवेश-
मुपोपविष्टश्च पठामि काव्यम्॥
मुरारिनामा कविराट् ततोऽहं
युगे युगे याचकजन्म याचे॥२॥

युग्मम्॥

(*) अत्र सिन्धुदेशाधीशकथनेन राजराजेश्वरविजयसिंहशरणायातसिन्धुपतिवंशजपदपतिर्विवक्षित॥

लोके याचकत्वमनङ्गीकारयोग्यम् । लोकप्रवादोऽपि—

"याच्ञा न साध्वी जनके रत्नेत्संधां यदि प्रभुः ॥"

तथाप्युक्तासाधारणसन्माननिमित्तेन मम मुरारिदानस्य जगदीश्वराद्याचकजन्मयाचनमनङ्गीकारयोग्यस्याङ्गीकारः ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ॥"

यथा—

विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः ॥

यथा वा—

धन्या निर्धननारीयं शयाना वन्दते विधुम् ॥
धिग्धिग्धनाढ्यतां यत्र कपाटानां तु कोटयः ॥ १ ॥

अत्र कुलटाया अनङ्गीकारोचितदारिद्र्यदशाया अङ्गीकारः ॥ दारिद्र्यदशायाः श्लाघनमप्यङ्गीकार एव । अत्र याच्ञाया अभावादर्वाचां लक्षणमव्याप्तम् ।

यथा वा—

ज्ञात्वा जगद्विनाशकमपिबद्गरलं महेश्वरो राजन्! ॥
भ्रान्त्योपासत इतरं जगदीशः कोऽस्ति तेन समः ॥

अत्र जगद्विनाशकत्वदोषं जानत एव हरस्यानङ्गीकारयोग्यहालाहलस्याङ्गीकार इति सर्वथैवार्वाचां लक्षणस्याव्याप्तिः ॥ इत्यनुज्ञाप्रकरणम् ॥ ७ ॥

# अन्योन्यम् ॥

अन्योन्यं तु परस्परम् । बहुधाऽन्योन्यव्यवहाररीतिर्लोके दृश्यते इति लोकन्यायेन धुरंधरोऽन्योन्यालंकारमङ्गीचकार ॥

अन्योन्यत्वमलंकारोऽन्योन्यनामा नराधिप! ॥
उपकारादिभेदेन बहुधाऽयं प्रभिद्यते ॥ १ ॥

यथा–

जगता मरुभूपालो मरुभूपतिना जगत् ॥
शशिना गगनं भाति गगनेन तथा शशी ॥ १ ॥

अत्रान्योन्यमुपकारः ।

यथा वा—

करोति शक्रमातङ्गकपोलौ मलिनौ मदः ॥
मरुनाथयशः शुभ्रौ विदधाति पुनः पुनः ॥

अत्र शक्रगजैरावतगण्डस्थलविषये गजमदस्य राजराजेश्वरयशवन्तसिंहयशसश्चान्योन्यकृत्यपहाररूपापकारस्य दृढः॥ उपमा स्वतन्त्रालंकार इत्यन्योन्योपमा (परस्परोपमा) उपमायाः प्रकारत्वेन भणिता ॥

चन्द्रालोके इदं लक्षणम्—

" अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् "

"करोतिशक्रमातङ्ग–" इत्याद्युदाहरणेष्ववाचां लक्षणमव्यासम् ॥ ननु भवतापि यत्रनत्रोपलक्षणमङ्गीक्रियते इतीहाप्युपलक्षणेनापकारादीनां संग्रहो भविष्यति । एवमन्यालंकारेष्वपीति चेन्न । उपलक्षणस्य तु स एव विषयो यत्र वक्तुस्तात्पर्यं त्वनेकवस्तुविषयं केनचिच्च प्रयोजनेनैकस्यैव वस्तुनः कथनम् । तत्र वक्तुस्तात्पर्यस्य बाधात्तत्संबन्धिनोऽन्येऽप्यर्था लक्ष्यन्ते । इह तूक्तलक्षणसामग्री न विद्यते ॥ न ह्यत्रोपकारकथनेनापकारादौ वक्तुस्तात्पर्यं सिध्येत् । अपि तूपकारस्य नियम एव सिध्यति ॥ प्रयोजनं विना च बाधितप्रयोगोऽनुचित एव ॥ इत्यन्योन्यप्रकरणम् ॥ ८ ॥

# अपन्हुतिः ॥

अपन्हवशब्दार्थो गोपनम् । " गोपनमपन्हवे" इति चिन्तामणिः ॥ अपन्हुतिरपन्हव इत्यनर्थान्तरम् । अपपूर्वात् न्हुङो भावे क्तिन् ॥ अपन्हूयते इत्यपन्हुतिः ॥

## अपन्हुतिरलंकारस्त्वपन्हव इहेष्यते ॥

यथा—

नायं शारदचन्द्रो यशवन्तेश्वरयशो विभात्येतत् ॥
नेदं कलङ्कलक्ष्म सहलग्नो भिक्षुकस्तोमः ॥१॥

शास्त्रेषु प्रशंस्तवस्तुनो वर्णः श्वेतः, अप्रशस्तस्य च

श्यामं उक्तः। ततो भिक्षुकसमूहः श्यामवर्णत्वेनाभिमतः॥ नायिकाविरहदशायां शशिन उद्दीपनत्वादेतद्राजराजेश्वरस्य यश इत्युक्त्वा सख्याऽत्र शशिनोऽपन्हवो विहितः। यशसि कलङ्काभावाच्चन्द्रमसि च तत्सत्त्वादुक्तशङ्कानिरासार्थमयं भिक्षुकसमूह इत्युक्त्वा कलङ्कोऽपन्हुतः॥

यथा वा—

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम्॥
नागरिकः किं मिलितो नहि नहि सखि! हैमनः पवनः॥१॥

अत्रांतरङ्गसखीं प्रति नायकवृत्तान्तं वदन्त्यां नायिकायामकस्मादागतबहिरङ्गसख्या "किं कान्तः" इति प्रश्ने कृते नायिकया हेमन्तपवनवृत्तान्तमुद्दिश्योक्तकान्तवृत्तान्तस्यापन्हवो विहितः॥

सर्वा हसन्त्यमूरिह को वा हासस्य वीक्षितो विषयः॥
कृष्णो गलं गृहीत्वा चाणूरोऽमारि दर्शयत्येवम् (*)॥१॥

इयं नायिका गुप्ता॥ अत्र निदर्शनायाः संकीर्णत्वम्॥ धुरंधरेणात्र गोपनार्थेऽपन्हुतिशब्दः प्रयुक्तः। किं त्वस्यालंकारस्य स्वारस्यापरिज्ञानादर्वाचीना "न्हुङ् अपनयने" इति धातुपाठानुसारेणापन्हवशब्दार्थं 'दूरीकरणमज्ञासिषुः। "अपनयनं दूरीकरणे" इति चिन्तामणिः॥ तच्च तेषामुदाहरण-

(*) कृष्णो गलं गृहीत्वा दर्शयति, मया चाणूर एवममारीति संबन्धः॥

दर्शनात्स्पष्टतरम् । दूरीकरणं तु निषेधः । निषेधस्य चमत्कारित्वे आक्षेपालंकारः । निषेधस्याक्षेपेऽन्तर्भावात् ॥

अर्वाचीना अपन्हुतेः प्रकारषट्कमाहुः । चन्द्रालोके इमानि लक्षणोदाहरणानि—

शुद्धापन्हुतिरन्यस्यारोपार्थो धर्मनिन्हवः ॥

यथा—

नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥

पद्मपुष्पमपि चन्द्रवदुद्दीपनम् । ततश्चन्द्रमपन्हूय पद्मप्रदर्शनमप्यसंभावितमेवेति चन्द्रस्यात्र निषेध एव ॥१॥

स एव युक्तिपूर्वश्चेदुच्यते हेत्वपन्हुतिः ॥

यथा—

नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः ॥

सूर्यस्योद्दीपनत्वाभावात्तत्साहचर्येणात्र न चन्द्रस्यापन्हवः। किं तु निषेध एव ॥२॥

अन्यत्र तस्यारोपार्थः पर्यस्तापन्हुतिस्तु सः ॥

यथा—

नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥

अत्रापि चन्द्रे सुधांशुत्वस्य गोपनं न संभवतीति निषेध एव ॥ अत्र पर्यस्ताशब्दार्थः सर्वतः प्रसृत इति ॥ ३ ॥

भ्रान्तापन्हुतिरन्यस्य शङ्कायां भ्रान्तिवारणे ॥

यथा—

तापं करोति सोत्कम्पं ज्वरः किं न सखि! स्मरः ॥

अत्रापि सख्या ज्वरशङ्कायां तद्भ्रान्तिवारणार्थं नायिकया स्वस्मरतापस्य निश्चयः प्रदर्शित इति ज्वरस्य गोपनासंभवान्निषेध एव ॥ ४ ॥

कैतवापन्हुतिर्व्यक्तौ व्याजाद्यैर्निन्हुतेः पदैः ॥

यथा—

निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥

अत्रापि स्मरशरारोपान्नायिकाकटाक्षाणां गोपनासंभवान्निषेध एव ॥ ५ ॥

छेकापन्हुतिरन्यस्य शङ्कातस्तथ्यनिन्हवे ॥

यथा—

प्रजल्पन्मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥

"प्रजल्पन्मत्पदे लग्नः" इति नायिकोक्त्याऽकस्मादागतबहिरङ्गसखी नायकवृत्तान्तं शङ्कितवती । तच्छङ्कानिवृत्त्यर्थं नायिकया "न हि नूपुरः" इत्युक्त्वा नायकसंबन्धितथ्यवृत्तान्तस्यापन्हवः कृत इत्यस्मिन्नुदाहरणे गोपनस्य संभवः खलु । तथापि प्रकारषट्कमध्यादुदाहरणपञ्चके निषेधः स्पष्टतर इत्युक्तक्रमौचित्येनास्मिन्नुदाहरणेऽपि निषेध एव कवेस्तात्पर्यं

सिध्यति ॥ छेकश्चतुरः ॥ ६ ॥ मम तु मतं, सर्वेष्वप्युक्तोदाहरणेष्वाक्षेपालंकारः । ततश्च चन्द्रालोकलक्षणान्यसंभवदोषग्रस्तानीति वेदितव्यम् । भ्रान्तिरूपवस्तुनिषेधो भ्रान्तापन्हुत्याख्यः प्रकार उक्तः ॥ स तु समीचीनः । धुरंधराभिप्रेतापन्हुत्यलंकारेऽप्यस्य संभवात् ॥

सखि! ताटङ्कमाणिक्यप्रभां किं वा कपोलयोः ॥
कान्तदन्तक्षतं ज्ञात्वा वाससा विनिगूहसे ॥ १ ॥

भ्रान्तापन्हुतिः प्रकारश्चेद्वास्तववस्तुनो गोपने निषेधे वा शुद्धापन्हुत्याख्यः प्रकारोऽपि युक्त एव ॥ अवशिष्टप्रकारचतुष्टयं त्वाक्षेपालंकारस्योदाहरणान्तरमात्रम् ॥ इत्यपन्हुतिप्रकरणम् ॥ ६ ॥

# अपूर्वरूपम् ॥

---

वक्ष्यमाणपूर्वरूपालंकारस्य विपरीतभावेऽपूर्वरूपालंकारोऽस्माभिर्लक्षितः ॥ न पूर्वरूपमपूर्वरूपम् । अत्र रूपकथनेनावस्थादीनां सर्वेषां संग्रहः ॥

अभावः पूर्वरूपस्य यत्र स्यान्मरुनायक! ॥
अपूर्वरूपालंकारो ज्ञेयस्तत्र बुधोत्तमैः ॥

यथा—

मांभूस्त्वं यशवन्तसिंहनृपतेः क्रोधस्य पात्रं प्रिय!

ते वासे गिरिकन्दरासु न पुनर्हर्म्येषु संवत्स्यसि ॥
कान्तारे खलु जम्बुकादिरचितैर्ध्वानैः प्रबुध्य प्रगे
स्तोत्रैर्वन्दिजनोदितैर्न हि पुनः संजागर्तिं प्राप्स्यसि।१।

अत्र भविष्यदपूर्वरूपम् ॥ तदूदाहरणान्तरमात्रम् ॥ इत्यपूर्वरूपप्रकरणम् ॥ १० ॥

## अप्रत्यनीकम् ॥

वक्ष्यमाणप्रत्यनीकालंकारस्य विपरीतभावेऽप्रत्यनीकालंकारोऽस्माभिर्लक्षितः ॥ न प्रत्यनीकमप्रत्यनीकम् ॥

अप्रत्यनीकं तत्र स्यादनीकं प्रति यत्र न ॥
दिग्दर्शनेन धुर्यस्य विज्ञातोऽयं मया नृप! ॥१॥

यथा—

रिपुं प्रबाधते साक्षात्तत्प्रजां न मरोश्चमूः ॥
मृगाङ्कं बाधते राहुर्न तारास्तस्य संश्रयाः ॥

अत्र शत्रुसंबन्धिप्रजानामपीडनमप्रत्यनीकालंकारः ॥ इत्यप्रत्यनीकप्रकरणम् ॥ ११ ॥

## अप्रस्तुतप्रशंसा ॥

अप्रस्तुतप्रशंसेत्यत्र नञ् निषेधार्थकः । प्रस्तुतशब्दार्थः प्रासङ्गिक इति ॥ "प्रस्तुतः प्रासङ्गिके" इति चिन्तामणिः॥ प्रासङ्गिकः प्रसङ्गप्राप्तः। अत्र शंसाशब्दः कथनार्थकः । "शंसु

कथने स्तुतौ च" इति धातुपाठे ॥ कथनं तु कथा । "कथनं कथायाम्" इति चिन्तामणिः ॥ कथां वृत्तान्तमप्याहुः । अत्र शंसुधात्वर्थ एव प्रोपसर्गार्थः ॥ तदुक्तं व्याकरणशास्त्रे—

धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते ॥
तमेव विशिनष्टयन्य उपसर्गगतिस्त्रिधा ॥१॥" इति॥

क्वचिदुपसर्गो धात्वर्थं बाधते । धातोरन्यमर्थं करोतीत्यर्थः। क्वचिच्च धातोरनुवर्तनं करोति । यस्मिन्नर्थे धातोर्वृत्तिरुपसर्गोऽपि तमेवार्थं प्रतिपादयतीत्यर्थः । क्वचिच्च धातोरर्थं विशिनष्टि । धात्वर्थे विशेषत्वं बोधयतीत्यर्थः । क्रमेण यथा—"आदत्ते ॥" दाधात्वर्थो दानम् । "दा दाने" इति धातुपाठे । अत्राङुपसर्गो दाधात्वर्थं दानं बाधित्वा ग्रहणमर्थं बोधयतीति धात्वर्थस्य बाधः । "प्रसूते" ॥ षूङ्धात्वर्थः प्रसवः। प्राण्युत्पादनमिति यावत् । अत्र प्रोपसर्गोऽपि तस्मिन्नेवार्थे वर्तते इत्यनुवर्तनम् ॥ "प्रवर्धते" ॥ वृधधात्वर्थो वृद्धिः । अत्र प्रोपसर्गो वृद्धौ विशेषत्वं बोधयतीति विशेषता ॥ अप्रस्तुतप्रशंसेतिसमुदितशब्दार्थस्तु "अप्रस्तुतस्याप्रासङ्गिकस्य प्रशंसा कथा" इति ॥ अप्रस्तुतकथा च कस्यचित्प्रसङ्गेऽप्रसङ्गे च सर्वत्र कथ्यते । अप्रसङ्गे तु—

रामो नाम बभूव हुं, तदबला सीतेति हुं, तौ पितुर्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः ॥
कृष्णेनेतिपुरातनीं निजकथामाकर्ण्य मात्रेरितां

सौमित्रे! क्व धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः ।१।

इति ॥

अत्रोक्ताप्रस्तुतकथा कस्यचित्प्रसङ्गे न भणिता। किं तु मात्रा बालकं प्रति काचित्कथा कथिता॥इह तु कस्यचित्प्रसङ्गे कथितायामप्रस्तुतकथायां रूढिः । प्रसङ्गेऽप्रस्तुतकथाकथनं लोकरीतिः । महाभारतादीतिहासग्रन्थेष्वपि प्रसङ्गेष्वप्रस्तुतकथा गदिताः । तदनुसारेण धुरंधरोऽप्रस्तुतप्रशंसालंकारमङ्गीचकार । प्रसङ्गभणिताप्रस्तुतकथायां क्वचिदप्रस्तुतकथा प्रस्तुतकथा चेत्युभयमपि वाच्यं भवति । क्वचिच्चाप्रस्तुतकथात एव प्रस्तुतकथा व्यज्यते ॥ लाघवार्थं कवेरीदृशी रचना । अत्र प्रस्तुतकथारूपव्यङ्ग्यार्थस्याप्रस्तुतकथारूपो वाच्यार्थः शोभाकर इत्यप्रस्तुतकथाया अलंकारत्वम् । प्रस्तुतकथाया अप्रस्तुतकथायाश्च सारूप्यसंबन्धः सामान्यविशेषभावसंबन्धो वा भवतीति प्रस्तुतप्रसङ्गेऽप्रस्तुतकथाकथनस्य रोचकत्वम् ॥ अन्यथा त्वकाण्डप्रथनदोषः॥ न ह्यत्र सारूप्यसंबन्धांशे पर्यवसानम् । तत्र पर्यवसाने तूपमालंकारः स्यात् । उपमांशस्य दीपकतुल्ययोगिताद्यनेकालंकारेषु विद्यमानत्वेऽपि तत्र पर्यवसानाभावाद्दीपकतुल्ययोगितादीनां च प्रधानतया तेषु तेषु पर्यवसानात्तत्र दीपकतुल्ययोगितादय एवालंकारा भवेयुः । तथेहाप्यप्रस्तुतप्रशंसांशस्योद्धरकंधरतया तत्रैव पर्यवसानम् । अस्यैव च प्रधानतया काव्यशोभाकरत्वम् । ननु प्रकरणप्राप्ताऽप्रस्तुतकथापि प्रस्तुतैवेति चेन्न । तस्या मुख्यतया वर्णनीयत्वाभावान्न प्रस्तुतत्वम् ॥

अप्रस्तुतकथा प्रोक्ता प्रसङ्गे कस्यचिद्यदि ॥
अप्रस्तुतप्रशंसा स्यादलंकृतिरधीश्वर! ॥ १ ॥

यथा—

मरालवृन्दाय ददाति मुक्ता
मधुव्रतेभ्यो मकरन्दपानम् ॥
जलं तृषार्ताय च मानसाख्यं
सरस्तदेतज्जगतः सुखौकः ॥ १ ॥

अस्माभिरस्मत्प्रणीतप्रबन्धद्वयस्य यशवन्तयशोभूषणं यशवन्तभूषणमिति च नामधेयमेनयोर्यशवन्तसिंहस्य यशोमया अलंकाराः प्रदर्शिता इत्यभिप्रायेण भणितम् ॥ अत एव च प्रारम्भात्समाप्तिपर्यन्तं सर्वेष्वप्यलंकारेषु प्रथमोदाहरणं यशवन्तसिंहयशोविषयमुक्तम् । तथा चं प्रकरणवशादिदमुदाहरणं राजराजेश्वरयशवन्तसिंहयशोविषयमितिसकलश्रोतृवेद्यताप्रकरणवैलक्षण्येन सहृदयश्रोतुरिदं प्रतीयते, राजराजेश्वरस्याखिलजगदभिलापापूरकत्वप्रसङ्गे इयं मानससरोवरसंबन्धिन्यप्रस्तुतकथा कथितेति । सा च प्रतीयमानप्रस्तुतार्थस्य शोभाकरत्वादलंकारः ॥

यथा वा—

ग्रीष्मेऽत्यन्तप्रीत्या मालाकारेण पालितो विटपः ॥
अतिशयवर्षायामप्युपकारं विस्मरेन्नु कथम् ॥ १ ॥

इदं पद्यं राजराजेश्वरमानसिंहसामन्तरायपुराधीशोदावतराष्ट्रवरार्जुनसिंहविषये कविराजवाङ्कीदासेनोक्तम् । सुभटं प्रति कवेरुक्तावस्य वाच्यार्थस्यासमञ्जसतया सहृदयश्रोतुरिदं प्रतीयते, पूर्वमापत्काले उक्तसामन्तेनास्य कवेः सुष्ठु भरणपोषणं विहितमिति पश्चाद्राजराजराजेश्वरमानसिंहस्य प्रसादप्राप्तावप्युक्तसामन्तस्योपकृतिरस्याविस्मरणीयेति प्रसङ्गे कविराजवाङ्कीदासोक्ता विटपमालाकारसंबन्धिनीयमप्रस्तुतकथा प्रतीयमानप्रस्तुतार्थस्य शोभाकरत्वादलंकारः ॥

यथा वा—

एणः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते
क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्रुरुर्धावति ॥
निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया
हंहो सिंह! विना त्वयाद्य विपिने कीदृग्दशा वर्तते ॥ १ ॥

अत्र सहृदयश्रोतुरिदं प्रतीयते, कस्यचिद्बलवतोऽधिकारिजनस्य परलोकवासात्कापुरुषाः स्वच्छन्दाचारे प्रवृत्ताः । मूर्खाः कार्यविघाते प्रवृत्ताः । क्षुद्रपुरुषाणां महत्त्वाभिमानो जातः । वावदूकाः प्रलपने प्रवृत्ताः । साहसिनो लुण्टने प्रवृत्ताः । एवं दुर्दशापन्नदेशस्य प्रसङ्गे सिंहशून्यस्य वनस्येयमप्रस्तुतकथा कथितेति । अत्र कस्यचिच्छ्रोतुर्बुद्धेर्वाच्यार्थ एव विश्रामश्चेदुक्तारण्यवर्णनेऽवस्थान्तरप्राप्तेः परिणामालंकारः ॥ एवमन्येष्वप्यप्रस्तुतप्रशंसोदाहरणेषु विज्ञेयम् ॥

यथा वा—

शीलं कीदृगलेरिदं प्रिय! वरं, पीत्वा स्थलाब्जे मधु
प्रातर्मत्ततरो नवीनलतिकावृन्दे रमित्वा पुनः।
मालत्यापि च तृप्तिमेत्य परमामन्यत्र संक्रीडने
नीत्वा सर्वदिनं च रात्रिसमये शेते नलिन्या सह।१।

अत्र नायिकायाः शठनायकं प्रत्ययमुपदेशः प्रस्तुतः, दिवाऽनेकाभिः सह रममाणेनापि निशि गृहमागत्य शयनं कर्तव्यमिति। तत्प्रसङ्गे भ्रमरस्येयमप्रस्तुतकथा भणिता। अत्र चतुर्थचरणे देहलीदीपन्यायेन प्रस्तुतवृत्तान्तोऽपि वाच्यत्वेन प्रदर्शित इति प्रस्तुतकथाऽप्रस्तुतकथयोर्वाच्यत्वम्॥ अत्र भ्रमरोऽपि पुरोवर्त्तितया प्रस्तुतः। तथापि मुख्याभिप्रेतादतिरिक्तमप्रस्तुतमेवेत्युक्तोदाहरणे नायिकाया नायकं प्रति निशि गृहशयनोपदेशे मुख्यं तात्पर्यमिति तत्प्रसङ्गे कथितः पुरोवर्त्तिभ्रमरवृत्तान्तोऽप्यप्रस्तुत एव। अत्र कस्यचिच्छ्रोतुर्बुद्धेर्वाच्यार्थमात्र एव विश्रामश्चेद्भ्रमरवर्णने स्वभावोक्त्यलंकारः॥

कवयः साधर्म्येणाप्रस्तुतकथाकथने सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसेत्याहुः। उक्तोदाहरणानि साधर्म्यविषयाणि। साधर्म्यस्य विपरीतभावे वैधर्म्येणाप्यप्रस्तुतप्रशंसा दृश्यते—

यथा—

पक्षौ वासो भक्ष्यं ग्रावकणाश्च प्रिया तु सदैव सह॥
एकः कपोतपक्षी सुखितो जगतीह दृश्यते सुतराम्॥

अत्रान्नवस्त्रार्थं क्लिश्यमानेन विरहव्यथाव्याकुलेन च

प्रवासिना स्वस्य प्रसङ्गेऽयं पारावतस्याप्रस्तुतवृत्तान्तः कथितः। स्वस्य प्रसङ्गे परप्रसङ्गे वाऽप्रस्तुतवृत्तान्तस्य कथनं भवतु। उभयत्राप्यस्तुतप्रशंसारूपचमत्कारस्तु तुल्य एव ॥ सामान्यरूपाप्रस्तुतकथाकथने सामान्यनिबन्धना। विशेषरूपाप्रस्तुतकथाकथने च विशेषनिबन्धना ॥

क्रमेण यथा--

विधाय वैरं सामर्षे नरोऽरौ य उदासते ॥
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ १ ॥

माघकाव्यस्य द्वितीयसर्गे कृष्णबलदेवोद्धवैर्मिलित्वा मन्त्रितं, पूर्वं धर्मराजराजसूये गन्तव्यमुत चेदिराजोपरि प्रथमं प्रयातव्यमिति। तत्र शिशुपालोपरि प्रथमं प्रयातव्यमिति बलरामस्य कथनम्। तस्मिन्प्रसङ्गे बलदेवेनेयं सामान्यरूपाऽप्रस्तुतकथा कथिता।

अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ॥
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ १ ॥

तत्रैव सावज्ञमरिशिरसि पादप्रहारमन्तरा कीर्तिः कथं वा स्वर्गपर्यन्तं प्रसारं इति बलदेवस्य कथनम्। तत्प्रसङ्गे बलदेवेनेयं विशेषरूपाऽप्रस्तुतकथा कथिता ॥ माघकाव्ये तूक्तप्रस्तुतकथाऽप्रस्तुतकथयोर्वाच्यत्वम्। कुवलयानन्दाद्यलंकारग्रन्थेषु लाघवार्थमुक्तोदाहरणे एव प्रदर्शिते। न तु प्रस्तुत-

कथा कथिता । उक्तोदाहरणयोः प्रस्तुतकथयोः प्रतीयमानत्वाभावेऽपि प्रसिद्धया लाभः ॥

प्रतीयमानविशेषनिबन्धना यथा—

विस्तीर्णो दीर्घशाखाश्रितशकुनिशतः शाखिनामग्रणीस्त्वं
न्यग्रोध! क्रोधमन्तःप्रकटयसि न चेद्वच्मि किंचित्तदल्पम्
जल्पोऽप्येष त्रपाकृत्प्रलघुपरिकरा कापि कूष्माण्डवल्ली
पल्लीपृष्ठप्रतिष्ठा हसति हि फलनैस्त्वत्फलानां किमन्यत्

अत्र सहृदयश्रोतुरिदं प्रतीयते, कस्यचित्परोपकाररहितस्य महतो जनस्य, लोकोपकारकर्तुश्च कस्यचित्क्षुद्रपुरुषस्य प्रसङ्गे इयं वटवृक्षकूष्माण्डवल्ल्योर्विशेषरूपाऽप्रस्तुतकथा कथितेति ॥

चन्द्रालोके इदं लक्षणम्—

"अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया ॥" इति॥

कुवलयानन्दे स्पष्टीकृतं चैतत् "यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसाऽलंकारः" इति ॥ अनेन चात्राप्रस्तुतवृत्तान्तेन प्रस्तुतवृत्तान्तस्य बोधः, तत्रैव चाप्रस्तुतवृत्तान्तस्य पर्यवसानमित्यर्वाचां सिद्धान्तः स्पष्टतरः ॥ मम तु मतं, प्रस्तुतवृत्तान्तो व्यज्यते एवेति न नियमः । न चोक्तव्यङ्ग्यांशस्यास्मिन्नलंकारे कश्चिदुपयोगः । तस्य व्यङ्ग्यमात्रत्वात् । प्रस्तुताप्रस्तुतवृत्तान्तयोर्वाच्यत्वेऽप्यप्र-

स्तुतप्रशंसाचमत्कारस्य तुल्यत्वात्। एतच्चोक्तोदाहरणैः सिद्धम् ॥ अर्वाचीनैः स्वमतानुसारेण कार्यनिबन्धनाकारणनिबन्धनेति प्रकारद्वयं भणितम् ॥ क्रमेण यथा–

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ॥
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनी(*)खनीलिमा ॥ १ ॥

अत्राप्राकरणिकेन्दुमण्डलगततयोत्प्रेक्षमाणेन दमयन्तीवदननिर्माणार्थं सारांशहरणेन तत्कार्यरूपं वर्णनीयतया प्रस्तुतं दमयन्तीवदनगतलोकोत्तरं सौन्दर्यं प्रतीयते। अत्रेदं तात्पर्यम्, दमयन्तीमुखनिर्माणस्योक्तकारणकथनेन दमयन्तीमुखगतालौकिकसौन्दर्यरूपकार्यस्य प्रतीतिरिति ॥

रत्यन्ते न करोति पङ्कजदृशां स्वेदाम्भसां शोषणं
नो वा नर्तयति ध्वजाग्रघटितांश्चित्रान्पताकापटान् ॥
नोच्छिद्राणि करोति निष्कुटधरापुष्पाणि वा मारुतः
सर्पैरेव निपीयते मरुपते! त्वच्छत्रुपुर्यां परम् ॥ १ ॥

अत्र मारुतो भुजगैरेव भुज्यते इति कार्यकथनेनारिनगरशून्यतारूपकारणस्य प्रतीतिः ॥ मम तु मतं, कारणात्कार्यप्रतीतिः, कार्यात्कारणप्रतीतिश्च व्यङ्ग्यस्य विषय एव

(*) खन्याः खस्याकाशस्य नीलिमा। अस्मिन्ननुप्रासे पूर्वः खनीशब्दः सार्थकः। अपरस्त्वनर्थकः। ख-नीलिमशब्दयोः पार्थक्यात् ॥

न भवतीति व्यङ्ग्यप्रकरणे उक्तम् ॥ उक्तवर्णनद्वयेऽपि न काचिदप्रस्तुतकथा विद्यते। अस्यालंकारस्य स्वारस्यापरिज्ञानादर्वाचीनानामुक्तप्रकारप्रदर्शनमपि प्रमादः ॥ अप्रस्तुतप्रशंसायाः स्वरूपं त्वस्मत्स्फुटीकृतमेव धुरंधराभिप्रेतम्। उक्तलक्षणमस्यालंकारस्य स्वरूपाबोधकमित्यसंभवदोषः ॥ इत्यप्रस्तुतप्रशंसाप्रकरणम् ॥ १२ ॥

# अभेदः ॥

न भेदः, अभेदः । वक्ष्यमाणव्यतिरेकालंकारस्य भेद इति नामान्तरम् । भोजमहाराजेन व्यतिरेको भेदनाम्ना भणितः ॥ केनचिद्धुरंधरस्य दिग्दर्शनेन भेदस्य विपरीतभावेऽभेदालंकारः प्रदर्शितः ॥ अलंकाररत्नाकरे चायं लिखितः ॥

राजन्नभेदं कृत्वा तु कस्यचिद्वर्णनं भवेत् ॥
अभेदालंकृतिं तत्र विजानीयाद्बुधोत्तमः ॥१॥

यथा—

अयं हि धूर्जटिः साक्षाद्यशवन्तनरेश्वरः ॥
करालेनातिकोपेन येन दग्धाः पुरः क्षणात् ॥ १ ॥

अत्र राजराजेश्वरस्य महादेवेन सहाभेदेन वर्णनम् ॥

यथा वा—

सर्वां वर्णयितुं ते कीर्तिं वाञ्छामि जिह्वया नृप! यत् ॥

तद्रन्ध्रेण नलिन्याः पातुं वाञ्छामि सागरं मोहात् ।१।

अत्र नलिनीनालच्छिद्रकृतसमुद्रपानेन सह रसनाकृतराजराजेश्वराखिलयशोवर्णनस्याभेदेन वर्णनम् । वक्ष्यमाणरूपकालंकारस्य स्वरूपं तु रूपवत्ताकरणम् ॥ यथा रामलक्ष्मणाद्यनुकरणे नटस्य । न त्वीदृशाभेदस्फूर्तिरयमेव राम इति । इदं च रूपकप्रकरणे सविस्तरं प्रतिपादयिष्यते ॥ इत्यभेदप्रकरणम् ॥ १३ ॥

## अल्पम् ॥

---

लोके बहुधाऽऽधिक्यमेवेष्यते । तदुक्तमाशीर्वादपद्ये--
" चत्वारो वर्द्धन्तां लक्ष्मीरायुः कीर्तिर्यशो बलम् ॥"

अल्पता च प्रायो नेष्यते । क्वचिदल्पताया अपि रमणीयत्वेऽलौकिकतयाऽलंकारत्वम् ॥

यत्राल्पताया रम्यत्वं तत्राल्पाकृतिर्नृप! ॥
कुर्वताऽल्पं यशोऽन्येषां प्रागेव पठितं किमु ॥१॥

यथा–

दानक्षीणधनां लोके उदारपुरुषा इव ॥
मदक्षीणा गजा भान्ति यशवन्तमहीपतेः ॥ १ ॥

अत्र पूर्वार्धे वैभवविषये, उत्तरार्धे च शरीरविषयेऽल्पत्वम् उभयमपि स्तुतिपर्यवसायि ॥

निन्दापर्यवसायि यथा–

तृणादपि लघुस्तूलस्तस्मादपि च याचकः ॥
वायुना किं न नीतोऽसौ मामसौ याचयेदिति ॥

अत्र भारस्य विषयेऽल्पता ॥ शृङ्खलायाः संकीर्णत्वम् ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ॥

यथा—

मणिमालोर्मिका तेऽद्य करे जपवटायते ॥

आधेयस्याल्पतयाऽऽधारस्याल्पताप्रतीतिस्तु न लोकोत्तरेति नालंकारः। इदं लक्षणमसंभवदोषग्रस्तम् ॥ इत्यल्पप्रकरणम् ॥ १४ ॥

## ॥ अवज्ञा ॥

---

अवज्ञायत इत्यवज्ञा। अवज्ञा त्वनादरः। "अवज्ञा, अनादरे" इति चिन्तामणिः ॥ अनादरयोग्यस्यानादरो लौकिक इतीहालौकिकत्वार्थमादरयोग्यस्यानादरे रूढिः। निमित्तमन्तरा चादरयोग्यस्यानादरोऽपि न शोभाकर इत्यलंकारप्रकरणवशान्निमित्तस्य लाभो रूढिर्वा ॥ अनुज्ञाऽलंकारस्य विपरीतभावेऽयमलंकार इतीहानादरोऽनङ्गीकाररूपत्वेन विवक्षितः। तथा च केनचिन्निमित्तेनादरार्हस्यानादरोऽवज्ञालंकारः ॥

मेघो ववर्ष न मनाग्ग्रीष्मश्चण्डो बभूव मरुभूमौ ॥
तस्मिन्समये नृपते! नगरतडागास्त्वया ह्यपूर्यन्त ।१।

अष्टचत्वारिंशोत्तरैकोनविंशतिशततमविक्रमार्कवर्षे तादृशावसरे राजराजेश्वरयशवन्तसिंहः स्व रामपरिपोषणार्थपरिरचितबालसमुद्राख्यमहासरोवारिणा कृपया प्रजापालनार्थं योधपुरस्थगुलाबसागरादितडागानपूरयत् । इदं च कृत्यं राजराजेश्वरेणावसरे विहितमितीहावसरालंकारः ॥

यथा वा—

पञ्चेषुः पिकगीर्मरुन्मलयजश्चन्द्रो मधुर्मल्लिका–
ऽमीषां का दयिताविघातजमहापापस्य पात्रं भवेत् ॥
इत्थं चिन्तयति प्रवासविधुरे दैवात्तदानीमहो
तूतीजन्तुरुवाच मूर्द्धनि तरोस्तूहीति तूहीति च ।१।

"त्वमेव" इत्यर्थे तूहीति लोकभाषा ॥ तूतीतिपक्षिविशेषः 'तूही, तूही" इति स्वभावादुच्चारयति । अत्र त्वमेव नायिकाप्राणघातक इति तूतीकथनमवसरेऽभवदित्यवसरालंकारः॥ भोजमहाराजः परमतेन स्वनिबन्धेऽवसरालंकारं लिलेख ॥ इत्यवसरप्रकरणम् ॥ १६ ॥

## आक्षेपः ॥

---

आङ्पूर्वात्क्षिपधातोराक्षेपशब्दो निष्पन्नः । आङुपसर्गार्थः सर्वत इति ॥क्षेपशब्दार्थः प्रेरणम् । "क्षिप प्रेरणे" इति धा-

सुपाठे ॥ उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । ततोऽत्राक्षेपशब्दार्थो भर्त्सनम् । भर्त्सनं चापकारवाणी ॥ "आक्षेपः, भर्त्सने । भर्त्सनं, अपकारगिरि" इति चिन्तामणिः ॥ अपकारस्तु तिरस्कारः ॥

तिरस्कारस्य वचनमाक्षेपालंकृतिर्नृप! ॥
सभायां तव नो दृष्टो भूपते! कवितां विना । १॥

यथा—

तनुधनमनोवचांसि यस्य प्राणाश्च सन्ति कीर्त्यर्थम् ॥
तेन हि मरुपतिना ये तुलनामिच्छन्ति ते नृपा अज्ञाः।१।

अत्रानुपमाया गौणत्वान्नालंकारत्वम् ॥ किं त्वन्यनृपविषयतिरस्कारवचनस्य प्राधान्यादाक्षेपाख्योऽलंकारः ॥

यथा वा—

नाहं वाली सुबाहुर्न खरत्रिशिरसौ(*)दूषणस्ताडकाऽहं
नाहं सेतुः समुद्रे न च धनुरपि यत्त्र्यम्बकस्य त्वयाऽऽत्तम् ॥
रे रे राम! प्रतापानलकवलमहाकालमूर्तिः किलाहं
वीराणामूरुशल्यं समरभुवि वरः संस्थितः कुम्भकर्णः १।

अत्र रामचन्द्रं प्रति कुम्भकर्णस्य तिरस्कारवचनमित्याक्षेपालंकारः ॥

यथा वा—

दूरे गच्छ मनांकिं वा पार्श्वे न त्यज्यतेऽनिशम् ॥
अलक्तकोऽयं मत्पादे लग्नः शुष्कत्वमाप्नुयात् ॥१॥

---

(*) "खरत्रिशिरसौ" इत्यत्र रेफोत्तराकारस्य संयोगपरत्वेऽपि न गुरुत्वम् ॥

निषेधोऽपि तिरस्कारस्य समीपवर्तीत्युपलक्षणेन निषेध-स्याप्याक्षेपे संग्रहो वेदितव्यः ॥

यथा—

गुणिनोऽगुणिनः सर्वे लभन्ते धरणीं धनम् ॥
यशवन्तसमो नाभून्न चास्ति न भवेदिह ॥ १ ॥

अयमुपमाया निषेध उपमालंकारापेक्षया राजराजेश्वर-स्योत्कर्षाधिक्यं सामाजिकानां च चमत्कारमादधातीत्याक्षे-पालंकारः ॥ बहवो ग्रन्थकारा निषेधात्मकान्येवाक्षेपोदाहर-णानि दर्शयामासुः ॥

यथा वा—

राज्ये सज्जनभूपतेर्मरुधराधीशस्य राज्येऽथ वा
प्राणान्स्वामिहिताय ये रणमुखे मुञ्चति ते क्षत्रियाः ॥
कीर्तेश्च स्थितिकारिणः सुकवयः पूजापदं चारणा
वेश्याभण्डनटेन्द्रजालिकमुखानर्चन्ति भूपाः परं ॥ १ ॥

अत्रोक्तराज्ययुगलेतरराज्येषु क्षत्रियाणां चारणकवीनां च तादृशसन्माननिषेध आर्थः । स चोक्तराज्ययोरुत्कर्षमा-दधत्काव्यशोभाकरत्वादाक्षेपालंकारः ॥ कश्चिद्रोधाख्यमलं-कारं मन्यते स्म । तस्येदमुदाहरणम्—

विदेशं याति सुहृदि पानीयाहरणाऽध्वनि ॥
रिक्तं घटं समादायाजगामाभिमुखं प्रिया ॥ १ ॥

अत्र रिक्तघटेनापशकुनं विधाय विदेशयातृमित्रस्य गमनरोधो विहितः ॥ भोजमहाराजः "रोधो नाक्षेपतः पृथक्" इत्याह ॥ मम मतेऽपि महाराजस्य सिद्धान्तः समीचीनतरः ॥ उपलक्षणेन रोधस्याप्याक्षेपे संग्रहात् ॥

चन्द्रालोककार आक्षेपस्य प्रकारत्रयं मन्वान इमानि लक्षणान्याह—

"आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ॥
निषेधाभासमाक्षेपं बुधाः केचन मन्वते ॥
आक्षेपोऽन्यो विधौ व्यक्ते प्रतिषेधे तिरोहिते ॥"

इति ॥

क्रमेण यथा—

साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः! ॥
यत्तस्य दैत्या इव लुण्ठनाय
काव्यार्थचौराः प्रगुणीभवन्ति ॥ १ ॥

गृह्णन्तु सर्वे यदि वा यथेच्छं
नास्ति क्षतिः क्वापि कवीश्वराणाम् ॥
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः ॥ २ ॥

अत्र स्वयमुक्तस्य विमर्शान्निषेधः । प्रथमलक्षणे स्वयमुक्तस्य प्रतिषेधांशे न रोचकत्वम् । प्रत्युत शीघ्रविचारशून्यबुद्धिरूपदोषस्य सत्त्वादरोचकत्वम् । किं च तादृशनिषेधस्या-

त्यन्तं लौकिकत्वात्तत्र "यशवन्तसमो नाभूत्" इत्युक्तनिषेधसदृशरोचकत्वाभाव इत्युक्तलक्षणलक्षितोऽर्थो नालंकारत्वार्हः ॥ अस्मिन्नुदाहरणे चमत्कारस्तु दृष्टान्तवाक्यनिष्ठ इति दृष्टान्तालंकारः । उक्तोदाहरणं कुवलयानन्दकारेणोपदिष्टम् ॥ चन्द्रालोके इदमुदाहरणम्—

"चन्द्र! संदर्शयात्मानमथवाऽस्ति प्रियामुखम् ॥"

अत्रापि स्वयमुक्तस्य प्रतिषेधांशे न चमत्कारः । किं तु मुखस्य चन्द्रसादृश्यप्राप्तौ चमत्कारः ॥ स च व्यङ्ग्योपमारूपो भिन्न एव ॥ नन्वत्र विमर्शपूर्वको निषेध इत्युक्तम् । तथा च "साहित्यपाथोनिधि–" इत्यत्र दृष्टान्तरूपविचारस्य "चन्द्र! संदर्शयात्मानम्–" इत्यत्रोपमारूपविचारस्य च विद्यमानत्वे कथं लक्षणासंगतिरिति चेन्न । दृष्टान्तरूपविचारे दृष्टान्तालंकारः, उपमारूपविचारे चोपमालंकारः ॥ स्वयमुक्तस्य प्रतिषेधे आक्षेपालंकारोऽङ्गीकृतः । अस्मिन्नंशे चमत्कारशून्यतयाऽलंकारान्तरत्वयोग्यतात्वाभावात्प्रथमलक्षणेऽसंभवदोषः ॥

नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ॥

अत्र नाहं दूतीति दूत्या दूतीत्वनिषेधवचनस्याभासमात्रत्वम् ॥ दूतीत्वविधानात् । निषेधाभासस्त्वाभासालंकार एव । न त्वलंकारान्तरमिति द्वितीयलक्षणमप्यसंभवदोषग्रस्तम् ।

गच्छ गच्छसि चेत्कान्त! तत्रैव स्याज्जनिर्मम ॥

अत्र नायिकायाः प्रियविदेशगमननिषेधे इष्यमाणेऽपि

प्रयाणसमये निषेधवचनस्यापशकुनरूपत्वात्तादृशविधिवचनद्वारा निषेधस्य गोपनम्। अत्र निषेधवचने गोपनस्य प्राधान्यादपन्हुत्यलंकारः॥ प्रतिषेधस्य तिरोधानमर्थादपह्नवस्त्वपह्नुत्यलंकार एव। न त्वलंकारान्तरमिति तृतीयलक्षणेऽप्यसंभवदोषः॥ इत्याक्षेपप्रकरणम्॥ १७॥

# आभासः॥

अत्राङुपसर्गार्थ ईषत्किंचिदिति। "आङ् ईषदर्थे" इति चिन्तामणिः॥ भासशब्दार्थः प्रकाशनम्। भासनं भासः॥ "भासनं प्रकाशने" इति चिन्तामणिः॥ अत्रेषच्छब्दस्य काले रूढिः। तथा च "आ ईषत्किंचित्कालं भासः प्रकाशनमाभासालंकार इत्यर्थः॥

विद्युद्वत्क्षणमात्रं चेद्भासोऽर्थस्य भवेन्नृप!॥
आभासस्तत्र विज्ञेयः स चानेकविधः स्मृतः॥१॥

अस्यालंकारस्य भूषणाभासादयो बहवः प्रकारा भवन्ति। पुनश्चोक्तप्रकाराणां बहवः प्रकारा भवेयुः। यथा भूषणाभासे उपमाभासादयो वस्त्वाभासे च स्तुत्याभासनिन्दाभासादयः॥

भूषणाभासो यथा—

नरेन्द्रमौले! न वयं राजसंदेशहारिणः॥
जगत्कुटुम्बिनस्तेऽद्य न कश्चिद्रिपुरीक्ष्यते॥ १॥

अस्य वक्तुरितरराजप्रेरणयाऽऽगमनं स्फुटतरम् । अयं च स्वोक्तेः सत्यत्वप्रतिपादनाय दौत्यं कुर्वन्नपि स्वस्य दूतत्वं निषेधतीत्ययं निषेध आभासरूपः ॥ अयमाक्षेपाभासः ॥

यथा वा—

कमलमनम्भसि कमले, कुवलये तानि कनकलतिकायाम् ॥
सा च सुकुमारसुभगेत्युत्पातपरंपरा केयम् ॥ १ ॥

अत्र श्रुतिमात्रेणातिशयोक्तेर्भानेऽपि तत्क्षणमेव नायिकाऽवयवरूपकस्यालंकारिकवेद्यतयाऽत्रातिशयोक्तिराभासरूपेति भूषणाभासाख्यस्याभासस्यातिशयोक्त्याभासनामकोऽयं प्रकरः ॥

दूषणाभासो यथा—

पुनरुक्तदोषस्याभासं पुनरुक्तवदाभासाख्यं स्वतन्त्रमलंकारमङ्गीकुर्वन्काव्यप्रकाशकार ईदृशं लक्षणोदाहरणमाह—

"पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ॥
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम् ॥१॥" इति ॥
चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ॥
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः ॥ १ ॥

अत्राङ्गनारामाशब्दयोः स्त्रीवाचित्वात्, कौतुकानन्दशब्दयोरानन्दवाचित्वात्, सुमनोविबुधशब्दयोश्च 'देवतावाचित्वादुक्तभिन्नाकारशब्देष्वेकार्थताभानम् । विवक्षितार्थस्तु, अङ्गने

गृहाङ्गणे आरामा उद्यानानि येषां ते। कौतुके क्रीडायामानन्दस्य हेतवः कारणानि। आनन्दवर्द्धका इति भावः॥सुमनसः सुहृद्धृदयाः। विबुधाः पण्डिता इति॥ मम तु मतं, अयं पुनरुक्तदोषस्याभासोऽस्य नामलक्षणोदाहरणैर्नालंकारान्तरत्वयोग्यः। किं त्वाभासालंकारस्य प्रकारतायोग्य इति दूषणाभासाख्याभासप्रकारस्य पुनरुक्तयाभासनामकः प्रकारोऽयम्। वस्त्वाभासप्रकारास्तु स्तुत्याभासनिन्दाभासादयोऽनन्ता एव॥

गर्वो न ते स्याद्यशवन्तभूपते!
खिन्नो न कोपीति मदीयशासने॥
कुलस्य मूलं रविरेष भिद्यते
रणे हतैः शत्रुभिरग्रतस्तव॥ १॥

अत्र श्रुतिमात्रेण निन्दाया भानेऽपि शत्रुनिस्कन्दनरूपस्तुतौ पर्यवसानम्॥

यथा वा—

भण्डेषु भोजसदृशा कर्णाभाश्चैव कुट्टिनीवृन्दे।
सन्तीतरे नृपाला आधुनिका मरुपते! ह्येते॥ १॥

अत्र श्रुतिमात्रेणेतरनृपाणां स्तुतेर्भानेऽपि तन्निंदायां पर्यवसितिः। भावाभासरसाभासौ तु भावप्रकरणे लिखितौ। अयं धुरंधराभिमत आभासालंकारः स्वतन्त्रश्चिरकालिकश्च। धुरंधराभिप्रायापरिज्ञानादर्वाचीनाः प्रमादेनैनं खण्डशः कृत्वा विरोधस्याभासे विरोधाभास इत्यादिनाम-

भिरलंकारान्तराणि मन्यन्ते स्म । निषेधस्याभासं चाक्षेपालंकारस्य प्रकारमाहुः । आभासालंकारस्य विशेषतया जीर्णोद्धारस्त्वस्माभिर्विहितः ॥ इत्याभासप्रकरणम् ॥ १८ ॥

# उत्तरम् ॥

उत्तरं तु प्रतिवचनम् । तच्च लोकोत्तरं चेदलंकारः ॥

"उत्तरालंकृतिर्भूप! स्याल्लोकोत्तरमुत्तरम् ॥"
लोकन्यायेन भूपाऽसौ धुर्येणाङ्गीकृता नृप! ॥१॥

यथा--

कं नामयति शत्रूणां मरुनाथस्य विक्रमः ॥
कं नामयति शत्रूणां मरुनाथस्य विक्रमः ॥ १ ॥

शत्रुः संधिविग्रहयोरेकं करोति । संधौ शिरो नामयति । विग्रहे धनुर्नामयति । एतद्विषयकसंदेहेऽयं प्रश्नः । राजराजेश्वरयशवन्तसिंहस्य विक्रमो रणे शत्रूणां "कं नामयति" इति ॥ अस्य प्रश्नस्येदमेवोत्तरं "कं नामयति" इति ॥ अत्र कं शिरः ॥ इदमुत्तरं चमत्कारकारितयाऽलंकारः ॥ इदमुत्तरं प्रश्नादभिन्नम् । प्रश्न एवोत्तरमित्यर्थः ॥

यथा वा--

के खेऽटाः किं चलं वयः ॥

अत्र "ख आकाशे संचारिणः के" इत्येकः प्रश्नः । "किं

चलम्” इत्यपरः प्रश्नः । तयोर्द्वयोः “वयः” इत्येकमुत्तरम् । अस्यार्थस्तु पक्षिण आयुश्च । अत्र प्रथमोत्तराद्द्वितीयमुत्तरमभिन्नम् । द्वितीयप्रश्नस्यापि तदेवोत्तरमित्यर्थः ॥ प्रथमोत्तरे श्लेषः । द्वितीयोत्तरे श्लेषो दीपकं च । तथाप्युत्तररूपचमत्कारस्य प्राधान्यादिहोत्तरमेवालंकारः ॥ इदमनेकप्रश्नविषयमेकमुत्तरम् । एतदपि चमत्कारकारितयाऽलंकारः ॥

यथा वा--

किं मरणं दारिद्र्यं को व्याधिर्जीवितं दरिद्रस्य ॥
कः स्वर्गः सन्मित्रं सुकलत्रं सुप्रभुः सुसुतः ॥ १ ॥

अत्र प्रश्नकर्त्रा ज्ञातमरणाद्यतिरिक्तं पृष्टम् । तत्रोत्तरदात्रा प्राणवियोगरूपमरणादिसदृशा दारिद्र्यादय उक्ताः । दुःखादिकार्यकरणे मरणदारिद्र्यादिसदृशो न कश्चित्तृतीयः । इदमप्युत्तरं चमत्कारकारितयाऽलंकारः ॥ इमानि परंपरागतोदाहरणानि ॥ मम तु मतं, समस्या प्रश्नः, तस्याः पूर्तिरुत्तरमिति समस्यापूर्तिरप्युत्तरालंकारः ॥

यथा—

त्वं नो गोत्रगुरुस्तवेन्दुरधिपस्तस्यामृतं त्वत्करे
ऽस्त्येणीं व्याधशराहतां प्रणयिनीमेनां पुनर्जीवय ॥
इत्यूर्ध्वं गगने निशापतिमृगं कारुण्यमातन्वतः
शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले ।१।

समस्यापूर्तिर्द्विविधा । तत्रैका तु प्रश्नकर्त्राऽसंभववर्णन-

स्यैकंचरणे उक्ते उत्तरदाता त्रिभिश्चरणैः संभवितमनोहारितया तस्य पूर्तिं विदध्यात् ॥ अस्यास्तूकोदाहरणम् ॥ अपरा तु प्रश्नकर्त्रा नीरसवर्णनविषये भिन्नरसवर्णनविषये वा चरणत्रये उक्ते उत्तरदाता चतुर्थचरणेन पूर्तिं विधाय तस्मिन्सर्वस्मिन्वर्णने प्रश्नकर्तुरिच्छानुकूलं रसं घटयेत् ॥

परिपतति पयोनिधौ पतङ्गः
सरसिरुहामुदरेषु मत्तभृङ्गः ॥
उपवनतरुकोटरे विहङ्गो
युवतिजनेषु शनैः शनैरनङ्गः ॥ १ ॥

अत्र प्रश्नकर्त्रा प्रथमचरणत्रयेण संध्यावर्णनविषयकनीरसवर्णने उक्ते उत्तरदाता चतुर्थचरणेन प्रश्नकर्तुरिच्छानुकूलमुक्तवर्णनं शृङ्गाररसमयं चकार ॥ अन्यदपि किंचित्प्रकारकमुत्तरं चमत्कारावहमुपलभ्यते चेत्तत्राप्यलंकारत्वमङ्गीकरणीयम् ।

चन्द्रालोककार उत्तरस्य भेदद्वयमाह । तत्र प्रथमं तु गूढोत्तरम् । तस्येदं लक्षणोदाहरणम् ॥

"किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम् ॥"

यथा—

यत्रासौ वेतसी पान्थ! तत्रेयं सुतरा सरित् ॥

इयं नदी कुतः सुतरेति पथिकस्य प्रश्ने नायिकाया इदमुत्तरम् । तत्र स्वयंदूतिकात्वप्रतीतिर्व्यङ्ग्या । इदमेवोत्तरे

गूढत्वम् । मम तु मतं, अत्र चमत्कारस्तु नायिकारूपवक्तृवैलक्षण्यादुक्तव्यङ्ग्यस्यैव । उत्तरांशे तु मनागपि न चमत्कारः। उत्तरस्यायं प्रथमः प्रकार इति भणनं प्रमादः ॥ चित्रोत्तरमिति द्वितीयप्रकारमाह । तस्य च पुनर्भेदद्वयं बभाण ।

" प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुच्यते ॥ "

प्रश्नाभिन्नमुत्तरं तु प्रश्न एवोत्तरं भवेत् । उत्तरान्तरादभिन्नमुत्तरं त्वेकस्मादुत्तरादभिन्नमन्यदुत्तरम् । एकप्रश्नस्योत्तरमेवेतरप्रश्नोत्तरमपि स्यादिति भावः ॥ उक्तलक्षणयोरर्वाचां "किं मरणं दारिद्र्यम्-" इत्युदाहरणेऽस्मदभिमतसमस्यापूर्त्याद्युदाहरणेषु चाव्यापनादव्याप्तिः । धुरंधरकृतालंकारनाम्नामर्थस्य सामान्यतया सर्वव्यापित्वम् । तत्रार्वाचां विशेषतया लक्षणनिर्माणात्तेऽलंकारा अल्पव्यापित्वमधिगताः। प्रथमलक्षणमसंभवदोषग्रस्तम् । द्वितीयतृतीयलक्षणे चाव्याप्तिमती ॥ किं च प्रकारलालसया "यत्रासौ वेतसी-" इत्यत्र व्यङ्ग्यस्य सूक्ष्मत्वे गूढत्वं मत्वा गूढोत्तरमिति, अपरोदाहरणयोश्च विचित्रतां मत्वा चित्रोत्तरमित्युक्तम् । परं त्वीदृशकविप्रतिभायां नाश्चर्यम् । कस्यचिदुत्तरस्याश्चर्यरूपत्वं चेत्तत्राश्चर्यस्य प्रधानतया विचित्रालंकारः स्यात् ।

यथा —

चरणस्पर्शं कृत्वा कान्तोऽयाचत रतिं तु विपरीताम् ।
साऽस्योत्तरं स्मयित्वा दीपकदर्शं ददे विना वाणीम् ॥ १ ॥

वाणीं विनेति कयापि मनोहरचेष्टया । अस्मिन्नुत्तरे

सूक्ष्मतायाः प्राधान्यात्सूक्ष्मालंकारः । न तूत्तरम् ॥ इत्युत्तर-प्रकरणम् ॥ १६ ॥

## ॥ उत्प्रेक्षा ॥

उत्प्रेक्षेत्यत्रोदुपसर्गार्थः प्राधान्यम् "उत्प्राधान्ये" इति चिन्तामणिः॥ प्रोपसर्गार्थो बलम् । "प्र शक्तौ" इति चिन्तामणिः ॥ शक्तिस्तु बलम् । ईक्षधातोरीक्षाशब्दो निष्पन्नः । "ईक्ष दर्शनाङ्कनयोः ।" इह दर्शनार्थस्य विवक्षितत्वादीक्षाशब्दार्थो दर्शनम् । उत्प्रेक्षेति समुदितशब्दार्थस्तु "उत् प्रधानतया बलेनेक्षा दर्शनमुत्प्रेक्षेति । इहेक्षाशब्देन "मन्ये शङ्के" इत्यादीनां संग्रहो विवक्षितः ॥ धुरंधर उत्प्रेक्षाव्यञ्जकशब्दान् गणयाञ्चकार–

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ॥
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥१॥

यत्र यस्य वस्तुनः प्राधान्यं तस्य वस्तुनस्तत्र प्रधानतया दर्शने बलस्य नावश्यकत्वम् ॥ बलस्यावश्यकत्वं तु यत्र यस्य वस्तुनः प्राधान्याभावस्तत्र तस्य प्रधानतया दर्शने एव । गौणप्रधानभावश्च द्वयोः संबन्धे भवतीतीहाप्येकं वस्तु रूपद्वयेन कथयन्कविरेकं वस्तु बलेन प्रधानतया पश्यति ॥ यस्मिन् रूपद्वयस्य संभवस्तस्मिन्नवास्तवरूपस्य बलेन प्रधानतयेक्षणमुत्प्रेक्षालंकार इति निष्कर्षः ॥ इह यथासंभवं बलं

बलरूपेण विवक्षितम् । न तु कारणरूपेणेतीह हेत्वलंकारस्य न गन्धलेशोऽपि । किं तूत्प्रेक्षैव स्वतन्त्रोऽलंकारः ॥

बलात्प्रधानभावेन कवे राजन्! यदीक्षणम् ॥
उत्प्रेक्षाऽलंकृतिः सा स्यादेषाऽत्यन्तमनोहरा ।१।
वस्तुहेतुफलानां तु भेदादेषा त्रिरूपिणी ॥
अस्यास्तूदाहृतीरत्र क्रमशो दर्शयाम्यहम् ॥२॥

यथा–

मृगस्य पश्चाद्धावन्तं हयं मरुपतेरमुम् ॥
कस्तूरीसौरभे लुब्धं समीरं मन्महे वयम् ॥ १ ॥

अत्र वस्तुतो हयो धावति । वेगातिशयसादृश्याच्च समीरस्यापि संभवः । तत्र कविर्मृगमदपरिमललोभस्वभावरूपबलेन समीरं प्रधानतयेक्षते । मृगनाभ्यां कस्तूरिका भवति । समीरस्य च गन्धग्राहकत्वं प्रसिद्धम् । गन्धवाह इति समीरस्य नामैव । अत्र हयं हयरूपेण समीररूपेण च रूपद्वयेन कथयन्कविः समीरमुक्तबलेन प्रधानं मन्यते । अत्र हयरूपवस्तुनि समीररूपवस्तुन उत्प्रेक्षणाद्वस्तूत्प्रेक्षा ॥

यथा वा–

नलिनी हंसविश्लेषक्लेशं सहितुमक्षमा ॥
मन्ये सरोवरजले वर्षायां विनिमज्जति ॥ १ ॥

वर्षतौ नलिन्याः सलिलवृद्धिमरालवियोगयोरुभयोः सं-

बन्धः। तत्र नलिन्याः सलिलप्रवेशहेतुर्जलवृद्धिः। न तु मरालवियोगजमसह्यदुःखम्। परं तु प्रियवियोगसंबन्ध्यसह्यदुःखे स्त्रियः प्राणान्परित्यजन्तीतिबलेन कविर्जलवृद्धिरूपवास्तवहेतुं गौणीकृत्य मरालवियोगजन्यं दुःखरूपमवास्तवहेतुं प्रधानं मन्यते। अत्र जलवृद्धिरूपे हेतौ विरहजन्यासह्यदुःखरूपहेतोरुत्प्रेक्षणम्॥

यथा वा--

मध्यंदिनार्कसंतप्तः सरसीं गाहते गजः।
मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुद्यतः॥

अत्र गजस्य सरःप्रवेशस्य फलं तापापनोदः। न तु मार्तण्डमित्रं ज्ञात्वा पद्मपीडनम्। तथापि ग्रीष्ममध्यान्हे सूर्यो गजमत्यन्तं तापयत्येव। सरसि क्रीडामाचरन्करी निसर्गेण कमलान्युन्मूलयत्येव। कमलं च सूर्यस्य संबन्धि। शत्रुसंबन्धिबाधनं च लोकरीतिरित्युक्तबलेन कविः स्नानफलं गौणीकृत्य कमलविध्वंसफलं प्रधानं मन्यते। अत्र वक्ष्यमाणप्रत्यनीकालंकारस्य संकीर्णता।

उत्प्रेक्षानामावयवार्थमुदाहरणाभिप्रायं चाजानाना अर्वाचीना नामातिरिक्तलक्षणमकार्षुः॥ चन्द्रालोके इदं लक्षणम्--

"संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना।" इति॥

योग्यतापि संभावनाशब्दार्थः। "संभावना योग्यतायाम्" इति चिन्तामणिः॥ अत्रैतेषां संभावनाशब्देन वस्तुहेतुफलेष्वन्यवस्तुहेतुफलस्य योग्यताविवक्षायामप्युक्तलक्षणमस्या-

लंकारस्य न साक्षात्स्वरूपबोधकम् । अत्र योग्यतायां अभावात् । न खलु "मृगस्य पश्चाद्धावन्तम्—" इत्यत्र हये पवनस्य योग्यता । किंतु छलेन प्रधानतया हये वायोरीक्षणम् ॥ तथैव फलहेत्वोर्ज्ञेयम् ॥ किंचानेनैव सामान्यतया संभावनाऽलंकारः पृथगुक्त इत्यस्यालंकारस्य तस्य विशेषरूपत्वात्तत्रैवान्तर्भावो भविष्यति ॥ अपि च संभावनाशब्दार्थं उत्कट एककोटिकसंदेहोऽपि । "संभावना, उत्कटकोटिकसंशयः" इति शब्दकल्पद्रुमे ॥ संदेहे तु कोटिद्वयस्यापि समकक्षत्वम् । यथा—"इन्दुर्वाऽऽननं" वा । उत्प्रेक्षायामेककोटेरौत्कट्यम् । यथा-"मृगस्य पश्च त--" इत्यत्र वायुरूपकोटौ संदेहस्यौत्कट्यम् । इयं विवक्षा चेदस्य संदेहप्रकारतया संदेहेऽन्तर्भावः स्यात् । न ह्यस्यालंकारस्य स्वारस्यं योग्यतायां संदेहे वा । किं त्वेतद्विलक्षणे नामार्थे एव । उक्तलक्षणं साक्षात्स्वरूपाबोधकमतिव्याप्तिदोषग्रस्तं च ॥ वस्तूत्प्रेक्षा च स्वरूपोत्प्रेक्षेत्यपि भण्यते । अर्वाचीना वस्तूत्प्रेक्षायाः प्रकारद्वयमाहुः । यस्मिन्वस्तुन्युत्प्रेक्ष्यते तस्य वचनेन कथने उक्तास्पदा । आस्पदमाश्रय इत्यनर्थान्तरम् । उक्तमास्पदमाश्रयो यस्यां सोक्तास्पदा । यस्यां चास्पदं वचनेन नोक्तं साऽनुक्तास्पदा ॥

धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम् ॥
रवावस्तंगते मन्ये वर्षतीवाञ्जनं नभः ॥ १ ॥

सूर्यास्तसमय एव कोकवियोगो भवतीति छलेन तमस्युक्तधूमस्य स्थापनम् । अशुभसमये प्रायो रजोवृष्टिर्भवति । कज्जलवृष्टिश्च रजोवृष्टेरप्यनिष्टतरेति छलेन तमसि कज्जलवृष्टेः

स्थापनम् । इयं कज्जलवृष्टिश्च जगत्प्रकाशकसूर्यास्तमनहेतुका ।
अत्र पूर्वार्धे तमोवस्तुनि कोकीविरहानलधूमवस्तुन उत्प्रेक्षणमिति तमोरूपास्पदस्य वचनेन कथनादुक्तास्पदा वस्तूत्प्रेक्षा। उत्तरार्धे चास्पदस्य तमसो वचनेनानुक्तत्वादनुक्तास्पदा वस्तूत्प्रेक्षा ॥ मम तु मतं, उक्तवैलक्षण्यं लुप्तोपमावच्चमत्कारशून्यत्वान्न प्रकारान्तरत्वार्हम् । किं तूदाहरणान्तरमात्रम् । हेतूत्प्रेक्षाफलोत्प्रेक्षयोश्च सिद्धास्पदाऽसिद्धास्पदेतिप्रकारद्वयमुक्तम् ।

"रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् ॥"

अत्र नायिकायाश्चरणारुणताहेतुः स्वभावः । तत्र कठोराङ्गणविहरणबलेन सुकुमारताहेतोः स्थापनम् । अत्र स्वभावरूपो हेतुरास्पदम् । तच्च स्वतः सिद्धम् ।

"प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ॥"

अत्र पद्मानां सलिलसेवनफलं जीवनम् । तत्र कामनया सलिले तप आचरतीतिबलेन चरणसमतालाभेच्छारूपफलस्य स्थापनम् । अत्र जडपद्मेषु जीवनरूपफलमास्पदम् । तच्चासिद्धम् ॥ मम तु मतं, कविसृष्टेर्विधिसृष्टिविलक्षणत्वादिहालौकिकत्वमिष्टम् । तदुक्तं शिष्टैः–

"सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ॥"
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥१॥

इति ॥

वक्रोक्तिरतिशयोक्तिः । एतादृशकविप्रतिभोत्थापितयुक्तिप्रसिद्धवृद्धिकरणे तु प्रसिद्धिविरुद्धदोषापातादुद्वेगजनकतया काव्यवैभवं निर्मूलं स्यादित्यर्वाचामिदं साहित्यसिद्धान्तविरुद्धं मतं प्रमादमूलम् ॥ उत्प्रेक्षाव्यञ्जकशब्दलोपे गम्योत्प्रेक्षेति प्रकारकथनमपि लुप्तोपमावद्व्यर्थम् ॥ इत्युत्प्रेक्षाप्रकरणम् ॥ २० ॥

# ॥ उदात्तम् ॥

अत्रोदुपसर्गार्थः प्राकट्यम् । प्राकट्यं तु निःसंदेहज्ञानम् ॥ "उत् प्राकट्ये । प्रकटः निःसंदिग्धं भातीतिव्यवहारगोचरे ।" इति चिन्तामणिः ॥ आङ्पूर्वाद्ददातेर्भावे क्तप्रत्यये आत्तशब्दो निष्पन्नः । आत्तशब्दार्थो ग्रहणम् । "आत्तः गृहीते" इति चिन्तामणिः । तत्र कर्मणि क्तः । इह तु भावे विवक्षितः । तथा चात्तं ग्रहणम् । स्वीकार इति यावत् ॥ उदात्त इति समुदितशब्दार्थस्तु "उत्प्राकट्यस्य निःसंदेहज्ञानस्यात्तं स्वीकार उदात्तालंकारः" इति ॥ "पहिचान कराना, ओलखाना" इति लोकभाषा ॥

शृणु निःसंशयज्ञानस्वीकारो मरुनायक! ॥
उदात्तालंकृतिः साऽसौ विख्याता जगतीतले ॥१॥

यथा—

यो भूपालानकरोद्रङ्कान् रङ्कांश्चकार भूपालान् ॥

निर्जलमरुं च सजलं सोऽयं यशवन्तपृथ्वीशः ॥

अत्र यशन्तसिंहाख्यभरतपुरभूपस्यापि सम्राट्कुमारसभायां विद्यमानत्वान्मरुपतेर्यशवन्तसिंहस्य निःसंशयज्ञानार्थमुक्तकृत्यकथनम् ॥ नात्राज्ञातज्ञापने पर्यवसानम् । किं तु निःसंदेहज्ञापने पर्यवसानम् ॥

प्रसन्नराघवनाटकस्य प्रथमाङ्के सीतां प्रति तत्स्वयंवरसमागतक्ष्मापतीनां निःसंदेहज्ञानार्थं नूपुरकमञ्जीरकवन्दिप्रश्नोत्तरम् । तत्र नूपुरकस्यायं प्रश्नः--

नूपुरकः--वअस्समञ्जीरअ! को इमो सीताकरग्गहवासनावसन्तलच्छीविलसन्तपुलअमुउलजालमण्डिदं निअभुजसहआरसाहिजुअलं पुलोअन्तो चिट्ठदि(*)

मञ्जीरकस्येदमुत्तरम् ॥

मञ्जीरकः--स एष निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालक्ष्मापालकुन्तलालंकारो मल्लिकापीडो नाम ॥

अत्रोक्तवृत्तान्तकथनेन मल्लिकापीडनृपस्य निःसंदेहज्ञापनम् ।

यथा वा--

(*) संस्कृतम् ॥ वयस्यमञ्जीरक! कोऽयं सीताकरग्रहवासनावसन्तलक्ष्मीविलसत्पुलकमुकुलजालमण्डितं निजभुजसहकारशाखियुगलं विलोकयंस्तिष्ठति ॥

गरलं पायिता लाक्षागृहे दग्धाश्च पाण्डवाः ॥
हृतं च द्रौपदीवस्त्रं सोऽयं दुर्योधनोऽधमः ॥ १ ॥

अत्रान्यायाचरणैर्दुर्योधनस्य निःसंदेहज्ञापनम् ॥ परंपरागते धुरंधरस्येमे उदाहरणे—

रत्नभित्तिषु संक्रान्तप्रतिबिम्बशतैर्वृतः ॥
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥१॥

लङ्केश्वरा अनेके बभूवुरिति कविना "रत्नभित्तिषु संक्रान्तिप्रतिबिम्बशतैर्वृतः॥" इतिविभूत्या वर्णनीयरावणो निःसंदिग्धं ज्ञापितः ॥ स्वर्गादिलुण्टनेन तादृशविभूतिमाँल्लङ्केश्वरेषु रावण एव बभूव ॥

सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥

हिमालयेऽनेके पर्वताः सन्ति । तत्रोक्तवृत्तान्तेन वर्णनीयपर्वतस्य निःसंदिग्धं ज्ञापनम् ॥

अस्यालंकारस्य स्वरूपं तु वस्तुनो निःसंदेहज्ञानम् । तंत्र नामावयवार्थमुदाहरणाभिप्रायं चाजानंश्चन्द्रालोककारो लक्ष्मीमहत्तायाश्चरित्रमुदात्तालंकारं ज्ञात्वा

"उदात्तमृद्धेश्चरितम्"

इति लक्षणमाह । ऋद्धिर्लक्ष्मीः । "ऋद्धिः लक्ष्म्याम्" इति चिन्तामणिः ॥ उक्तोदाहरणानुसारेण चोदात्तशब्दार्थं महदित्यमन्यत । उदात्तशब्दार्थो महदित्यपि । "उदात्तः

महति" इति चिन्तामणिः ॥ "रत्नभित्तिषु-" इत्यत्र लक्ष्मीमहत्ताया उक्तचरित्रं तु लङ्केश्वरेषु रावणनिःसंदेहज्ञापनस्य साधनम् । तच्चानेकप्रकारकं भवति । "गरलं पायिताः-" इत्यत्रान्यायाचरणैर्दुर्योधनस्य निःसंदेहज्ञापनम् । "रत्नभित्तिषु-" इत्यत्र रावणनिःसंदेहज्ञापनरूपप्रयोजनं विनोक्तलक्ष्मीचरित्रमात्रस्य तु लङ्केश्वरविभूतेर्हेतुतया हेत्वलंकारः । हनूमता कृच्छ्राज्ज्ञात इति ज्ञाने पर्यवसानं चेद्धनूमता केनचिद्धेतुनैव ज्ञात इति तत्रापि हेत्वलंकारः। यदि च प्रतिबिम्बेषु हनुमतो भ्रान्तौ पर्यवसानं तदा भ्रान्त्यलंकारः। सामान्यतया लक्ष्म्याश्चरित्रमात्रं सर्वथैव नालंकारत्वार्हम् ॥ सामान्यतया लक्ष्मीचरित्रस्यालंकारत्वे तु सामान्यतया तदितरवस्तुचरित्रस्यापि कुतो नालंकारत्वम् । एवं तूपमादिसमस्तालंकाराणामुच्छेदेन सर्वत्र केवलमुदात्तालंकार एव स्यात्। यथा-"मरुद्धन्मरुभूपाल! सर्वसंचारि ते यशः॥" इयमुपमा यशसश्चरित्रम् ॥ इत्यादि ॥ "सानौ यस्याभवत्-" इत्युदाहरणे उक्तलक्षणस्याव्याप्तिरिति द्वितीयमुदात्तं मत्वेदं लक्षणमुवाच—

"चरितं श्लाघ्यं चान्योपलक्षणम् ॥" इति ॥

उपलक्षणमङ्गम् । तदेव कुवलयानन्दकारेण "इदं श्लाघ्यचरितस्यान्याङ्गत्वे उदाहरणम्" इति स्फुटीकृतम्। उक्तोदाहरणे शिवार्जुनसमररूपं श्लाघ्यचरितं वर्णनीयगिरेरङ्गं मन्यन्ते। इहापि वर्णनीयगिरेर्निःसंदेहज्ञानप्रयोजनं विनोक्तश्लाघ्यचरित्रमात्रस्य तु वर्णनीयगिरेर्महिमहेतुतया हेत्वलंकारः । विशेषणं च विशेष्यस्याङ्गं भवत्येव । न हि श्लाघ्यचरितरूपविशेषतयाऽङ्गाङ्गिभावोऽलंकारत्वयोग्यो भवति । उक्तलक्षणयोरु-

दात्तालंकारस्वरूपावोधकतयाऽसंभवदोषग्रस्तत्वं वेदितव्यम् ॥ इत्युदात्तप्रकरणम् ॥ २१ ॥

# उदाहरणम् ॥

अलंकाररत्नाकरेऽयमलंकारो लिखितः ॥ वस्तुनः स्वरूपप्रकाशनार्थं तन्मध्यादीषदादाय दर्श्यते तल्लोके "वानगी—नमूना" इति चोच्यते ॥ उक्तलोकव्यवहारानुसारेण धुरंधरोऽमुमलंकारमङ्गीचकार ॥ अत्रोदुपसर्गार्थः प्रकाशः । "उद् प्रकाशे" इति चिन्तामणिः ॥ आङ् ईषदर्थकः । हरणशब्दार्थः स्वीकरणम् । "हरणं स्वीकारे" इति चिन्तामणिः ॥ आदानमिति यावत् ॥ उदाहरणेतिसमुदितशब्दार्थस्तु "उत्प्रकाशार्थमीषद्धरणमुदाहरणम्" इति ॥ साहित्यशास्त्रेऽस्य सर्वत्र प्रचारः । अलंकारादीनां सर्वेषामुदाहरणानि दर्श्यन्ते ॥

कस्यचित्सुप्रकाशाय यदीषद्धरणं भवेत् ॥
तदुदाहरणं राजन्नलंकारतया मतम् ॥ १ ॥

यथा—

गर्वं न कुर्वन्ति महानुभावा-
स्ते संलभन्ते भुवि पूर्णशोभाम् ॥
ईत्तंध्वमासीद्यशवन्तसिंह
ऋजुस्वभावाज्जगतो विभूषा ॥ १ ॥

अत्र पूर्वार्धकथितस्य प्रकाशनार्थमुत्तरार्धे एकस्य राजराजेश्वरवृत्तान्तस्य कथनमुदाहरणम् ॥

यथा वा—

एको हि दोषो गुणसंनिपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

नात्रोपमाऽलंकारः । तत्रोपमानोपमेययोर्भेदात् । न चात्र भेदः । किं तु सामान्यविशेषभावः ॥ न चात्र निश्चयदर्शनमपि । शङ्कावकाशमूलकताया अभावात् ॥ इत्युदाहरणम् ॥२२॥

## उल्लेखः ॥

---

अत्रोदुपसर्गार्थ उत्कर्षः । "उद् उत्कर्षे" इति चिन्तामणिः ॥ "लिख अक्षरविन्यासे" इत्यस्माद्भावे घञि लेखशब्दो निष्पन्नः । अक्षरविन्यासस्तु लिपिः । "अक्षरविन्यासो लिपौ" इति चिन्तामणिः । उल्लेख इति समुदितशब्दार्थस्तु "उत् उत्कृष्टो लेख उल्लेखः । उत्कर्षवती श्रेष्ठा लिपिरिति यावत् ॥ दीपकन्यायेनाङ्गीकृतोऽलंकारो दीपकम् । तद्वदुल्लेखन्यायेनाङ्गीकृतोऽलंकारो धुरंधरेणोल्लेखनाम्ना भणितः ॥ न्यायनिदर्शनोक्तं नाम चमत्कारेऽधिकमुपयोगि ॥ लेखस्य चेयं रीतिः, एकमप्यकाराद्यक्षरमनेकैर्लिखितं सदनेकप्रकारकं भवति, न त्वेकस्वरूपमिति प्रत्यक्षम् ॥ सर्वेषामप्यक्षराणि पृथक् पृथक् लक्ष्यन्ते । लोकप्रवादोऽपि—

उष्णीषः प्रकृतिर्भाग्यमक्षराणि तथैव वाक् ॥
उक्तिर्विवेकिता क्वापि नैकरूपं विलोक्यते ॥१॥ इति ॥

एकस्या एवाक्षरलिपेरनेकधात्वे निमित्तं तु लेखकहस्तक्रियाभेदः ॥ अत्रोत्कर्षार्थकोदुपसर्गस्य नाम्नि प्रयोगस्त्वभ्याससमये एकस्यापि लेखकस्याक्षरलिपेरनेकधात्वेऽपि तत्र श्रेष्ठत्वाभावात्तस्या व्यावृत्तिर्यथा स्यात् । अस्मिन्नलंकारे उल्लेखन्यायचमत्कारस्त्वनेकग्रहीतृभिर्यथारुच्येकस्यानेकधात्वे, अनेकैराश्रयैर्विषयैश्चैकस्यानेकधात्वे च ॥

अनेकधैकं यत्र स्यादनेकैर्मरुवल्लभ! ॥
न्यायेन श्रेष्ठलेखस्य तत्रोल्लेखाख्यभूषणम् ॥१॥

यथा—

रेलाख्ययानस्य जलाशयानां
जानन्ति कर्तारमिमाः प्रजास्ते ।
लक्षप्रदं त्वां कवयोऽरिवर्गा
विध्वंसहेतुं यशवन्तसिंह! ॥१॥

अत्रैकमेव यशवन्तसिंहं राजराजेश्वरं प्रजाः पालनरुच्या रेलाख्ययानस्य जलाशयानां च कर्तारं जानन्ति । कवयो लाभेच्छया लक्षप्रदं जानन्ति । शत्रवो भीत्या विरोधिनां विध्वंसहेतुं जानन्ति ॥ उक्तोदाहरणे ग्रहीतृणामनेकतयैकस्य राजराजेश्वरवस्तुनोऽनेकधात्वम् ॥

यथा वा—

श्रीमंद्राष्ट्रवराधिपारिरमणीरक्षाऽतिघोरे वने
संजाता हि तथैव दन्तिनिवहास्तां ज्ञातवन्तः शचीम् ॥
शार्दूलाश्च शिवप्रियां बुबुधिरे तां रोहिणीरूपिणी-
मेणास्तामविदुस्तथैव कपयोऽजानन्त तां जानकीम् ।१।

न ह्यत्र भ्रान्त्या तथा ज्ञानम्। किं तु यथारुचि ज्ञानमिति भ्रान्तिचमत्कारस्य गौणत्वापादनेनोल्लेखचमत्कारस्य प्रधानत्वम् ॥

यथा वा—

मूर्ध्न्यद्रेर्धातुरागस्तरुषु किसलयं विद्रुमौघः समुद्रे
दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितः सान्द्रसिन्दूररागः
सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः
शोणिम्नाऽसौ खरांशोरुषसि दिशतु वः शर्म रश्मिप्रतानः ॥ १ ॥

अत्र गिरिशिखराद्यनेकाश्रयवशादेकस्यैव रविरश्मिरूपवस्तुनोऽनेकधात्वम् ॥

यथा वा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ॥
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे

पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥१॥

अत्र व्रीडाद्यनेकविषयवशादेकस्यैव पार्वतीदृष्टिरूपवस्तुनोऽनेकधात्वम् ॥ बुद्धाववभासमानो विषयः ॥

उल्लेखनामावयवार्थमुदाहरणाभिप्रायं चाजानाना अर्वाचीना उल्लेखशब्दार्थं कथनमवोचिषुः। उल्लेखशब्दस्य कथनार्थकत्वं च "उल्लेखः, उच्चारणे । कथने" इति चिन्तामणिकोषे। उदाहरणानुसारेण चोल्लेखद्वयं मत्वा चन्द्रालोके इमे लक्षणे अभिहिते—

"बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ॥
एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ॥" इति ॥

क्रमेण चेमे उदाहरणे—

स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ॥

इदं परंपरागतोदाहरणम् ॥ अनेनात्र स्वलक्षणानुसारेणानेकैरेकस्य कृष्णस्य बहुधा कथनं विज्ञातम् ॥ उल्लेखशब्दार्थो दर्शनं ज्ञानं वा न कस्मिंश्चिदपि कोषे उपलभ्यते ॥

गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥

अत्रैक एव वर्णनीयो विषयभेदादेकेन कविना बहुधोक्तः। मम तु मतं, अनेकेषामेकस्य वैकस्य विषये बहुधाकथनं नालंकारत्वयोग्यम्। तस्मिन्नंशेऽत्यन्तं लौकिकत्वात् ॥ "गुरुर्वचसि" इत्यस्मिन्नुदाहरणेऽभेदमाला समुच्चयो वालंकारः ॥

उक्तलक्षणयोरत्यन्तं लौकिकतयाऽस्यालंकारस्य स्वरूपाबोधकतया चासंभवदोषग्रस्तत्वम् ॥ इत्युल्लेखप्रकरणम् ॥ २३ ॥

# काव्यार्थापत्तिः ॥

आपत्तिस्त्वापतनम् । अर्थस्यापतनमर्थापत्तिः । काव्यरूपा अर्थापत्तिः काव्यार्थापत्तिः ॥ अस्यालंकारस्य मीमांसादिशास्त्रसिद्धार्थापत्तिप्रमाणाद्व्यावृत्त्यर्थं काव्येति विशेषणम् । तेन कविमतस्येयमर्थापत्तिरिति सिद्धम् । अर्थापत्तिप्रमाणेऽर्थस्यापतनं त्वनुपपत्तिज्ञानसाध्यम् । एकमर्थं विनाऽपरस्यार्थस्यानुपपत्तौ सत्यां तस्यार्थस्यापतनेऽर्थापत्तिशब्दस्य रूढिः॥ अर्थापत्तिप्रमाणस्येदमुदाहरणम् । " पीनो देवदत्तो दिवा न भुङ्क्ते ॥ " अत्र दिवाऽभुञ्जतो देवदत्तस्य रात्रिभोजनं विना पीनत्वानुपपत्तिरित्यनुपपत्तिज्ञानेन रात्रिभोजनमापतति । उक्तोदाहरणे तु रमणीयत्वाभावान्नालंकारत्वम् । यत्र काव्यरूपार्थस्येति रमणीयार्थस्यापतनं तत्रालंकारत्वम् ॥

अर्थस्यापतनं यत्र काव्यरूपतया भवेत् ॥
काव्यार्थापत्त्यलंकारस्तत्र ज्ञेयो नराधिप! ॥ १ ॥

यथा—

सुयशो भोजराजस्य त्वदीययशसा जितम् ॥
का कथाऽन्यमहीपालयशसां मरुवल्लभ! ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहयशसो भोजभूपयशो-

विनितामिति कथनेऽन्यभूपालयशोजयस्याऽऽपतनात्काव्यार्थापत्त्यलंकारः ॥ अत्राऽऽपतितोऽर्थः कविना वचनेनोक्तः ॥

यथा वा—

पञ्चाननपदोद्भूतरजःस्पृष्टतृणोच्चयः ॥
ऊर्ध्वशुष्को न चाखादि हरिणैर्विजने वने ॥ १ ॥

गच्छतः शार्दूलस्य शरीरगन्धसंपृक्तरजःस्पृष्टतृणानि मृगा भक्षयितुमशक्ता इत्यस्मिन्नर्थे शार्दूलहतमृगान्को वा भक्षयितुं समर्थ इत्यस्यार्थस्यापतनम् ॥ अत्राऽऽपतितोऽर्थः प्रतीयमानः । वचनेनोक्तोऽर्थोऽलंकारो भवतीति तस्यार्थचित्रत्वेन भणनम् ॥ प्रतिभावतां व्यञ्जनाव्यापारेण प्रतीयमान एव प्रधानभूतो व्यङ्ग्योऽर्थ इतीह बलात्कारेणाऽऽपतितस्यार्थस्याप्रधानतया वाच्यप्रायत्वम् ॥ उक्तमतानुसारेण व्यङ्ग्यव्यङ्ग्यालंकारयोरिदमेव वैलक्षण्यम् ॥ अत्र कस्यचिन्निर्बलस्यापि महाबलिना सह कथंचिदीषत्संबन्धेऽपि को वा तं पीडयितुं समर्थ इति प्रसङ्गे इयं तादृशतृणशार्दूलाप्रस्तुतकथा कथितेति सहृदयश्रोतुः प्रतीतिश्चेदत्राप्रस्तुतप्रशंसायाः संकीर्णत्वम् ॥

चन्द्रालोके इदं लक्षणम्—

"कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते ॥" इति ॥

कैमुत्यमित्यत्र किमुतेत्यव्ययात् ष्यञ् । शब्दकल्पद्रुमकोषे कैमुत्यं न्यायविशेषं लिखित्वेदमुदाहृतम् ॥

उक्तलक्षणयोरत्यन्तं लौकिकतयाऽस्यालंकारस्य स्वरूपाबोधकतया चासंभवदोषग्रस्तत्वम् ॥ इत्युल्लेखप्रकरणम् ॥ २३ ॥

# काव्यार्थापत्तिः ॥

आपत्तिरवापतनम् । अर्थस्यापतनमर्थापत्तिः । काव्यरूपा अर्थापत्तिः काव्यार्थापत्तिः ॥ अस्यालंकारस्य मीमांसादिशास्त्रसिद्धार्थापत्तिप्रमाणाद्व्यावृत्त्यर्थं काव्येति विशेषणम् । तेन कविमतस्येयमर्थापत्तिरिति सिद्धम् । अर्थापत्तिप्रमाणेऽर्थस्यापतनं त्वनुपपत्तिज्ञानसाध्यम् । एकमर्थं विनाऽपरस्यार्थस्यानुपपत्तौ सत्यां तस्यार्थस्यापतनेऽर्थापत्तिशब्दस्य रूढिः॥ अर्थापत्तिप्रमाणस्येदमुदाहरणम् । " पीनो देवदत्तो दिवा न भुङ्क्ते ॥ " अत्र दिवाऽभुञ्जतो देवदत्तस्य रात्रिभोजनं विना पीनत्वानुपपत्तिरित्यनुपपत्तिज्ञानेन रात्रिभोजनमापतति । उक्तोदाहरणे तु रमणीयत्वाभावान्नालंकारत्वम् । यत्र काव्यरूपार्थस्येति रमणीयार्थस्यापतनं तत्रालंकारत्वम् ॥

अर्थस्यापतनं यत्र काव्यरूपतया भवेत् ॥
काव्यार्थापत्यलंकारस्तत्र ज्ञेयो नराधिप! ॥ १ ॥

यथा—

सुयशो भोजराजस्य त्वदीययशसा जितम् ॥
का कथाऽन्यमहीपालयशसां मरुवल्लभ! ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहयशसो भोजभूपयशो-

पायाद्वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको
यस्याकस्मिकवर्द्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ॥
रत्नत्वं शिरसि श्रुतौ परिलसत्ताटङ्कतां चोरसि
प्राप्तं कौस्तुभतां च नाभिविवरेऽब्जत्वं त्सरुत्वं(*)कटौ

अत्र वामनावतारस्य शरीरवृद्धिसमयेऽवयवानां सूर्येण संबन्धे एकस्यैव सूर्यस्याश्रयभेदाच्छिरोरत्नादिरूपेणानेकधात्वम् । तत्रोल्लेखवर्णने नखशिखक्रमस्य प्राधान्येन चमत्कारकारितया क्रमालंकारः ॥ अत्रोल्लेखे कवेः प्रयत्नः । तत्र क्रमलाभोऽधिक इत्यधिकालंकारः । अत्र क्रमोल्लेखाधिकानां संकीर्णत्वम् ॥

यथा वा—

क्रीडन्तु तावत्करिणोऽतिमत्ता
यावन्न शार्दूलरवश्रुतिः स्यात् ॥
वायुर्वहेदुष्णतरश्च तावत्
खं छादयेयुर्जलदा न यावत् ॥ १ ॥
तावत्स्थिराः स्युर्हिमपर्वताग्राः
सूर्यः स्पृशेत्तिग्मकरैर्न यावत् ॥
तावच्च गर्वं यवना विदध्यु-
र्नाभ्यागमद्यावदिहाङ्ग्लसैन्यम् ॥२॥

चतुर्दशाधिकैकोनविंशतिशततमे वत्सरे कतिपयाङ्ग्ल

(*) त्सरुः खड्गमुष्टिः ॥

"तत्रान्ये बहवो मत्ताः ॥ नूनं सर्वे क्षयं यान्ति किमुतैकं नदीरजः ॥" इति ॥

अत्रायं भावः। वर्षर्तौ प्रथमागतसलिला सरिद्रजस्वलेत्युच्यते। तत्सलिलं च पञ्चसप्तदिनान्यपावनं मन्यते। श्रावण्यामुपाकर्मनिमित्तं स्नातुं गमने सर्वमलनिवृत्तिश्चेत्तदा नदीरजसः का कथेति ॥ कुवलयानन्दकारेणार्थापत्तिविषये दण्डापूपिकान्याय उक्तः। तस्येदं तात्पर्यम्। मूषिकया दण्डे भक्षिते दण्डसंबद्धापूपस्य तु का कथेति। अत्र कैमुत्यन्यायस्य संगतिस्तु, राजराजेश्वरयशसा भोजयशसो जये कृतेऽन्यनृपयशोविजयस्य तु का कथेति ॥ मम तु मतं "पञ्चाननपदोद्भूत—" इत्युदाहरणे शार्दूलभक्ष्यस्य तु का कथेत्येवंरूपस्यार्थस्याऽऽपतनाभावादुक्तलक्षणमव्याप्तमिति ॥ किं चात्राऽऽपतितार्थस्य वर्णनीयार्थसिद्धौ विवक्षैव नास्तीत्युक्तलक्षणे तस्य व्यर्थनिवेशनदोषोऽपि ॥ इति काव्यार्थापत्तिप्रकरणम् ॥ २४ ॥

## क्रमः ॥

---

पदार्थानां पूर्वपश्चाद्भावादिरूपः क्रमोऽनेकविधः। तस्य चमत्कारकारित्वे क्रमालंकारः ॥

क्रमस्य तु चमत्कारकारित्वे यस्य कस्यचित् ॥
अलंकारः क्रमो ज्ञेयो यशवन्तनरेश्वर! ॥ १ ॥

यथा—

तस्माच्चनांमदेरिति मीरांबाईस्तु सर्वेभ्यः ॥

हरिभक्तपूत्तरोत्तरमुत्तमोत्तमा भक्ताः संजातास्तेषु राष्ट्रवरकुमारी मीरांबाईस्तु सर्वाधिका समभवदिति कस्यचिद्धरिभक्तस्येयमुक्तिः ॥ अस्मिन्वर्णने उक्तमीरांनाम्न्या राजकुमारीत्वस्योचिततया धन्नाख्यादारभ्य मीरांपर्यन्तं जातीनां चोचिततया भक्तिरूपचीरस्य क्रमो व्यज्यते । स चालंकारः । अत्र भक्तिविषये आधिक्यपरंपराकथनरूपाधिकता तु लौकिकत्वान्नालंकारः । किं तु शृङ्खलाऽलंकारः । इह क्रमस्तु धन्नाख्यो जाट(कर्षक)जातीय इति तस्य भक्तिरूपकार्पासवप्तृत्वम् । दादूः पिनारा(धूनक)जातीय इति तस्योक्तकार्पासशोधयितृत्वम् । करमा जाटजातीयेति तस्याः सूत्रविधायितृत्वम् । नांमदे रङ्गकार इति तस्य रञ्जयितृत्वम् । कबीरस्तन्तुवाय इति तस्य पटोत्पादकत्वम् । मीरांनाम्न्याश्च राजकुमारीत्वेन तद्धारकत्वम् ॥ अयं क्रम उक्तभक्तिवर्णनशोभाकरतयाऽलंकारः ॥

चन्द्रालोकेऽयं क्रमालंकारो यथासंख्यनाम्ना कथितः । तत्रेदं लक्षणोदाहरणम्—

"यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥" इति ॥

यथा—

शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ॥

अत्र क्रमेणोक्तानां शत्रुप्रभृतीनां जयादिक्रियाभिः सह

सैन्यैस्तद्विरुद्धतयोपद्रवं विधाय दिल्लीपत्तने मुगलजातीयो बहादुरशाहाख्ययवनो राजसिंहासनमधिरोपितः। तस्मिन्समयेऽस्माभिरीदृशं वर्णनं विहितम्। अत्र चरमार्थस्य निश्चयस्त्रिभिरर्थैः पृथक्पृथग्दर्शितः। उक्तदृष्टान्तमालायां युद्धक्रमस्य समावेशात्क्रमालंकारः॥ युद्धक्रमश्च, पूर्वं तावत्संदेशप्रेषणम् "अवहिता भवत, वयममुकवासरे समेष्यामः" इत्यादि॥ ततश्च सेनासंक्रमणम्। ततश्चास्त्रशस्त्रप्रहारः॥ अत्र "यावन्न शार्दूलरवश्रुतिः स्यात्" इति संदेशस्थानापन्नम्। "खं छादयेयुर्जलदा न यावत्" इति सेनासंक्रमणस्थानापन्नम्। "सूर्यः स्पृशेत्तिग्मकरैर्न यावत्" इत्यस्त्रशस्त्रप्रहारस्थानापन्नम्॥ उक्तोदाहरणेऽपि क्रमाधिकयोः संकीर्णत्वम्। इह क्रमाधिकदृष्टान्तानां संसृष्टिः। प्रायः प्रतीयमानक्रमो रमणीयतयाऽलंकारो भवति। इह व्यङ्ग्यरूपोंऽशः पृथक्। क्रमरूपोंऽशश्च पृथक्। अत्र व्यङ्ग्यमूलोऽलंकारः॥

संदेश आयान्मरुभूपतेः पुरा
ततश्चमूर्मार्गणवर्षणं ततः॥
संधौ रुचिस्ते न तदाऽभवत्प्रिय!
वनेऽधुना काङ्क्षसि का विवेकिता॥१॥

अत्र युद्धक्रमस्य वाच्यत्वान्नालंकारत्वम्॥

यथा वा—

धन्नाभक्तादादूरधिकः करमा ततः कबीरश्च॥

भवति हि सङ्गाद्दोषः सखि! कथनं नो मृषा कथंचि-
दिदम् ॥
कुटिलभ्रुवोस्तु सङ्गात्कुटिलगते ते विलोचने दृष्टे।१।

अत्राऽऽकृत्यास्तद्गुणत्वम्॥पूर्वोदाहरणयोः सद्गुणस्य तद्गुणत्वम्। इह स्ववगुणस्य तद्गुणता।

चन्द्रालोके इदं लक्षणोदाहरणम्–

तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः ॥

यथा–
पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥

अर्वाञ्चोऽत्र स्वगुणत्यागनियममकार्षुः। तच्च प्रमादमूलम्। अत्र तस्येपदप्युपयोगाभावात्। सर्वत्र व्याप्त्यभावाच्च। न ह्यत्र नायिकानेत्रयोः सरलताया इव नासामौक्तिकस्य स्वश्वेतगुणस्य त्यागः। किं तु माणिक्यारुणगुणस्य ग्रहणम्। तेन तस्य स्वश्वेतगुणस्याच्छादनम्। अधरस्पृष्टफले श्वेतगुणस्य तथात्वात्। उक्तलक्षणमव्याप्तिदोषग्रस्तम्॥ इति तद्गुणप्रकरणम् ॥ २६ ॥

## तुल्ययोगिता ॥

---

तुल्यशब्दार्थ एकधर्मीति । योगशब्दार्थः संयोग इति ।

क्रमेणान्वयः ॥ मम मतेऽप्यत्र क्रमालंकारः । तथाप्युक्तोदाहरणानुसारेण क्रमस्य यथासंख्यमिति पर्यायनामकथनादर्वाचामुक्तनाम्नो लक्षणस्य चान्यत्राव्याप्तिः ॥ पूर्वोदाहरणेषूद्देश्यविधेयगणनाक्रमस्याभावात् ॥ इदं लक्षणं साक्षात्स्वरूपाबोधकमव्याप्तिदोषग्रस्तं च ॥ इति क्रमप्रकरणम् ॥२५॥

# तद्गुणः ॥

तस्य गुणोऽत्रास्तीति तद्गुणः । परगुणस्य संबन्ध इति भावः । परगुणसंबन्धश्च कार्यकारणभावाद्विलक्षणः । अस्य विवेचनमतद्गुणालंकारे सविस्तरमकारि ॥

"राजन्! परगुणस्येह संबन्धस्तद्गुणः स्मृतः ॥
वर्णशीलादिभिश्चास्य विद्धयसंख्या उदाहृतीः॥१।

यथा—

गजा ऐरावता जाताः सर्पाः शेषत्वमागताः ।
यशवन्तयशःसङ्गाद्विश्वमुच्चपदास्पदम् ॥ १ ॥

अत्र राजराजेश्वरयशःसंबन्धिश्वेतवर्णरूपगुणस्य सर्वेषु गजेषु सर्पेषु च संबन्धाद्वर्णरूपगुणस्य तद्गुणत्वम् । किं च राजराजेश्वरस्य यश इतरसमस्तयशोऽपेक्षयोच्चपदाधिरूढमिति तत्संगत्या सर्वेऽपि गजा ऐरावतरूपोच्चपदभाजः, सर्वे च सर्पाः शेषरूपोच्चपदभाजो बभूवुरितीह पदरूपगुणस्य तद्गुणत्वम् ॥

यथा वा—

भवति हि सङ्गाद्दोषः सखि! कथनं नो मृषा कथंचि-
दिदम् ॥
कुटिलभ्रुवोस्तु सङ्गात्कुटिलगते ते विलोचने दृष्टे।१।

अत्राऽऽकृत्यास्तद्गुणत्वम्॥पूर्वोदाहरणयोः सद्गुणस्य तद्गुणत्वम्। इह स्ववगुणस्य तद्गुणता।

चन्द्रालोके इदं लक्षणोदाहरणम्—

तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः॥

यथा—
पद्मरागायते नासामौक्तिकं तेऽधरत्विषा॥

अर्वाञ्चोऽत्र स्वगुणत्यागनियममकार्षुः। तत्तु प्रमादमूलम्। अत्र तस्यैतदप्युपयोगाभावात्। सर्वत्र व्याप्त्यभावाच्च। न ह्यत्र नायिकानेत्रयोः सरलताया इव नासामौक्तिकस्य स्वश्वेतगुणस्य त्यागः। किं तु माणिक्यारुणगुणस्य ग्रहणम्। तेन तस्य स्वश्वेतगुणस्याच्छादनम्। अधरात्पृथक्त्वे श्वेतगुणस्य तथात्वात्। उक्तलक्षणमव्याप्तिदोषग्रस्तम्॥ इति तद्गुणप्रकरणम्॥ २६॥

# तुल्ययोगिता॥

---

तुल्यशब्दार्थ एकधर्मीति। योगशब्दार्थः संयोग इति।

योगो योगितेत्यनर्थान्तरम् । तुल्ययोगितेतिसमुदितशब्दार्थस्तु तुल्ययोस्तुल्यानां वा योगिता तुल्ययोगितेति । एकधर्मिसंयोग इति फलितार्थः । सदैकधर्मिसंयोगश्च लोके प्रायो दृश्यते । अत्र कदाचिदेकधर्मिनाप्रातिमत्संयोगे रूढिः ॥

राजन्! कदाचिदेकधर्मित्वप्राप्तिमत्कसंयोगः ॥
स्यात्तुल्ययोगिताख्योऽलंकारो धुर्यमतमान्यः ।१।

यथा—

विद्युच्छटाभूषणभूषिताङ्गै(*)-
रनेकवर्णैरतिशोभमानैः ॥
जन्यैरनेकैर्जलदैश्च सज्जौ
समागतानिन्द्रमरुस्थलेन्द्रौ ॥ १ ॥

अत्र मरुराजसुरराजयोस्तादृशमेकधर्मित्वं कादाचित्कम्। राजराजेश्वरस्तु विवाहप्रसङ्गेन विविधवर्णैर्वसनैरलंकारैश्च विराजमानैर्जन्यैः सज्जः सन्समागतः ॥ सुरराजश्च वर्षर्तुप्रसङ्गेन विविधवर्णैर्विद्युद्भिश्च विराजमानैर्वारिदैः सज्जः सन्समागतः । अयं संयोगोऽपि कादाचित्कः ॥

यथा वा—

पर्यङ्के कुसुमचयो गगने ताराश्च निद्रया दृङ्मे ।

(*) विद्युच्छटाभिर्भूषणैश्च भूषितान्यङ्गानि येषाम् । समभाग्जलदाना विद्युच्छटाभिर्जन्याना च भूषणैर्भूषितत्व ज्ञेयम् ।

म्लानत्वं हि भजन्तेऽधुनाऽपि सुखदो हरिस्तु नायातः॥

प्रभातसमये ताराणां म्लानता नियमेन दृष्टा । कुसुमनयनयोस्तु प्रत्युत प्रभातसमये विकासः प्रसिद्धः । तत्र कुसुमानां वृक्षवल्लीभ्यश्चित्वा पर्यङ्के स्थापनेन, नयनयोस्तूत्कण्ठाजन्यजागरणेन च प्रभातसमये ताराभिः सह म्लानतारूपस्तुल्ययोगः कादाचित्क इति तुल्ययोगिताऽलंकारः ॥

चन्द्रालोककारस्तुल्ययोगितात्रयं मन्वान इमानि लक्षणोदाहरणान्याह—

"वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता ॥"

क्रमेण यथा—

संकुचन्ति सरोजानि स्वैरिणीवदनानि च ॥ १
त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते ॥
मालतीशशभृल्लेखाकदलीनां कठोरता ॥ २ ॥

प्रथमोदाहरणे संध्यासमये वर्णनीयसरोजस्वैरिणीवदनयोः संकोचप्राप्तिरूपं धर्मैक्यम् । द्वितीयोदाहरणे चावर्णनीयाना मालत्यादीनां सुन्दरीशरीरापेक्षया कठोरतारूपं धर्मैक्यम् । अत्र धर्मैक्यकथनेन साधर्म्ये विवक्षा चेदुपमालंकार एव । वर्ण्यविषये वर्ण्यस्यावर्ण्येन [illegible]ुपमा दृश्यते ॥

क्रमेण यथा—

अचिरोपार्जितां भूमिं भुञ्जीत निपुणो नृपः ॥
दृढं विश्वासमुत्पाद्य नवोढां रमणीमिव ॥ १ ॥

नवोढां नवविवाहिताम् । अत्र राजप्रकरणे द्वयमपि वर्णनीयम् ॥

सुधास्रोतःसुमधुरा श्रूयते तव वाग्यदा ।
तदानीं कलकण्ठोऽपि कटुर्वीणेव विस्वरा ॥ २ ॥

अत्र नायिका वर्णनीया । वीणा कोकिलश्चोभयमप्यवर्णनीयम् ॥ यदि च धर्मैक्यकथनेनैकधर्मिणां समुच्चये विवक्षा तदा समुच्चयालंकारः । न तु विलक्षणचमत्कारः ॥

परंपरागतं क्वचित्तुल्ययोगिताया इदमुदाहरणम्—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा ॥
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिवशिवशिवेति प्रलपतः ॥ १ ॥

अत्र तुल्ययोगितासंगतिस्तु सर्पादावहितकारिवस्तुनि, हारादौ हितकारिवस्तुनि चानादररूपतुल्यवृत्तियोगो भर्तृहरेः संन्यासधारणात्कदाचित्संजात इति । ईदृशोदाहरणेन अगिरवा जयदेवो द्वितीयतुल्ययोगिताया इदं लक्षणमाह—

"हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता ॥"

यथा—

प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया ॥

परा उत्कृष्टा भूतिर्विभूतिः पराभूतिः । पराजयश्च । वर्णनीयनृपे उक्तप्रकृतिः सदैवास्तीति मित्रशात्रवयोरेकधर्मित्वं न कादाचित्कम् ॥ ततोऽत्र न तुल्ययोगितालंकारस्य चमत्कारः । किं त्वयथायोग्यतारूपो विषमालंकारः ॥ अधके सति कार्यजनिरूपो विचित्रालंकारो वा । तुल्ययोगितायाः क्वचित्परंपरागतमीदृशमुदाहरणम्—

लोकपालो यमः पाशी श्रीदः शक्रो भवानपि ॥

अत्र तुल्ययोगितासंगतिस्तु वर्णनीयनृपस्यानिर्वचनीयलोकपालकार्यकरणेनेन्द्रादिलोकपालैः सह लोकपालपदधारणस्य तुल्ययोगो नृपेषु कदाचिज्जात इति ॥ ईदृशोदाहरणेन भ्रमित्वा जयदेव इदं लक्षणमाह—

" गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता ॥ "

उक्तलक्षणमुपमापरायणम् । उक्तलक्षणस्योक्तोदाहरणे संगतीकरणे तु व्यङ्ग्योपमालंकारः ॥ धुरंधराभिप्रायमज्ञात्वाऽर्वाञ्चस्तुल्ययोगितायाः भिन्नभिन्नलक्षणत्रयं व्यदधुः ॥ तच्चोक्तालंकारस्य स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति तुल्ययोगिताप्रकरणम् ॥ २७ ॥

## दीपकम् ॥

दीपयतीति दीपकम् । लोकदीपन्यायेन धुरंधरो दीपकालंकारमङ्गीचकार ॥

दृश्यते दीपकन्यायः स्थले यस्मिन्धरापते! ॥
दीपकालंकृतिस्तत्र धुरंधरमते स्मृता ॥ १ ॥

दीपकस्य चतस्रो गतयो भवन्ति। एकस्य वाञ्छितवस्तुनो दर्शनार्थं कृतो दीप इतरदवाञ्छितवस्त्वपि तथैव दर्शयेदितिदीपन्यायेनैकस्य प्रस्तुतार्थस्य कृते कथितो धर्मोऽपरमप्रस्तुतार्थमपि तथैव प्रकाशयेत्तत्र दीपकालंकारः ॥

यथा—

अमन्दशोभामाधत्ते कीर्त्या मरुमहेश्वरः ।
सिन्धुः सुरतरङ्गिण्या ज्योत्स्नया च निशाकरः ॥१॥

अत्र कीर्त्याऽमन्दशोभाधारी राजराजेश्वरयशवन्तसिंहः प्रकृतः। तदर्थं "सिन्धुः सुरतरङ्गिण्या" इत्यादेरप्रकृतस्यापि वर्णनम्। तत्र "अमन्दशोभामाधत्ते" इत्ययं धर्मोऽपि प्रधानतया राजराजेश्वरार्थमेव कथितः। स च प्रसङ्गप्राप्तमप्रकृतार्थमपि तथैव प्रकाशयति। अप्रकृतेऽपि तथैवान्वेतीत्यर्थः ॥ १ ॥

प्रत्येकं वस्तु स्फुटतया दर्शयितुं प्रत्येकवस्तुनः समीपे दीपं नीत्वा दर्शनमपि लोकरीतिः। उक्तदीपन्यायेन प्रतिपदार्थमेकस्यैव धर्मस्य वारं वारं कथने दीपकालंकारः ॥

यथा—

हयस्ते कुण्डलीकुर्वन्ककुभां कुण्डलीयति ॥
मेखलीयति मेदिन्याः सृष्टेर्वै कङ्कणीयति ॥ १ ॥

अत्रैकमेव णिच्प्रत्ययबोध्यमाचरणधर्मं प्रत्येकपदार्थानां समीपे कृत्वा प्रकाशनम् ॥ २ ॥

प्राचीनकवीनामेतादृग्रचना अनन्ताः ॥

मृजन्ति कण्ठान् पिकशावका वने
मृजन्ति तन्त्रीर्भवनेषु गायकाः ॥
मृजन्ति शृङ्गारमथो मृगेक्षणाः
कामोऽपि संमार्ष्टि शरान्दुरासदान् ॥१॥

वसन्तागमवर्णनमिदम् ॥

यथा वा—

दोलन्त्या राधिकाया वै हारो दोलति वक्षसि ॥
चित्ते दोलति पञ्चेषुः कृष्णो दोलति नेत्रयोः ॥१॥

उक्तकाव्येषु क्रियाणां पुनरावृत्तिर्विदुषामुद्वेगाजनकतया न पुनरुक्तदूषणम्। किंतूक्तन्यायेनानन्दजनकतया दीपकाख्य-भूषणम्।

भवनमत्यन्तं प्रकाशयितुमनेकदीपज्वालनमपि लोकरीतिः। उक्तदीपन्यायेनैक एव धर्मोऽनेकवारं कथितश्चेत्तत्रापि दीपकालंकारः ॥

यथा—

कृच्छ्रंकृच्छ्रं समुत्थाय पर्यङ्के दंपती प्रगे।

परस्परं समालिङ्ग्य निद्रालू पततो मुहुः ॥ १ ॥

अत्र प्रभातसमये दंपत्योरुत्थाने रात्रिजागरणजन्यमालस्यमत्यन्तं प्रकाशयितुं कृच्छ्रपदबोध्यकठिनताधर्मस्यानेकवारं कथनम् ॥

यथा वा--

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ॥
नागरिकः किं मिलितो नहि नहि सखि! हैमनः पवनः॥

अत्र कान्तवृत्तान्तनिषेधस्यात्यन्तप्रकाशनाय नहीतिपदबोध्यनिषेधधर्मस्यानेकवारं कथनम् ॥ उक्तद्वितीयतृतीयप्रकारावस्माभिर्लक्षितौ ॥ ३ ॥

देहल्यां धृतो दीपो भवनेऽङ्गने चोभयत्रापि प्रकाशं विदधाति । तथा संधौ धृतो धर्म इतस्तत उभयत्रापि प्रकाशमातनोतीति देहलीदीपन्यायेन दीपकालंकारः ॥

यथा–

धृत्वा नरेन्द्रपदवीं यशवन्तसिंहः
संमान्य काव्यनिपुणान्धनदानकार्षीत्॥
हीनान्भयेन मरुदेशनिवासिलोकान्
भीत्या युतानरिगणान् रणरङ्गधीरः ॥ १॥

अत्र "अकार्षीत्" इत्येक एव क्रियारूपो धर्मः पूर्वोत्तरार्धयोः संधौ धृतः पूर्वोत्तरार्धावुभावपि प्रकाशयति। प्रकाशनं

दीपकस्य मुख्यो धर्मः । स च सामान्यतया चतुर्ष्वप्युक्तप्रकारेषु वर्तते ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः ॥" इति॥

यथा—

मदेन भाति कलभः प्रतापेन महीपतिः ॥

अत्र वर्णनीयकलभस्यावर्णनीयनृपस्य च भासनरूपं धर्मैक्यम् । उक्तलक्षणमेतन्मतोक्तोपमापरायणमिति दीपकस्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति दीपकप्रकरणम् ॥ २८ ॥

## दृष्टान्तः ॥

स्त्रीपुरुषौ दर्पणे प्रतिबिम्बं समीक्ष्य स्वशृङ्गारस्य यथावत्तानिश्चयं कुरुत इति लोकव्यवहारानुसारेण धुरंधरा दृष्टान्तालंकारं स्वीचकार ॥ कस्यचिद्वाक्यार्थस्य निश्चयो यस्मिन् वाक्यार्थे दृष्टः स वाक्यार्थो दृष्टान्त इत्युच्यते ॥ स च दर्पणगतप्रतिबिम्बस्थानापन्नः । दृष्टान्तद्वारा यस्य वाक्यार्थस्य निश्चयो दर्शितोऽसौ दार्ष्टान्तिक इत्युच्यते । स च बिम्बस्थानापन्नः । अत्र दृष्टान्तो दार्ष्टान्तिकस्य शोभाकर इति दृष्टान्तस्यालंकारत्वम् ॥ दृष्टान्त इत्यत्रान्तशब्दार्थो निश्चयः । "अन्तः, निर्णये । निर्णयः, निश्चये", इति चिन्तामणिः ॥ दृष्टान्त इति समुदितशब्दार्थस्तु दृष्टोऽन्तो निश्चयो यत्र स

दृष्टान्त इति । अत्र प्रतिविम्बे रूढिः । तथा च यत्र प्रतिबिम्बे निश्चयो दृष्टोऽसौ दृष्टान्तालंकार इतिभावः ॥

नृप! बिम्बप्रतिबिम्बन्यायाद्यस्मिन्विनिश्चयो दृष्टः ॥
सोऽर्थो दृष्टान्ताख्यालंकारः कथ्यते धुर्यैः ॥ १ ॥

स्वच्छवस्तुनि यस्य वस्तुनश्छाया साक्षाद्दृश्यते तद्वस्तु बिम्बमिति, दर्पणे दृश्यमाना छाया च प्रतिबिम्बमित्युच्यते ॥

यथा–

भूपानां कलिकालसंभववतां संश्रूयतां या स्थितिः
स्थाने स्वे स्व उपासते हि नितरां दर्पे मुदा संयुताः ॥
किं तु क्षोणिमिमां बुधा मरुधराधीशेन राजन्वती–
माहुस्तार(*)गणान्वितापि रजनी ज्योतिष्मती त्विन्दुना ॥ १ ॥

अत्रान्यनृपाणां विद्यमानत्वेऽपि मरुधराधीशयशवन्तसिंहेनैव भूमी राजन्वती कथमितिबिम्बरूपवाक्यार्थस्य निश्चयः प्रकाशयति गुरुलघुतारागणे विद्यमानेऽपि रात्रिश्चन्द्रमसैव चन्द्रिकावतीतिप्रतिबिम्बरूपवाक्यार्थे दर्शितः ॥

यथा वा–

पलायमानैः किल मेदपाट–
सैन्यैः प्रयाता न नवाश्ववाराः ॥
प्रयात्यवाच्यां तरसा भचक्रे
प्राचीं यथा याति गणो ग्रहाणाम् ॥ १ ॥

(*) "नक्षत्रे नेत्रमध्ये च तारा स्यात्पुं इत्यपि" इति व्याडिः ॥

अत्र मेदपाटदेशीयाखिलसैन्ये पलायिते नवयोद्धरस्तेन सह कथं न पलायिता इति बिम्बरूपवाक्यार्थस्य निश्चयः प्रतिबिम्बरूपोत्तरार्धवाक्यार्थे दर्शितः ॥

चन्द्रालोके इदं लक्षणम्—

"चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः ॥" इति ॥

इदं लक्षणमुक्तालंकारस्य साक्षात्स्वरूपाबोधकम् ॥ एवंविधलक्षणनिर्मितिस्तु धुरंधरस्य मर्मापरिज्ञानात् ॥ तदेवोक्तमनर्घराघवनाटककर्तुर्महाकविमुरारेः स्तुतौ केनचित्कविना—

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥१॥

अत्रापि दृष्टान्तालंकारः ॥ ननु धुरंधरेण दीपन्यायवतोऽलंकारस्य दीपकमिति, लेखन्यायवतोऽलंकारस्य चोल्लेख इति नामाभिहितम् । तथाऽस्यालंकारस्य दर्पणमिति नाम कुतो नोक्तमिति चेच्छृणु । दर्पणस्य मुख्यधर्मो हि प्रतिबिम्बदर्शनमात्रम् । तादृशनिश्चयस्तु क्वचिद्विवक्षावशाद्भवतीति नेह बिम्बप्रतिबिम्बभावमात्र एव चमत्कारस्य पर्यवसानम् । किंतु प्रतिबिम्बविषये निश्चयदर्शने पर्यवसानमिति धुरंधरोऽमुं दृष्टान्तनाम्ना व्याजहार ॥ उपमायां तु समीपे कृत्वा कृतस्य विशेषज्ञानस्य चमत्कारः ॥ इह तु प्रतिबिम्बरूपार्थे शङ्कानिवृत्त्यात्मकनिश्चयस्य चमत्कार इति विलक्षणत्वम् ॥ चन्द्रा-

लोकस्य लक्षणं दृष्टान्तालंकारस्य "यस्मिंस्तु निश्चयो दृष्टः" इत्यस्मिन्नंशेऽव्याप्तम्। केवलं "बिम्बप्रतिबिम्बन्यायात्" इत्यस्मिन्नंशे एव व्याप्नोतीत्यव्याप्तिदोषग्रस्तम्॥ इति दृष्टान्तप्रकरणम्॥ २९॥

# निदर्शना॥

अत्र नीत्युपसर्गार्थो विन्यासः। विन्यासस्तु रचना। "नि विन्यासे। विन्यासः, रचनायाम्" इति चिन्तामणिः। दर्शनशब्दार्थः प्रसिद्धः। स्त्रीत्वे टाप्। बोद्धव्यार्थे रूढिः। निदर्शनेतिसंसमुदितशब्दार्थस्तु "नि रचनया दर्शनं निदर्शना" इति॥ बोद्धव्यार्थस्य स्वयं कृत्वा दर्शनमिति भावः॥ वृत्तान्तादेः सम्यग्हृदयंगमत्वापादनप्रयोजनेन स्वयं कृत्वा दर्शनमपि लोकरीतिः। यथा व्याकरणोपदेष्टा गुरुः "अकुहविसर्जनीयानां कण्ठः" इति शिष्यं प्रत्युपदिश्य तस्य सम्यग्हृदयंगमकरणाय तान्वर्णान्स्वयं कण्ठस्थानेनोच्चार्य दर्शयति। इदमुपदेशस्य कृत्वा दर्शनम्॥ उक्तलोकव्यवहारानुसारं धुरंधरेणायमलंकारोऽङ्गीकृतः॥ स्वयं कृत्वा दर्शनस्य प्रयोजनं तु बोद्धव्यं प्रति कथनीयार्थस्य सम्यग्हृदयंगमत्वापादनम्। स्वोपदेशानुसारं स्वस्याचरणदर्शनादिकं च॥ तदेवोक्तं नीतिशास्त्रे—

"परोपदेशे कुशला दृश्यन्ते बहवो नराः॥
स्वभावमनुवर्तन्तः सहस्रेष्वपि दुर्लभाः॥" इति॥

सिद्धान्तादेः स्वपरयोः स्वयं कृत्वा तु दर्शनम् ॥
निदर्शनाख्योऽलंकारो भवेन्मरुमहेश्वर! ॥ १ ॥

यथा—

श्रीमद्राष्ट्रवराधिपाः प्रददते राज्याभिषेकक्षणे
लक्षं स्वोत्तमचारणाय सुमुदा सिंहासनाधिष्ठिताः ॥
लाभश्चञ्चलवैभवस्य यदिह स्थैर्यं हि नाम्नश्चिर-
मित्युक्तिः स्वकुलस्य तैर्नृपवरैः कृत्वा स्वयं दर्श्यते ॥

योधपुराधीशराष्ट्रवरनृपा राज्याभिषेकसमये सिंहासनमधिरोहन्त एव योग्यचारणाय लक्षदानं कुर्वन्तीति परंपरागता रीतिः। तस्मिन्विषये इदं कविकृतवर्णनम् ॥ अत्र स्वसिद्धान्तस्य कृत्वा दर्शनम् ॥

यथा वा—

चपला पयोमुचा सह चन्द्रमसा याति चन्द्रिका पश्य॥
प्रियसहगमनसुधर्मं स्त्रिया जडे अपि विधाय दर्शयतः॥

अत्रापि स्वसिद्धान्तस्य कृत्वा दर्शनम् ॥

यथा वा—

सर्वेऽप्यत्र हसन्ति को वा हासस्य वीक्षितो विषयः ॥
कृष्णो गले गृहीत्वा चाणूरोऽमारि दर्शयत्येवम् ॥१॥

अत्र स्वकृत्यस्य कृत्वा दर्शनम् ॥ परंपरागते धुरंधरस्येमे उदाहरणे—

"उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ॥
विभावयन्समृद्धीनां फलं सुहृदनुग्रहः ॥ १ ॥

नश्येद्राजविरोधीति चीणं चन्द्रोदये तमः ॥

राजा नृपश्चन्द्रश्च । प्रथमोदाहरणे स्वसिद्धान्तस्य द्वितीयोदाहरणे च स्वानुभूतावस्थायाः कृत्वा दर्शनम् ॥

निदर्शनानामाचयवार्थमुदाहरणाभिप्रायं चाजानाना अर्वाचीना निदर्शनाशब्दार्थं बोधनमज्ञासिषुः । निदर्शनाशब्दार्थो बोधनमपि । " निदर्शनं ज्ञापके " इति चिन्तामणिः ॥ "उदयन्नेव-" इत्युदाहरणे क्रियया सदर्थबोधनमात्रं "नश्येद्राजविरोधी" इत्यत्र क्रिययाऽसदर्थबोधनमात्रं च ज्ञातवन्तः ॥ चन्द्रालोककारोऽत्र तृतीयां निदर्शनां मत्वेदं लक्षणमाह—

" अपरं बोधनं प्राहुः क्रिययाऽसत्सदर्थयोः ॥ "

इति ॥

मम तु मतं, सदसदर्थरूपवैलक्षण्ये तु न किंचिदपि चमत्कारः ॥ नचास्यालंकारस्य स्वारस्यं क्रियया बोधने । उक्तस्वारस्यं तु सूक्ष्मालंकारस्य विषयः । अत्र तु स्वसिद्धान्तादेः कृत्वा दर्शने स्वारस्यम् । उक्तलक्षणं निदर्शनास्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ निदर्शनाशब्दार्थः प्राप्तिरपि । "निदर्शना प्राप्तौ " इति चिन्तामणिः ॥ अर्वाचीनाः

" यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता "

इत्युदाहरणे सदृशवाक्यार्थयोरैक्यप्राप्तिं ज्ञात्वात्र वाक्यार्थवृत्तिनिदर्शनामाहुः । इयं प्रथमा निदर्शनेति कथयता चन्द्रालोककारेणेदं लक्षणमभिहितम्-

"वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना ॥"

यथा–

"त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥

अस्मिन्नुदाहरणे सदृशपदार्थयोरैक्यप्राप्तिं ज्ञात्वात्र पदार्थवृत्तिनिदर्शनामाहुः । चन्द्रालोके इदं लक्षणम्–

"पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्॥" इति ॥

अत्र पूर्वलक्षणात् "सदृशयोरैक्यारोपः" इत्यनुवर्तते । पदार्थवृत्तिमिति कथनात्पदार्थयोरित्यस्य लाभः । तथा च सदृशयोः पदार्थयोरैक्यारोपे पदार्थवृत्तिनिदर्शनामाहुरित्यर्थः॥ प्रकारत्वं सजातीयचमत्कारविशिष्टेष्वेवेष्टम् । जयदेवोऽत्र निदर्शनाशब्दस्य प्राप्ति-बोधनरूपार्थयुगलेन निदर्शनानामकमलंकारद्वयं मेने । तच्च "अपरां बोधनं प्राहुः" इति कथनेन स्पष्टम् ॥ प्रथमनिदर्शनायाश्च पदवाक्यभेदेन प्रकारद्वयममन्यत । मम तु मतं, प्राप्तौ नालंकारत्वयोग्यश्चमत्कारः। "यद्दातुः-"इत्यत्राभेदालंकारः। "त्वन्नेत्रयुगलम्-"इत्यत्र लुप्तोपमालंकारः॥ पदवाक्यभेदस्तूदाहरणान्तरम् । उक्तलक्षणानां वास्तवनिदर्शनायामसंभवादसंभवदोषग्रस्तत्वम् ॥ इति निदर्शनाप्रकरणम् ॥ ३० ॥

## नियमः ॥

अयमलंकारोऽलंकाररत्नाकरे लिखितः । निपूर्वाद्यमधा-

तोर्नियमशब्दो निष्पन्नः। अत्र नियमशब्दार्थो यन्त्रणम्। "नियमः, यन्त्रणे" इति चिन्तामणिः॥ एकस्मिन्नियमे कृतेऽपरे निषेधः सिध्यति। परं त्विह नियमे पर्यवसानात्प्रधानतया नियम एवालंकारः॥

## नियमस्तु महाराज! नियमालंकृतिर्भवेत्॥

यथा--

कलौ त्वमेव यशसां ग्राहकोऽसि क्षमापते!॥

अत्र यशोग्राहितायां राजराजेश्वरे नियमः। अत्र यन्त्रणस्वरूपं त्वन्यत्र निषेधं कृत्वैकत्र स्थापनम्। उक्तोदाहरणेऽन्यत्र निषेध आर्थः। अन्यत्र संबन्धसंभवेऽन्यत्र निषेधं कृत्वैकत्र नियमश्च॥

यथा वा--

भूपतिसरित्सरांसि वहूनि सन्तीह याचते ह्येकम्।
यशवन्तसिंहजलदं नियमनिबद्धो मुरारिदात्यूहः॥

"दात्यूहः कालकण्ठके चातकेऽपि" इति हैमः। अत्र लक्ष्यमाणमुद्रालंकारस्य संकीर्णता। अत्रान्यत्र निषेधो वाच्यः। अन्यत्र संबन्धासंभवेऽन्यत्र निषेधं कृत्वैकत्र नियमश्च॥ इति नियमप्रकरणम्॥ ३१॥

## निरुक्तिः॥

---

लोके हि प्रियवादिनो जनाः प्रभोर्वाक्यं प्रभोरिच्छानुसारं

योजयन्ति । अस्मिन्विषये इयं वार्ता प्रख्याता । वृन्ताकशाकस्य स्वादुतया भोजनसमये केनचित्प्रभुणा "वृन्ताकं शाकनायकम्" इति स्तुतिरकारि । तदा प्रियवादिनोक्तम् । सत्यमेतत् । अत एव विधात्राऽयं सर्वशाकानां राजा विहितः । अस्य राजत्वं च च्छत्रचिन्हेन ज्ञाप्यते । वृन्ताकस्य शिरस्यन्यफलविलक्षणं महच्छत्राकारं वृन्तं भवत्येव । पुनश्च बहुभक्षणाद्वायुप्रकोपे तेनैव प्रभुणाऽयमस्मिन्महानवगुण इति निन्दाऽकृत । तदा तेनैव प्रियवादिनोक्तम् । सत्यमेतत् । अत एव विधात्रास्य मूर्ध्नि शङ्कुर्न्यखानि । वृन्ताकवृन्ताग्रं कठोरं शङ्काकारं च भवत्येव । उक्तलोकव्यवहारच्छायया धुरंधरो निरुक्त्यलंकारमङ्गीचकार ॥ निर् शब्दो नृधातोर्निष्पन्नः । नृधातुर्नयार्थकः । "नृ नये । " नयो युक्तिः । युक्तिर्योजना । "नयः, युक्तौ । युक्तिः, योजनायाम् ।" इति चिन्तामणिः । उक्तिशब्दार्थः कथनम् । अत्रेच्छानुसारं योजनायां रूढिः । एवं चेच्छानुसारं योजनायाः कथनं वर्णनं निरुक्तिशब्दार्थः॥

इच्छानुसारं यत्र स्याद्वचनस्य सुयोजना ।
निरुक्तिनामालंकारः कीर्त्यते तत्र भूमिप! ॥१॥

वचनस्य स्ववचनस्य परवचनस्य वा स्वेच्छानुसारं परेच्छानुसारं वा योजना क्रियत इति घत्वार्युदाहरणान्तराणि । न तु प्रकारान्तराणि ॥

यथा—

उदारराजां गणनाप्रसङ्गे

कनिष्ठिकास्थे यशवन्तनाम्नि ॥
अद्यापि तादृङ्नृपतेरभावा-
दनामिका सार्थवती बभूव ॥ १ ॥

कनिष्ठिकायाः सर्वाङ्गुलिभ्यः कनिष्ठत्वात्कनिष्ठिकेति सार्थकं नाम । कनिष्ठिकासमीपवर्तिन्या अङ्गुलेरनामिकेति रूढं नाम । तत्र कविः परवचनस्य स्वेच्छानुसारं योजनां चकार । अङ्गुलिभिर्गणने कनिष्ठिकातो गणनाप्रारम्भः । तत्रात्युदारनृपगणनायां कनिष्ठिकया राजराजेश्वरयशवन्तसिंहनाम्नि गणिते तदुत्तराङ्गुलौ तत्तुल्यनृपाभावान्नाम्नोऽभावेनानामिकेति ॥ अत्र नाम्न इच्छानुसारं योजना । वचने च नामादेः सर्वस्यापि संग्रहः ॥

यथा वा--

सिन्धौ तु वाडवेनाऽभ्रमण्डले विद्युता च सार्द्धं यः ॥
न्यवसत्तस्य विधोरिह वियोगिजनतापनं युक्तम् ॥१॥

इन्दुस्तापं करोतीति वियोगिन्या वचनम् । वस्तुतस्तु विधुः शीतलः । न तु तापकरः । तथाप्युद्दीपनतया वियोगिन्या दुःसहः । तत्र सखी स्वामिनीवचनं तदिच्छानुसारमित्थं योजयामास । विधोः सिन्धौ वाडवेन सह विहायसि च विद्युता सह वासकरणात्तव तापकरणकथनं युक्तमिति ॥ अत्र परवचनस्य परेच्छानुसारं योजना ।

यथा वा--

अवलस्वकुलाशिनो झषा-
न्निजनीडद्रुमपीडिनः खगान् ॥
अनवद्यतृणार्दिनो मृगा-
न्मृगयाऽघाय न भूभृतां घ्नताम् ॥ १ ॥

मम तु मतं, अत्र वक्त्रा स्वेच्छानुसारं राज्ञ इच्छानुसारं वा हिंसाकर्मणो न्यायधर्मे योजना कृतेति निरुक्त्यलंकारः ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् ॥" इति ॥

यथा—

ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ॥

दोषा रात्रिस्तां करोतीति दोषाकरश्चन्द्रः ॥ तत्राबलादुःखदायितया सखी वियोगिन्या इच्छानुसारं "भवत ईदृशैश्चरितैर्मया ज्ञातमेतद्भवान्दोषाणामाकर इति" चन्द्रस्य दोषाकरनाम्नोऽन्यार्थं प्रकल्प्य योजनां चकार ॥ लभ्योदाहरणानुसारेणार्वाचीनानां नामश्लेषयोर्नियमकरणं प्रमादः ॥ "सिन्धौ तु वाडवेन-" इत्यत्र "अवलस्वकुलाशिनः–" इत्यत्र च नामश्लेषयोरव्याप्तेरुक्तलक्षणमव्याप्तिदोषग्रस्तम् ॥ इति निरुक्तिप्रकरणम् ॥ ३२ ॥

## ॥ परिकरः ॥

परिकरशब्दार्थः सामग्री । अमुकस्य महान्परिकर इति

कथनं लोके प्रसिद्धम् । "परिकरः परिवारे । परिवारः शोभाजनक उपकरणे छत्रचामरादौ" इति चिन्तामणिः ॥ परिकररूपयुक्तेश्चमत्कारकारित्वे परिकरालंकारः ॥

शोभाकरः(*) परिकरो भूषा परिकराभिधा ॥
एनां भूपाल! सम्यक्त्वं जानीषे दशया स्वया ।१।

यथा—

नवकोटानामधिपो नवसाहस्रश्च राजराजेशः ॥
यस्य च शरणे सिन्धोर्नाथो यशवन्तनृप एषः ॥१॥

अत्र यस्य नव दुर्गाणि, नवसहस्रग्रामाः, राजानः सेवकाः, सिन्धुदेशाधिपश्च शरणागतोऽस्तीत्ययं परिकरो राजराजेश्वरे तत्कर्षमादधत्काव्यशोभाकरतयाऽलंकारः ॥

यथा वा—

आसारो नीहारस्तथेन्द्रगोपा बकालिकेकिरवाः ॥
सरिसरङ्गाश्चैतान्सह नीत्वाऽऽयादयं नभोमासः ॥ १ ॥

अत्रोक्ताऽऽसारादिः श्रावणमासस्य परिकरः ॥ उक्तोदाहरणेषु परिकरः स्तुतिपर्यवसायी ॥

निन्दापर्यवसायी यथा—

विषसहजेन्दोः कान्तिर्यमदिग्वायुः पलाशकुसुमानि ॥

(*) काव्यशोभाकर ॥

मधुरैतैर्युत आगाद्वियोगिनीनां कुतो नु जीवाशा ॥१॥

वृक्षविशेषस्य पलाश इति रूढं नाम । तत्र नायिकया स्वेच्छानुसारं पलं मांसमश्नातीति पलाश इत्यर्थो विहितः ॥ वसन्तस्योक्तपरिकरो निन्दापर्यवसायी ॥ अत्र निरुक्तेः समाधेश्च संकीर्णता ॥ परंपरागतं धुरंधरस्येदमुदाहरणम्––

सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥

अत्र चन्द्ररूपभूषणं शिवस्य परिकरः । परिकरशब्दार्थो गात्रिकाबन्धोऽपि ॥ "परिकरः, वस्त्रादिना प्रगाढगात्रिकाबन्धे" इति चिन्तामणिः ॥ लोके हि किंचित्कार्यं विधातुमुत्साहेन सज्जीभूतेऽनेनामुककार्यार्थं गात्रिका बद्धेत्युच्यते ॥ तदुक्तम्––

"बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥" इति ॥

धुरंधराभिप्रायापरिज्ञानादर्वाचीनाः परिकरशब्दार्थं गात्रिकाबन्धं ज्ञात्वाऽत्र साभिप्रायविशेषणं गात्रिकाबन्धममन्यन्त ॥ चन्द्रालोके इदं लक्षणम्—

"अलंकारः परिकरः साभिप्राये विशेषणे ॥" इति ॥

"सुधांशुकलितोत्तंसः—" इत्येव चोदाहरणम् ॥ मम तु मतं, अभिप्रायशून्यविशेषणं त्वपुष्टार्थदोष इति साभिप्रायविशेषणेनोक्तदोषस्य वारणमात्रम् ॥ अस्मिन्नंशेऽलंकारत्वयोग्यो न कोऽपि चमत्कारः । विशेषणस्याभिप्राये कश्चिच्चमत्कारविशेषश्चेत्तच्चमत्कारविषयकः कश्चिदलंकारो भविष्यति ॥

अत्र परिकरशब्दार्थः सामर्थ्येव ॥ किं च शिवशब्दः सामान्यतया कल्याणवाचकः । हरिप्रभृतयोऽपि कल्याणरूपाः । ततो महादेवस्य निःसंदेहज्ञाने विवक्षा चेदुदात्तालंकारः ॥ तापहरणे सुधांशोर्हेतुतायां विवक्षा चेत्तापहरणज्ञाने सुधांशोर्ज्ञापकत्वाज्ज्ञापकहेत्वलंकारः ॥ कचित्परिकरोऽपि विशेषणत्वमापद्यते । "सुधांशु-" इत्यत्र परिकरो विशेषणरूपः । तथापि प्राधान्यं तु परिकरताया एव ॥ "आसार-" इत्यत्र परिकरो न विशेषणरूपः ॥

स नृपानकरोद्रङ्कान् रङ्कांश्चासंख्यशो नृपान् ॥

अत्र केवलं विशेषणरूपता । न तु विशेषणे परिकरता ॥ उक्तलक्षणं स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति परिकरप्रकरणम् ॥ ३३ ॥

## ॥ परिणामः ॥

परिपूर्वान्नमतेः परिणामशब्दो निष्पन्नः । अत्र परीत्युपसर्गार्थः सर्वत इति ॥ "परि सर्वतोभावे" इति चिन्तामणिः ॥ नमधातुर्नमनार्थकः । परिणम्यते इति परिणाम इति व्युत्पत्त्या सर्वतो नमनं परिणामशब्दार्थः ॥ वस्तुनोऽन्यथाभावः परिणाम इति भावः ॥ "परिणामः प्रकृतेरन्यथाभावे" इति चिन्तामणिः ॥ प्रकृतिस्तु स्वभावः । "स्वभावः प्रकृतौ" इति चिन्तामणिः ॥ अत्र स्वभावशब्देन निजस्थितिर्विवक्षिता । स्वस्य भावः स्थितिः स्वभावः ॥

"परिणामो महाराज! परिणामः प्रकीर्त्यते ॥"

यथा—

त्वं रङ्कान् भूपालान्करोषि कृपया मरुस्थलाधीश! ॥

अत्र दशायाः परिणामः ॥

यथा वा—

यशवन्तमहाराज! वने त्वदरियोषिताम् ॥
नीहारोऽभूज्जवनिका दीपा दिव्यौषधीगणः ॥१॥

अत्र धर्मस्य परिणामः । नीहारस्य विजनवने पूर्वं गिरिवृक्षाद्याच्छादकत्वेऽपि तिरोधातुं योग्यस्य तिरोधायकत्वाभावात्तस्मिञ्जवनिकात्वधर्माभावः । अधुना कुलीनरिपुस्त्रीणामाच्छादनकरणान्नीहारत्वरूपधर्मस्य जवनिकात्वरूपधर्मेण परिणामः ॥ तथैव तादृशौषधीनां पूर्वं प्रकाशकत्वेऽपि रात्रौ दर्शनीयपदार्थदर्शनरूपदीपकार्याकरणात्तासु दीपत्वरूपधर्माभावः । अधुना रिपुस्त्रीणां रात्रौ पदार्थदर्शनेनौषधीत्वरूपधर्मस्य दीपत्वरूपधर्मेण परिणामः ॥

यथा वा--

पङ्कात्कीटं समादाय स्वसमं व्यदधाद्दलिः ॥
विस्मरेदुपकारं तं कथं कीटो महीपते! ॥ १ ॥

भ्रमरः कीटं भ्रमरं करोतीति प्रसिद्धिः । अत्र वर्णाकृतिशीलानां त्रयाणां परिणामः ॥ अत्राप्रस्तुतप्रशंसायाः संकीर्णता॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"परिणामः क्रियार्थश्चेद्विषयी विषयात्मना" ॥ इति॥

विषयी विषयात्मना क्रियाकारी चेत्परिणाम इति भावः॥

यथा--

प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥

उक्तलक्षणेनेदं स्पष्टमवभासते, अर्वाचीनैरिह विषयी विषयरूपेण परिणमतीति नियमो विज्ञातः। रूपकाच्च भेद-दर्शनाय विषयी विषयरूपेण क्रियां करोति चेत्तत्र परिणाम इति चोक्तमिति॥ तत्प्रमादमूलम् ॥

प्रियध्याननिविष्टात्मा तादात्म्यं समुपागता ॥
स्वात्मानं दर्पणे दृष्ट्वा सा बाला मोदते स्वयम् ।१।

इत्यत्र नायिकायां नायकस्यारोपान्नायको विषयी। नायिका च विषयः। नायिकात्र नायकभावं भजते। स्वात्मनि नायकभावप्राप्त्या दर्पणगतं निजस्त्रीरूपमवलोक्य नायिका तदासक्ता भवतीति भावः॥ इह विषयिरूपेण विषयस्य परिणामः॥ "त्वं रङ्कान् भूपालान्-" इत्यत्र राजसंबन्धिक्रियां विना केवलं वैभवप्राप्त्या रङ्कानां राजरूपेण परिणामः। तथैव "पङ्कारकीटं समादाय-" इत्यत्रापि क्रियां विना परिणामः॥ ननु रङ्कस्य राजभावे राजसंबन्धिक्रियाकरणं, कीटस्य च भ्रमरभावे भ्रमरसंबन्धिक्रियाकरणमर्थसिद्धमिति चेन्न। काव्यस्य शरीरं शब्दार्थमयम्। तत्तु कविना यत्र यावद्वर्णितं तत्र तावन्मात्रमेवावतिष्ठते। तस्मिँल्लक्षणां

व्यञ्जनां वा शक्तिं विनाऽर्थापत्त्यलंकारं विना वा न कश्चि-द्वाह्योर्थः समागच्छेत् ॥ एवं सर्वत्र ज्ञातव्यम् ॥ ईदृशोदाहरणे-ष्वर्वाचां लक्षणमव्यासम् ॥ रूपकेऽनुकरणमिह त्ववस्थान्तर-प्राप्तिरिति महद्वैलक्षण्यम् । तच्चानयोर्नामोदाहरणाभ्यां स्पष्ट-म् ॥ किंचानेन निरीक्षणक्रियायाः कमलेष्वन्वयं विधाय निजम-तानुसारं परिणामः साधितः । सोऽपि प्रमादः । कुतः, अत्र साधर्म्यरूपयुक्त्या नयनयोः कमलत्वेन रूपकमात्रं कविकर्म । युक्तिं विना कमले निरीक्षणक्रियायाः स्थापनमरोचकतया कविकर्म न भवति । कविसृष्टेर्नियतिकृतनियमरहितत्वेऽपि विधिसृष्टिर्हर्षशोकोभयरूपेत्यंशस्य विलक्षणत्वं तु कविसृष्टिः केवलमानन्दमय्येवेति । कविसृष्टावानन्दस्तु युक्त्यंशेश्चम-त्कारस्यैव । चमत्कारहीनार्थस्तूद्वेगजनकतया दोषरूपः । तदुक्तं भगवता व्यासेन "उद्वेगजनको दोषः" इति ॥ उक्त-लक्षणं साक्षात्स्वरूपाबोधकमव्याप्तिदोषग्रस्तं च ॥ इति परिणामप्रकरणम् ॥ ३४ ॥

## ॥ परिसंख्या ॥

तत्तद्धर्मविशिष्टानां धर्मिणां संख्याकथने तस्य धर्मस्या-न्यत्र वर्जनपूर्वकमुक्तसंख्याश्रयेषु नियमो भवतीति लोकरी-तिः ॥ यथा महादेव एकः शंभुरेव । पृथिव्यप्तेजोवाय्वाकाशाः पञ्च महाभूताः । एवं संख्याकथने महादेवत्वस्यान्यदेवेषु वर्जनपूर्वकमेकस्मिञ्छंभावेव, महाभूततायाश्चान्यत्र वर्जनपू-

वैकं पृथिव्यादिपश्चैक एव नियमो भवति । द्वितीयो महादेवः षष्ठश्च महाभूतो नास्तीति ॥ अत्र परीत्युपसर्गार्थो वर्जनम् । "परि वर्जने" इति चिन्तामणिः । परिसंख्येतिसमुदितशब्दार्थस्तु परि वर्जनवती संख्या परिसंख्या ॥ संख्या त्वन्यत्र वर्जनं कुरुते । अत्र तु स्वस्मिन्विषये वर्जनस्य रूढिः । इदमेव चालौकिकत्वम् ॥

यत्र संख्याश्रयेऽपि स्याद्धर्मस्य परिवर्जनम् ॥
परिसंख्या भवेत्तत्र भूषणं मनुजाधिप! ॥ १ ॥

यथा—

याचन्ते खलु चातका मदगजाः क्षीणा ध्वजाग्रे धुति-
र्मालिन्यं कुचयोर्मुखे कुटिलता शीतद्युतौ दृश्यते ॥
दोषस्वीकरणं रसाकुलकवौ चित्तस्य चौर्यं प्रभो!
इत्थं श्रीयशवन्तसिंह! भवतो राज्यस्थितौ राजते ॥१॥

अत्र याञ्चायाश्चातकेषु तनुक्षीणतायाश्च मत्तगजेषु कथनादनयोरन्यत्र पशुपक्षिमनुष्येषु वर्जनपूर्वकं चातकमत्तगजेष्वेव नियमो जातः । परं तु चातकनिष्ठयाञ्चापि दारिद्र्यदशाजनिता दोषरूपा नास्ति, किं त्वेकवृत्तितयेति गुणरूपा। मत्तगजनिष्ठक्षीणतापि च भोजनप्राप्त्यभावजनिता रोगजनिता वा दोषरूपा नास्ति, किं तु मत्ततयेति गुणरूपा ॥ तथैव ध्वजाग्रनिष्ठकम्पोऽपि भयजनितो दोषरूपो नास्ति, किं तु वातवशेनेति स्वाभाविकः । स च शोभाकरः । एवमन्य-

दपि । इत्थं संख्याश्रयेष्वपि क्षीणतादिवर्जनस्यालौकिकत्वेन रोचकतयाऽलंकारत्वम् ॥ अत्र परिसंख्यायाश्चमत्कारस्य प्राधान्यात्परिसंख्याऽलंकारः । आभासस्य गौणत्वान्नालंकारता । उक्तोदाहरणे रसाकुलकर्त्री दोषस्वीकारोक्तिस्तु कवयः काव्यरसानुकूलतायां दोषान्न गणयन्तीति ॥ उक्तं च "निरङ्कुशाः कवयः" इति ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम्॥"इति॥

यथा—

स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम्॥

नहीदं लक्षणं परिसंख्यायाः साक्षात्स्वरूपबोधकम् । किंतु धुरंधराभिमतनियमालंकारस्वरूपबोधकम् ॥ किं च "याचन्ते खलु चातकाः" इत्याद्युदाहरणेष्वव्याप्तं च । न ह्यत्र क्षीणताया एकस्मिन्नेव वर्जनमपि तु पशुपक्षिमनुष्याद्यनेकजातिवृत्ति । किं च तादृशनियमा अप्यनेकेषु संभवन्तीति तत्राव्याप्तिः ॥ इति परिसंख्याप्रकरणम् ॥ ३५ ॥

## पर्यायः ॥

---

पर्यायस्त्वेकस्य स्थाने द्वितीयः । यथा हस्तिनाम्नः स्थाने दन्तीत्यादीनि नामानि । नाम्नां विषये पर्यायस्य कथनं शास्त्र-

प्रसिद्धम् ॥ अत्र पूर्वपश्चाद्भावक्रमो न विवक्षितः । पर्यायस्य "ववळी-वारी" इति लोकभाषा ॥

पर्यायालंकृतिस्तत्र यत्र पर्यायता भवेत् ॥
सा चाश्रय्याश्रयादीनां ज्ञेया मरुनरेश्वर! ॥१॥

यथा—

मरौ पयोहारिवधूजनानां
जलाय नेत्रेषु जलं समायात् ॥
तव प्रभावाद्यशवन्तसिंह!
पादेषु तासां परिवर्तते तत् ॥ १ ॥

"पादेषु तासां परिवर्तते तत्" इति कथनस्येदं तात्पर्यम्, पूर्वं स्त्रियोऽतिकृच्छ्रात्कूपेभ्यः समुद्धृत्य पानीयमानयन्ति स्म । इदानीं तु राजराजेश्वरयशवन्तसिंहेन यत्र तत्र सरांसि कारितानीति पानीये पादमर्पयित्वा पानीयमानयन्ति । अत्र पूर्वं पानीयस्य, योधपुरपानीयहारिणीनां नेत्रेषु संबन्धः । इदानीं तु तत्त्यागपूर्वकं तासां पादेषु संबन्धोऽभवदित्येकस्यैवाश्रयिणः पानीयस्य पर्यायेण नेत्रपादरूपानेकाश्रयेषु संबन्धः ॥

यथा वा—

यत्रासीद्गजबन्धनं करिघटा तत्राधुना गर्जति
धावन्ति स्म च मूषका बहुतरास्तत्राद्य दासव्रजः॥
यत्राभून्मुसलध्वनिः कटुतरस्तत्राद्य वाद्यध्वनि-

श्चक्रे श्रीमरुपो वहूनि सदनान्येतादृशानि क्षणात्॥१॥

अत्रैकस्य भवनरूपाश्रयस्याजगजाद्यनेकाश्रितैः सह पर्यायेण संबन्धः ॥

यथा वा—

एकां दशां किं मनुजोऽत्र वाञ्छे-
त्तिस्रो दशा अह्नि रवेर्यदा स्युः ॥

अत्र दशायाः पर्यायः ॥

यथा वा—

नेत्रे अभूतां सरले पुरा ये
संप्राप्नुतस्ते कुटिलत्वमद्य ॥

बाल्यावस्थास्थाने तरुणावस्था प्राप्तेतिभावः। अत्र नायिकाया वयसः पर्यायः ॥ अत्रावस्थायाः क्रमोऽपि विद्यते। तथापि नेह क्रमस्य चमत्कारः। किं तु पर्यायस्य। चन्द्रालोककारः पर्यायद्वयं मत्वेमे लक्षणे आह—

"पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः ॥
एकस्मिन्यद्यनेकं वा पर्यायः सोऽपि संमतः ॥"इति ॥

मम तु मतं, आश्रये नियमकरणादन्यत्राव्याप्तिर्भवति ॥ यथा-"आनीता नटवन्मया तव पुरः श्रीकृष्ण! या भूमिकाः" इत्यत्रानेकदेहधारणान्नाश्रयस्वारस्यम्। किं तु जीवेन भिन्नभिन्नरूपाणि लक्षशः शरीराणि धृतानीति पर्यायेणानेक-

रूपधारणस्य स्वारस्याद्रूपस्य पर्यायः॥ उक्तलक्षणमव्याप्तिदोषग्रस्तम् ॥ इति पर्यायप्रकरणम् ॥ ३६ ॥

# पर्यायोक्तिः ॥

अत्र पर्यायशब्दार्थः प्रकारः। "पर्यायः प्रकारे" इति चिन्तामणिः ॥ पर्यायेण प्रकारेणोक्तिः पर्यायोक्तिः ॥

"पर्यायोक्तिरलंकारः पर्यायेणोक्तिरुच्यते ॥
स्वरूपमस्य व्यासेन महाराज! स्फुटीकृतम्॥"

यथा—

आदाय खड्गं यशवन्तसिंह-
सेनासमक्षं प्रतियान्ति येऽत्र ॥
सुराङ्गनोरःस्थललग्नगात्राः
स्वपन्ति ते देवपुरे सुखेन ॥ १ ॥

अत्र शत्रुमरणमुक्तप्रकारान्तरेण कथितम् ॥ तच्च रमणीयतयाऽलंकारः ॥

यथा वा—

त्वत्कार्ये हर! यद्धनं लगति नो तत्ते प्रभो! चन्दनं
गेहे यत्र न तेऽर्चनं भवति वै तत्ते विहारस्थलम् ॥
चर्चा यत्र न विद्यते सदसि ते तत्ते सदः शंकरे-

त्येवं वङ्ककवीश्वरः कथयते धन्यस्तव ध्यायकः ॥१॥

अत्र भस्मश्मशानस्थलीप्रेतमण्डलीनां प्रकारान्तरेण कथनम् ॥

यथा वा—

ब्रूतो निषेधतश्चैव तुष्यतः कुप्यतस्तथा ॥
इत्थं तौ नयनैर्वार्तां कुरुतो लोकसंनिधौ ॥ १ ॥

अत्र क्रियया बोधनम्। नेह पर्यायतास्वारस्यम्। उक्तिरूपत्वाभावात्। अत्र तु सूक्ष्मतायाः स्वारस्यम्।

चन्द्रालोककारः पर्यायोक्तद्वयं मत्वा प्रथमस्येदं लक्षणमाह—

"पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्" ॥

यथा—

नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ॥

"अत्र भगवान्वासुदेवः स्वासाधारणरूपेण गम्यः। राहुवधूकुचवैयर्थ्यकारकत्वेन रूपान्तरेण स एवाभिहितः" इति च कुवलयानन्दकार आह। तत्तु प्रमादः॥ यस्य रचनान्तरेण कथनं तस्य गम्यत्वं कथं संभवेत्॥ इदं रचनान्तरं वासुदेवस्य साक्षाद्वाचकम्। यथा कृष्णस्य मधुसूदन इति नामान्तरम्। उक्ताभिप्रायेणैव धुरंधरोऽस्यालंकारस्य पर्यायोक्तिरिति नामाह। उक्तिस्तु वचनम्। वचनस्य च गम्यत्वं न

संभवति । उक्तोदाहरणे उदात्तस्य संकीर्णता ॥ चन्द्रालोके द्वितीयपर्यायोक्तस्येदं लक्षणोदाहरणम्—

"पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ॥"

यथा–

यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥

दूतकार्यमाचरन्त्या सख्योक्तपर्यायतया दंपत्यो रमणार्थमिदमुपदिष्टमित्यभिप्रेत्य केनचिदिदं पर्यायोक्तेरुदाहरणं प्रदर्शितम् ॥ तदभिप्रायमजानाना अर्वाचीना व्याजेनेष्टसाधनं पर्यायोक्तमिति मन्यन्ते स्म ॥ तत्तु प्रमादः ॥ व्याजेनेष्टसाधनं तु वक्ष्यमाणमिषालंकारस्य विषयः ॥ उक्तलक्षणद्वयं पर्यायोक्तेः साक्षात्स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति पर्यायोक्तिप्रकरणम् ॥ ७३ ॥

## ॥ पिहितम् ॥

---

पिहितशब्दार्थ आच्छादनम् । "पिहितः, आच्छादिते" इति चिन्तामणिः ॥

यत्र शोभाकरत्वं स्यात्प्रधानस्य नराधिप! ॥
पिहितालंकृतिस्तत्र धुरंधरमते स्मृता ॥ १ ॥

यथा–

यशसा मरुभूपस्य पिहितं जगतो यशः ॥

यथा वा—

प्रियतमवियोगजनिता कृशता कथमपि तवेयमङ्गेषु ॥
लसदिन्दुकलाकोमलकान्तिकलापेषु लक्ष्येत ॥ १ ॥

अत्र प्रियतमवियोगजन्या कृशता नायिकायाः कान्तिकलापेनाच्छादिता सती दृष्टिगोचरा न भवति ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम् ॥"

यथा—

प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥

उक्तपरंपरागतोदाहरणे पिहितालंकारस्य संगतिस्तु नायकापराधो नायिकयाऽऽच्छादित इति ॥ कस्यचिद्विज्ञातयोर्गुणदोषयोरुपरि दृष्टिदानाभावस्तयोराच्छादनमेव । तस्य पूर्वलक्षणेन पिहिते संग्रहो युक्तः ॥ उक्तोदाहरणस्य साक्षादभिप्रायापरिज्ञानाज्जयदेवनिर्मितलक्षणं पिहितालंकारस्वरूपस्य नेषदपि बोधकम् । प्रातर्गृहागमनेन प्रियापराधज्ञानांशे वक्ष्यमाणज्ञापकहेत्वलंकारः । तल्पकल्पनांशे प्रियं प्रति सूक्ष्मतयाऽपराधज्ञापनाद्वक्ष्यमाणसूक्ष्मालंकारः ॥ उक्तलक्षणं स्वरूपांबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति पिहितप्रकरणम् ॥ ३८ ॥

# पूर्वरूपम् ॥

पूर्वशब्दार्थः प्रथम इति ॥ रूपशब्दार्थो मनोहराकृतिः स्वभावादिश्च । पूर्वं रूपं पूर्वरूपम् ॥ पूर्वरूपमिति कथनेनात्र पूर्वरूपस्य प्राप्तिर्विवक्षिता ॥

पूर्वरूपस्य संप्राप्तौ पूर्वरूपमुदाहृतम् ॥

यथा—

विवाहस्योत्सवे सूनोः कृत्वा भूपालमण्डलम् ॥
त्वं पुनर्जयचन्द्रत्वमाप्तवान्मरुभूमिप! ॥१॥

जयचन्द्रमहाराजस्यानेकभूपालवशवर्तितया राजमण्डलं भवति स्मेति स राजसूयेनायाक्षीत् । राजराजेश्वरयशवन्तसिंहोऽपि सरदारसिंहकुमारविवाहोत्सवेऽनेकनृपतीन्निमन्त्र्य राजमण्डलं रचयामासेति पूर्वावस्थायाः प्राप्तिः ॥

यथा वा—

विधूदयादर्धमार्गे सख्यहं व्याकुलाऽभवम् ॥
सहलग्नद्विरेफालिभाग्याद्वीथ्यां तमोऽभवत् ॥१॥

अत्र कृष्णाभिसारिकायाः प्रत्यागमनसमये चन्द्रोदयात्सामग्रीमध्ये तमसो विनाशः । पुनश्च सुगन्धलुब्धसहलग्नभ्रमरसमूहेन रथ्यायामन्धकारे संजाते पूर्वरूपस्य प्राप्तिः ॥ न ह्यत्रावर्णनीयान्धकारस्य पूर्वरूपप्राप्तौ चमत्कारस्य पर्यवसानम् । किं तु वर्णनीयकृष्णाभिसारिकायास्तमःसंबन्धि-

सामग्र्याः पुनःप्राप्तिरभवदिति पूर्वरूपे चमत्कारस्य पर्यवसानम् ॥

चन्द्रालोककारः पूर्वरूपद्वयं मत्वेमानि लक्षणोदाहरणान्याह—

"पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम् ॥"

यथा—

हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥

अत्र शेषस्य पुनः श्वेतवर्णरूपस्वगुणस्य प्राप्तिः ।

"पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि ॥"

यथा—

दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः ॥

अत्र दीपप्रकाशस्य विद्यमानत्वे वर्णनीयविश्रंब्धनवोढाया वस्त्रत्यागे लज्जाक्षत्यवस्थाप्राप्तिः । सा च दीपनिर्वापणेनापनीता । परं तु काञ्चीरत्नजनितप्रकाशेन लज्जाक्षत्यवस्थायाः पुनः प्राप्तिरभवत् ॥ यदि चात्रावर्णनीयप्रकाशस्य पूर्वावस्थायाः पुनः प्राप्तिः स्वीक्रियेत तर्हि प्रकाशविषयकं पूर्वरूपम् ॥ मम तु मतं, पूर्वरूपनामावयवभूतस्य रूपशब्दस्य मनोहराकृतिस्वभावशुक्लादिगुणाद्यनेकार्थकतया गुणावस्थादिविलक्षणता तूक्तिमात्रेण वैलक्षण्यम् । अत एवोदाहरणान्तरमात्रम् । न तु प्रकारान्तरार्हम् ॥ एवं तु "हर-

कण्ठांशु-" इत्यत्र शेषवस्तुनः श्वेतवर्णरूपांशस्य "दीपे निर्वापिते-" इत्यत्र चाखण्डप्रकाशवस्तुनः पूर्वरूपमस्तीत्युक्तकिंचिद्विलक्षणतापि प्रकारत्वमापद्येत ॥ किं चानेन गुणावस्थयोर्नियमः कृतः। तेन "विधूदयादर्धमार्गे-" इत्यस्मिन्नुदाहरणे,

क्षीणं धनं प्राप्य नरो मनस्वी
वदान्यतां धारयते पुनर्वै ॥
स्थानाच्च्युता दन्तिरदाः पुनस्ते
शोभाकराः स्त्रीकरयोर्भवन्ति ॥ १ ॥

अत्र दृष्टान्तस्य संकीर्णता । अत्र मनस्विनो वदान्यतास्वभावस्य पूर्वरूपप्राप्तिः । यावद्दन्तिदन्ता दन्तिमुखगतास्तावद्दन्तिमुखशोभाकराः । ततश्च्युतौ तु तेषां शोभाकरत्वस्वभावस्य विनाशः। त एव यदा चूडिकारूपेण स्त्रीभिर्धार्यन्ते तदा पुनः स्त्रीकरयोः शोभाकरा भवन्तीति दन्तिदन्तानां शोभाकरत्वस्वभावस्य पूर्वरूपप्राप्तिः ॥ इत्यत्र चोक्तलक्षणयोरव्याप्तिः । अवस्था तु दशा, स्वभावस्तु प्रकृतिरित्यनयोर्भेदात् ॥ प्रकृतेश्च परिवर्तनं लोके प्रसिद्धम् । यस्य परिवर्तनं तस्य लोपोऽप्यनुभवसिद्धः ॥ प्रकृतिलोपस्य निमित्तान्यनभ्यासादीन्यनेकानि ॥ इति पूर्वरूपप्रकरणम् ॥३६॥

## प्रतिमा ॥

---

अलंकाररत्नाकरे प्रतिमालंकारो लिखितः । प्रतिमा तु

प्रतिनिधिः । "प्रतिनिधिः प्रतिमायाम्" इति चिन्तामणिः ॥ प्रतिनिधिस्तु मुख्याभावे तत्सदृशतयोपात्तः ॥ "मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिरुच्यते ।" इति चिन्तामणिः ॥ यथा देवानामभावे तन्मूर्तिः । सा च लोके प्रतिमेत्युच्यते ॥ उक्तलोकव्यवहारानुसारेण धुरंधरोऽमुमलंकारमङ्गीचकार ॥

"प्रतिमाख्योऽलंकारः प्रतिमारूपेण वर्णनं यत्र ॥
अस्य स्वरूपमुपमादिभ्यो भिन्नं ह्यतीव राजेन्द्र! ॥ १ ॥

यथा—

विद्याप्रवृद्धिं कविसत्कृतिं च
कर्तुं यशःसंचयमप्यजस्रम् ॥
राजेश्वरश्रीमरुप! त्वमद्य
स्थानेऽसि भोजस्य कृतो विधात्रा ॥ १ ॥

विद्यावर्धनादिकार्येषु भोजसदृशत्वाद्राजराजेश्वरयशवन्तसिंहः परमेश्वरेण भोजस्य स्थानापन्नः कृतः ॥

यथा वा—

देशान्तरं गते कान्ते विरहेण प्रपीडिता ॥
ननान्दृमुखमालोक्य जीवत्येषा विलासिनी ॥ १ ॥

अत्र विदेशस्थस्य पत्युरसांनिध्ये तत्सदृशाकारतया

नायिकया मनन्दा तत्स्थानापन्ना कृता ॥ इति प्रतिमाप्रकरणम् ॥ ४० ॥

# प्रत्यनीकम् ॥

अनीकशब्दार्थः सेनामात्रमपि सेनासमवेतश्च । "अनीकं सैन्ये । सेनामात्रे ॥ सैन्यं सेनासमवेते" इति चिन्तामणिः॥ शत्रुसेनापि शत्रोः संबन्धिनीति शत्रोः पक्षः । तथापि सापि शत्रुवद्युध्यत इति शत्रुसेनां प्रति शत्रुताकरणं तु शत्रुणा सह शत्रुताकरणमेव । तथा चात्र सेनासमवेतपदेन युद्धाविधायिनश्चारा भारवाहादयश्च विवक्ष्यन्ते । तेऽपि शत्रोः पक्षः। लोके हि शत्रुं शत्रुसेनां प्रति वा पराक्रमितुमशक्ताश्चारादीन्प्रति शत्रुत्वमाचरन्ति ॥ तत्र शत्रुं प्रति शत्रुताकरणं त्वन्योन्यालंकारस्य विषयः ॥ शत्रोस्तादृशपक्षं प्रति पराक्रमकरणस्य चमत्कारो विलक्षण इत्यनीकं प्रति शत्रुताकरणरूपलोकन्यायानुसारेण धुरंधरः प्रत्यनीकालंकारं स्वीचकार ॥ अनीकं प्रति प्रत्यनीकम् ॥

## न्यायेन प्रत्यनीकस्य प्रत्यनीकाख्यभूषणम् ॥

यथा—

द्वेषेण मरुनाथस्य भगवान्पाकशासनः ॥
अविधानेन वर्षायास्तदीया बाधते प्रजाः ॥१॥

इन्द्रस्य वैभवोदारतादिविजिततया राजराजेश्वरे शत्रुभावः । तथापि साक्षाद्राजराजेश्वरं बाधितुमशक्त इन्द्रो राजराजेश्वरस्य पक्षं प्रजां दुर्भिक्षमापाद्य पीडयति ॥ राजप्रजयोः पाल्यपालकभावसंबन्धः । अस्यालंकारस्य चमत्कारस्वारस्यं तु पक्षविषयम् । पक्षोऽप्यनेकविधः । शत्रोः पक्षः, मित्रस्य पक्ष इत्यादिः ॥ साक्षाद्वस्तु विहाय पक्षं प्रति करणस्य निमित्तान्यप्यशक्तत्वशत्रुमित्रतोत्कटत्वादीन्यनेकानि । करणमप्युपकारापकारस्नेहसत्कारादिरूपेणानेकविधम् । तेषां सर्वेषामुपलक्षणेन संग्रहो भवति । किं चात्र पक्षविषयश्चमत्कार इति पक्षं प्रति करणे पक्षस्य करणं, पक्षार्थं करणमित्यादीनामप्युपलक्षणेन संग्रहः ॥ एषां सर्वेषामुदाहरणानि मया प्रदर्श्यन्ते ॥

यथा वा—

अनुरक्ता भगवंति रागं भक्तेषु कुर्वते ।
वरेऽनुरक्ता कुर्वन्ति रागं जन्येषु भूपते! ॥ १ ॥

*अत्र साक्षाद्वस्तुन्यनुरागोत्कटयात्पक्षेऽनुरागस्य करणम् ॥*

यथा वा—

समीक्ष्य खे पत्त्रमयं पतङ्गं
कृष्णस्य राधाऽङ्गणमध्य एषा ॥
उन्मत्तवद्धावति तत्र तस्य
च्छायां स्पृशन्ती तरलायताक्षी ॥ १ ॥

पद्ममयः पतङ्गः क्रीडाद्रव्यविशेषः। "कनकव्वा, गुडी" इति लोकभाषा॥ अत्र पूर्वानुरागिण्याः साक्षान्मित्रत्वसंबन्धविशिष्टः कृष्णः। कृष्णस्य पत्रपतङ्गः कृष्णस्य पक्षः। पत्रपतङ्गस्य छाया तस्य पक्षः। अत्र मित्रभावस्योत्कटतया पक्षस्य पक्षं प्रति सत्कृतिविधानम्॥

यथा वा—

> ग्रथिता कुसुमैर्वेणी राजते सुमनोहरा॥
> मन्ये स्वनाथविद्वेषी राहुरग्राहि तारकैः॥१॥

तारश्चन्द्रस्य पक्षः। तयोश्च स्वस्वामिभावसंबन्धः। राहुश्च चन्द्रशत्रुः। एवं चात्र चन्द्रस्य पक्षभूतानां ताराणां स्वस्वामिनश्चन्द्रस्य साक्षाच्छत्रुं राहुं प्रति पराक्रमः। अत्र निमित्तं तु स्वामिभक्तिः॥

यथा वा—

> मधुव्रतौघः कुपितः स्वकीय-
> मधुप्रपापद्मनिमीलनेन॥
> बिम्बं समाक्रम्य बलात्सुधांशोः
> कलङ्कमङ्के ध्रुवमातनोति॥१॥

चन्द्रो भ्रमराणां न साक्षाच्छत्रुः। किं तु पद्मनिमीलनकरणात्पद्मानां साक्षाच्छत्रुः। तानि च भ्रमराणां मधुप्रपारूपाणीतिपातृपायकभावसंबन्धेन भ्रमरैः स्वपक्षपद्मानां कृते

चन्द्राक्रमणमकारि ॥ धुरंधरेणात्र प्रत्यनीकन्यायो दर्शितः । तस्मिन्नर्वाचां बुद्धेः कुण्ठिततयाऽस्यालंकारस्यैकविधमेव स्वरूपं ज्ञात्वा लक्षणनिर्माणम् । तच्च प्रत्यनीकालंकारस्योक्तप्रकारान्तरेषूदाहरणान्तरेषु चाव्याप्तम् ॥

चन्द्रालोके इदं लक्षणम्—

" प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः ॥" इति ॥

अत्र शत्रुपक्षे, शत्रुबलवत्ताकथनेन स्वाशक्तानिमित्ते च नियमकरणादस्य लक्षणस्यान्यत्राव्याप्तिः ॥ इति प्रत्यनीकप्रकरणम् ॥ ४१ ॥

# प्रहर्षणम् ॥

हर्षो हर्षणमित्यनर्थान्तरम् । हर्षशोकयोरत्यन्तं लौकिकतयाऽलौकिकत्वार्थं धुरंधरेणात्र प्रकृष्टार्थकः प्रोपसर्गो योजितः।

"प्रहर्षस्तु महाराज! प्रहर्षणमलंकृतिः ॥
तद्भवेदिह सर्वेषां नरेश! तव दर्शने ॥ १ ॥

यथा—

योऽनृणीभवितुं वाञ्छन् याचते मरुभूमिपम् ॥
इतरान्सोऽनृणीकर्तुं समर्थो जायते ध्रुवम् ॥ १ ॥

अत्र वाञ्छातोऽत्यन्तमधिकलाभात्प्रहर्षणालंकारः ॥

यथा वा—

जातें नेत्रनिमीलने कथमपि स्वप्ने वियुक्तस्त्रिया
दृष्टः प्राणपतिस्तदैव कथितः सख्या प्रियस्यागमः ॥
प्रत्यक्षोऽभवदन्तरेऽत्र परमानन्दस्तु तस्माद्भू-
त्तार्तीयेन हि रञ्जनेन वसनं यद्वत्सुरक्तं भवेत् ॥ १ ॥

स्वप्नश्रवणप्रत्यक्षाणां प्रत्येकं दर्शनं हर्षप्रदमित्येतेषां त्रयाणां युगपद्भवनं प्रहर्षणम् ॥

यथा वा—

भोजश्च खानसिंहश्च युद्धा(*)न्नष्टौ परस्परम् ॥
मोहकमसिंहकृते नूनं वृष्टिरासीत्सुधामयी ॥ १ ॥

मरुदेशे गुडानामको राष्ट्रवरसुभटानामाधिकारिको ग्रामः। तदधिपतयो राणापदमादधते ॥ मोहकमसिंहराणावसरे खानसिंहाभिधः कश्चिद्वाघेलक्षत्रियो गुडाख्यग्रामलुण्ठनार्थमपररात्रे तूष्णीं समायातः। तस्मिन्नेवानेहसि तत्र काकतालीयन्यायेन राजकरग्रहणार्थं तत्प्रान्ताधिकारी राजभृत्यो भोजराजोऽपि राजकराऽदायिनं मोहकमसिंहं दण्डयितुं तथैव समागतः। प्रच्छन्नमागतयोस्तयोर्गुडाग्रामान्तिके परस्परं समरः समजनि। ततः क्षीणबलौ तौ ततोऽपसृताविति प्रातराकर्णनादुक्तसुभटस्यानिर्वचनीयहर्षप्राप्तिः संजातेति प्रहर्षणालंकारः ॥

चन्द्रालोके प्रहर्षणत्रयं भणितम्—

(*) युद्धं दृष्ट्वेति ल्यब्लोपे पञ्चमी ॥

"उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ॥
वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ॥
यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च ॥" इति॥

क्रमेणोदाहरणानि—
तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥
दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥
निध्यञ्जनौषधीमूलं खनता साधितो निधिः ॥

मम तु मतं, न ह्येतानि प्रकारान्तराणि । किं तूदाहरणान्तराणि ॥ चन्द्रालोकोक्तलक्षणानामस्मदुक्तापरोदाहरणयोरव्याप्तिः । कुतः, मोहकमसिंहस्य लुण्टाकराजभृत्यसंबन्धिनी न कापि वाञ्छा न च कश्चित्प्रयत्न आसीत् ॥ इति प्रहर्षणप्रकरणम् ॥ ४२ ॥

## भाविकम् ॥

भू सत्तायामित्यस्माद्भावशब्दो निष्पन्नः । सत्ता तु स्थितिः। भावशब्दात् "रक्षति ।४।४।३३" इति सूत्राट्ठक् । ठस्येकादेशे भाविकशब्दसिद्धिः । तथा च भावं स्थितिं रक्षतीति भाविकम् ॥ रक्षणं तु वस्तुनः स्थितेर्याथातथ्येन रक्षणम् । वर्तमानस्थितिस्तु बुद्धौ यथातथमवतिष्ठत इति तद्रक्षाया नावश्यकत्वम् । भूतस्थितिर्बुद्धेरपयाति, भविष्यत्स्थितिश्च बुद्धौ नायातीत्युभयविधस्थितिरक्षाकरणेऽत्र रूढिः । तथा च भूत-

भाविनोर्भावयोर्बुद्धौ वर्तमानवत्करणं भाविकमिति भावः ॥

"प्रत्यक्षीकरणं बुद्धौ भावयोर्भूतभाविनोः ॥
भाविकाख्यो ह्यलंकारः प्रोक्तो मरुनरेश्वर! ॥१॥

यथा—

शिप्रातटेऽवन्तिकायां याति राष्ट्रवरेषु यः ॥
तच्चित्ते दृश्यतेऽद्यापि यशवन्तस्य सङ्गरः ॥१॥

शिप्रातटे राष्ट्रवराणां पूर्वयशवन्तसिंहकृतभूतकालिकयुद्धं प्रत्यक्षं भवति ॥

यथा वा—

यत्र यत्र स्थितो दृष्टो माधवो यमुनातटे ॥
तत्र तत्र स्थले चित्तं तदेव सखि! जायते ॥१॥

यथा वा—

सर्दाराख्यकुमारस्य यशवन्तमहीपतेः ॥
अद्यैव दृश्यते भावि राज्यरक्षणकौशलम् ॥१॥

अत्र महाराजकुमारसरदारसिंहस्य भविष्यत्स्थितिर्मरुनरनारीणां वर्तमानवत्प्रत्यक्षा भवति ॥

चन्द्रालोके इदं लक्षणम्—

"भाविकं भूतभाव्यार्थसाक्षात्कारस्य वर्णनम् ॥

इदं लक्षणं नामार्थानुसारि ॥ इति भाविकप्रकरणम् ॥४३॥

# भ्रान्तिः ॥

---

भ्रान्तिशब्दार्थे चिन्तामणिकोषकारः "भ्रान्तिरतस्मिंस्तज्ज्ञाने" इत्याह ॥

भ्रान्तेः स्वरूपं राजेन्द्रान्यथाज्ञानं प्रकीर्तितम् ॥
करोतीदं महाराज! भूषणं निपुणः कविः ॥ १ ॥

यथा—

यशवन्तक्ष्मापराज्ये भवन्ति बहुला मखाः ॥
धूमवृद्ध्या न याचन्ते पयोदानपि चातकाः ॥१॥

यथा वा—

वल्लालक्षोणिपाल! त्वदहितनगरे संचरन्ती किराती
कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशङ्कां करोति ॥
दत्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्कां तनोति॥१॥

चन्द्रालोके इदं लक्षणम्—

"स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयम्॥"इति ॥

जयदेवोऽप्यस्यालंकारस्य नामैव लक्षणमाह ॥ इति भ्रान्तिप्रकरणम् ॥ ४४ ॥

# मिथ्याध्यवसितिः ॥

मिथ्याशब्दार्थोऽसदिति । अध्यवसितशब्दार्थो निश्चयः - "अध्यवसायो निश्चये" इति चिन्तामणिः ॥ अध्यवसायोऽध्यवसितिश्चेत्यनर्थान्तरम् ॥ मिथ्यार्थेनाध्यवसितिर्मिथ्याध्यवसितिः ॥ मिथ्यार्थेन सत्यस्यापि निश्चयो भवति । यथा मिथ्याजगता परब्रह्मणः सत्यत्वं निश्चीयते। काचनिर्मितमणिर्मिथ्यामणिः । तं समीपे कृत्वा सत्यमणेर्निश्चयः क्रियते। इत्यादि ॥ अन्यत्रातिव्याप्तिवारणार्थमिह मिथ्यार्थे रूढिः । एवं च मिथ्यार्थेन मिथ्यार्थस्य निश्चयो मिथ्याध्यवसितिरलंकारः ॥

मिथ्यार्थेन भवेद्यत्र मिथ्यात्वस्य विनिश्चयः ॥
मिथ्याध्यवसितिस्तत्र ज्ञेया मरुनराधिप! ॥ १ ॥

यथा–

अस्य श्रीयशवन्तसिंहनृपतेर्लोकेऽधुना दुर्यशो
वन्ध्यायास्तनयोऽलिखन्मृगतृषामस्याऽन्तरिचे दले ॥
लेखन्या शशशृङ्गतो रचितया मूकः पठत्यादरा–
दन्धः पश्यति तच्छृणोति बधिरः कूर्मीपयोब्धेस्तटे ॥१॥

जगति राजराजेश्वरापयशसः सर्वथाऽभावान्मिथ्यात्वम् । तस्यात्र कविना वन्ध्यातनयादिमिथ्यार्थैर्निश्चयः कारितः ॥ उक्तापयशसो मिथ्यात्वनिश्चयश्च वन्ध्यातनयादिमिथ्यार्थैर्जात इत्युक्तमिथ्यार्थस्यालंकारत्वम् ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् ॥
मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् ॥"

मम तु मतं, अत्रोक्तापयशसो वेश्यावशीकारस्य च मिथ्यात्वं स्वतःसिद्धम्। न ह्यत्र तस्य वन्ध्यातनयादिरूपेण खपुष्पमालाधारणरूपेण च मिथ्यार्थेन सिद्धीकरणम् किं तूक्तार्थयोर्मिथ्यात्वस्य निश्चायनम्। अत एव धुरंधरोऽस्य मिथ्याध्यवसितिरिति नामाह। न तु मिथ्यासिद्धिरिति। इदं लक्षणं स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम्॥ इति मिथ्याध्यवसितिप्रकरणम्॥ ४५॥

## मिलितम्॥

मिलितशब्दार्थो मिश्रणम्। "मिलितं मिश्रणे" इति चिन्तामणिः॥ यथा वस्तुनो भेदो न लक्ष्येत तथाविधं मिश्रणं मिलितालंकारः॥ तच्च मिश्रणं द्विविधम्। तत्र प्रथमं तु यत्र सर्वथा भेदो न लक्ष्येत तन्नीरक्षीरन्यायेन मिश्रणम्। द्वितीयं च मुक्काराशौ तत्सदृशमुक्तामिश्रणे विशेषतया भेदो न लक्ष्येत तन्मुक्तान्यायेन मिश्रणम्॥

**यदि भेदो न लक्ष्येत तथा वै वस्तुमिश्रणम्॥
मिलितालंकृतिश्चासौ द्विविधा मनुजेश्वर! ॥१॥**

अत्र सादृश्यं निमित्तमर्थसिद्धम्॥

क्रमेण यथा—

त्वदीययशसा लोके व्याप्ते मरुपुरंदर! ॥
गवेषयति कैलासं शंकरस्तं च पार्वती ॥१॥

यथा वा—

सवर्णसमगन्धेषु मृदङ्गेषु तव प्रिये! ॥
दृशानि स्थलपद्मस्य न लक्ष्यन्ते कथंचन ॥२॥

उक्तोदाहरणयोर्नीरक्षीरन्यायेन मिश्रणम् ॥

अहो भीमराणाः पुरे ते भवानीं
महत्युत्सवे चैत्रिके मासि गौर्याः ॥
गिरीशो भ्रमन्नेष उच्चैःस्वरेण
जनान्पृच्छति ह्यासु का मेऽत्र गौरी ॥ १ ॥

गौरीप्रतिमागणे गौरी विशेषतया न लक्षितेतीह मुक्तान्यायेन मिश्रणम् ॥

चन्द्रालोके इदं लक्षणम्—

"मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते ।" इति ॥

उक्तमीलितलक्षणे एवकारकथनाज्जयदेवमते सादृश्याद्वस्तूनां सर्वथा भेदेऽलक्ष्यमाणे मीलितालंकार इति स्पष्टम् ॥ उक्तलक्षणं मिलितस्य द्वितीयप्रकारेऽव्याप्तम् ॥ अर्वाचीनैर्मिलितस्थाने मीलितमिति दीर्घाद्युपदिष्टम् । तन्न संभवति ।

मीलितशब्दस्य संकुचितार्थकत्वात् ॥ " मीलितः, मुद्रिते । संकुचिते । निद्राणे " इति चिन्तामणिः ॥ अस्यालंकारस्य स्वरूपं तूक्तन्यायद्वयेन मिश्रणम् । न तु संकुचितत्वम् । तत उक्तनामासंभवदोषग्रस्तम् ॥ इति मिलितप्रकरणम् ॥ ४६ ॥

# मिषम् ॥

मिषशब्दार्थः कपटम् । " मिषं व्याजे " इति चिन्तामणिः ॥ भोजमहाराजः सरस्वतीकण्ठाभरणे इममलंकारमाह ॥

**अलंकारो मिषं तत्र यत्रास्ति मिषवर्णनम् ।**
**ऋजुचित्ततया नैनं जानीषे मरुवल्लभ! ॥ १ ॥**

यथा—

आच्छिद्य वित्तं धरणीं च देशा-
न्निःसारिता ये भवताऽरयस्ते ॥
ते स्वामिधर्मस्य मिषेण सेवां
कुर्वन्त्यशक्ता यशवन्तसिंह! ॥ १ ॥

अत्र शत्रवोऽशक्ततया स्वामिधर्ममिषेण राजराजेश्वरयशवन्तसिंहस्य चरणं सेवन्ते ॥

यथा वा—

रविं कुमारः सरदारसिंहः

प्रतापतो जेष्यति सन्युवाऽयम् ॥
इतीव भूषामणिभामिषेण
भानोः करा अस्य पदौ स्पृशन्ति ॥

अत्र महाराजकुमारसरदारसिंहस्य भूषणरत्नकान्तिस्तं-स्य पादयोः पतति। तत्र कवेरुत्प्रेक्षणम्। परं तु मिषस्य प्राधान्यान्मिषालंकारः ॥ यदा कापुरुषा एवं जानीयुरस्मत्स्वामिनममुको जेष्यतीति तदा प्रथमत एव ते केनचिन्मिषेण तं प्रसादयन्तीति लोकरीतिः। उक्तदशायामपरस्य मिषेण प्रसादने प्रयोजनं तु स्वस्वामिनो विदितं न भवेदिति ॥ कविप्रतिभोत्थापितं मिषमिदम् ॥ इति मिषप्रकरणम् ॥ ४७ ॥

## ॥ मुद्रा ॥

स्वपरिचयप्रयोजनेन निजनाम्नाऽङ्किता स्वस्य चिह्नेन चिह्निता वा मुद्रिका मुद्रापदवाच्या ॥ "मुद्रा प्रत्ययकारिणाम् । छाप इति भाषाप्रसिद्धायाम् ॥" इति चिन्तामणिः ॥ सा च मुद्रा प्रायः पत्रोपरि क्रियते । तां दृष्ट्वैव तत्पत्रपठनात्पूर्वमेवेदं ज्ञायते इदममुकस्य पत्रमिति ॥ उक्तलोकमुद्रान्यायेन धुरंधरोऽमुमलंकारमङ्गीचकार ॥ यत्र कस्यचिद्वृत्तान्तस्य श्रवणदर्शनपठनात्प्रागेव केनचिदुक्तवृत्तान्तसंबन्धिस्वल्पवचनेनोक्तवृत्तान्तस्य परिज्ञानं तत्र मुद्रालंकारः।यथा यशवन्तयशोभूषण- यशवन्तभूषणग्रन्थयोः श्रवणपठनात्पूर्वमेवो-

कनाममात्रेणेदं विज्ञायते, उक्तग्रन्थयो राजराजेश्वरयश-वन्तसिंहस्य यशोमया अलंकाराः प्रतिपादिता इति ॥

मुद्रान्यायो भवेद्यत्र तत्र मुद्राख्यभूषणम् ॥
मुद्रया ज्ञायते राजन्नाज्ञापत्रं यथा तव ॥ १ ॥

यथा—

मरुभूपाल! भवतश्चरणं मानसं सरः ।
मनोमरालो ह्यनिशं ममाऽसावभिकाङ्क्षति ॥

दोहाच्छन्दसः प्रस्तारे एका मरालजातिरपि विद्यते । चतुर्दशगुरुको विंशतिलघुको मरालः ॥ दोहागताखिलगुरुलघुगणने गणविचारे चेदं विज्ञायते, उक्तदोहा मरालजातीयेति ॥ इह हंसवाचिमरालशब्दश्लेषसामर्थ्यादस्य श्रवणसमकालमेव च्छन्दोविदा ज्ञायते इदं मरालजातीयं दोहाच्छन्द इति ॥

यथा वा—

अस्य श्रीयशवन्तसिंहनृपतेः शौर्योदधेः कानने
मातङ्गैर्मदवर्षिभिर्गिरिवरक्षेपक्षमैः सैरिभैः ॥
घोणोद्यत्पवनप्रधूतवसुधैर्मत्तैर्महासूकरै-
र्वातातिक्रमकैर्मृगैर्विजयते शार्दूलविक्रीडितम् ॥१॥

अत्रोक्तपद्यश्रवणमात्रेण च्छन्दोविदेदं विज्ञायते, "सूर्याश्वैर्मसजस्तताः सगुरवः"(*)इति लक्षणलक्षितं शार्दूलवि-

(*) शार्दूलविक्रीडिते द्वादशभिः सप्तभिश्च यतिः, म-स-ज-स-त-तगणाः, एकश्च गुरुरित्येते भवन्ति ॥

क्रीडितजातीयं छन्द इति ॥

यथा वा—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ॥
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥१ ॥

अनर्घराघवीयं पद्यमिदम् ॥ रामचरित्रसंबन्धिनाटकप्रयोगकारिणा सूत्रधारेण रङ्गभूमावागत्य प्रथममिदं नीतिवचनमुपदिष्टम् । अस्य श्रवणमात्रेण सामाजिकानां पूर्वमेवेदं विज्ञातं भवति, दाशरथिर्वानरसेनासाहाय्येन रावणानुजविभीषणस्य रावणपरित्यागपूर्वकं स्वपक्षपातित्वेन च लङ्कामजयदितिविषयं रामचरित्रसंबन्धिनाटकं भविष्यतीति ॥

चन्द्रालोके इदं लक्षणम्—

"सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ॥ इति ॥

मम तु मतं, अस्मिँल्लक्षणे पूर्वोदाहरणानुसारेण कृतस्य पदनियमस्य "यान्ति न्याय—" इत्युदाहरणेऽव्याप्तिः ॥ इहार्थस्य प्रकृतार्थपरायणत्वात ॥ इति मुद्राप्रकरणम् ॥ ४८ ॥

## रत्नावली ॥

केनचित्समुच्चयाद्विलक्षणो मुक्तामालान्यायेन मालाख्योऽलंकारः स्वीकृतः। तस्य तूपमारूपकहेत्वाद्यलंकारेषु मालोपमारूपकमालाकारणमालेत्यादिप्रकाररूपतयाऽन्तर्भावान्नस्व-

तन्त्रतयाऽलंकारान्तरत्वम् ॥ कश्चिच्छुरंधरो मालालंकारसद्विलक्षणं रत्नावल्यलंकारं मन्यते स्म । लोके मुक्तामाला तु केवलं मुक्तामय्येव भवति । तत्र सर्वा अपि मुक्ताः सजातीया भवन्ति । मुक्तामाणिक्यवजूगारुत्मतादिमेलनेन लोके रत्नमालापि भवति । सा च मुक्तामालातः सवर्था विलक्षणा । मुक्तामाणिक्यादीनां सर्वेषां रत्नसंज्ञास्तीति सजातीयतया रत्नमालेत्युच्यते। वस्तुतस्तु मुक्तामाणिक्यादीनां विजातीयतया विजातीयमालात्वाद्विलक्षणा ॥ आवलिः पङ्क्तिः श्रेणिर्माला चेतिपर्यायान्तराणि ॥ रत्नानामावली रत्नावली ॥

"रत्नावलीव यत्रार्थावली मरुमहेश्वर! ॥
भवेद्रत्नावली तत्रालंकारो धुर्यसंमतः ॥ १"॥

यथा—

वङ्कथा किं क्रियते हृद्ये चोत्तमगतिं निधेहि त्वम् ॥
विज्ञातो गुरुगर्वो जगता सन्मानकारणाद्य ॥ १ ॥

मरुधराधीशराजराजेश्वरमानसिंहकृतभाषापद्यानुवादोऽयम् ॥

अत्र वङ्कादिशब्दानां समीपतया वंङ्कशब्दस्याभिधाया वक्रतायाम्, उत्तमशब्दस्याभिधाया उत्तमतायाम्, गर्वशब्दस्याभिधाया दर्पे, सन्मानशब्दस्य चाभिधायाः पूजायां नियमने सति राजराजेश्वरमानसिंहस्य वङ्कादीनां च सेव्यसेवकभावसंबन्धवैलक्षण्यद्वारा व्यञ्जनया वङ्कव्युत्तमचन्द्रभाषाप्रसिद्धगर्वपदवाच्यगुमाननामकानां राजराजेश्वरमान-

सिंहतिदुषामावली प्रतीयते। एते त्रयो विद्वत्तया सजातीयाः, परं तु वाङ्कीदासश्चारणजातीयः, उत्तमचन्द्रो भण्डारीत्युपाधिधारी वैश्यजातीयः, गुमानाख्यः पुष्टिकरजातीयो ब्राह्मण इति विजातीयाः। एवं रत्नावलीन्यायोऽत्र घटते। नायिकापक्षे, मानमोचनोपायमाचरन्त्याः सख्या नायिकां प्रतीयमुक्तिः। त्वया वक्रा वार्ता किमिति क्रियते। चित्ते उत्तमा गतिं धारय। अधुना प्रियकृतसन्मानाद्धेतोस्तव महान्दर्पो जगता विज्ञातः। मानं मुञ्च॥ मानमोचनोपाये प्रियकृतसन्मानं तु पादपतनादिरूपो विनयः॥ विद्वत्पक्षे, वङ्कूकवेः कथा किं क्रियते। सर्वातिशायकत्वात्। तथैवोत्तमचन्द्रामात्यस्य रीतिं जानीहि। तथैव सन्मानकारणात्, यशस्तमानसिंहनृपाश्रयाद्गुमानगुरुर्जगता विज्ञातः। अयं गुमानाख्योऽनेकाञ्छिष्यान्पाठयति स्मेतिगुरुगुमानसंज्ञया प्रथितोऽभवत्॥ ननु भवता यशवन्तभूषणनाम्नः संगतिकरणार्थमलंकाराणां प्रथमोदाहरणं सर्वत्र यशवन्तसिंहयशोविषयमुपदिष्टमिह तु कक्रमभङ्ग इति चेन्न। यशवन्तसिंहपितृपितामहादियशस्तु तदीयमेव यशः॥

यथा वा—

रत्याप्तप्रियलाञ्छने कठिनताऽऽवासे रसाऽऽलिङ्गिते
प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे॥
कोकस्पर्द्धिनि भोगभाजि जनितानङ्गे-खलीनोन्मुखे
भाति श्रीरमणावतारदशकं बालि! भवत्याः स्तने।१।

अत्र कुचपक्षे, रतिकालप्राप्तप्रियकृतनखचिह्नविशिष्टम् । काठिन्यविशिष्टम् । शृङ्गाररसयुक्तम् । कुचाग्रशृङ्गाररसयोः श्यामवर्णत्वात्कुचाग्रे शृङ्गाररसस्य समारोपः ॥ प्रकृष्टानन्दजनकम् । क्रमशो वृद्धिमत् । औन्नत्यविषये पर्वतगौरवहरम् । चक्रवाकाकारम् । संभोगयुक्तम् । मन्मथोद्बोधकम् । आकाशोन्मुखं च ॥ दशावतारपक्षे, रत्याप्तप्रियस्य मदनस्य लाञ्छनं मत्स्यस्तद्रूपो मत्स्यावतारः । कठिनतावासः कमठमूर्तिः । रसया पृथिव्याऽऽलिङ्गितो वराहः । प्रह्लादैकप्रीतिमान्नृसिंहः । क्रमशो वृद्धिमान्वामनः । भूभृतां राज्ञां गौरवहर्ता भार्गवः । कोकवद्विरहदुःखी दाशरथिः । भोगस्य स्रक्चन्दनादेरनुभोक्ता बलदेवः । जनितानङ्गः प्रद्युम्नजनको वासुदेवः । प्रद्युम्नस्य मदनावतारत्वात्। खमश्वमुखबिलं तस्मिँल्लीनः खलीनो वल्गा, तस्मिन्नुन्मुख उद्युक्तः कल्क्यवतारः । कल्किः कलेरन्ते हयमारुह्यासाधुदमनं करिष्यतीति पुराणेषु प्रसिद्धम् ॥ अत्रेश्वरावतारत्वेन सर्वे सजातीयाः । परंतु रामचन्द्रः सूर्यवंश्यत्वेन कृष्णश्चन्द्रवंश्यत्वेनान्ये च मत्स्यादिरूपेण विजातीया एव। अत्र कुचवर्णने दशावताराणां श्लेषोपमा रत्नावलीव रम्येति रत्नावल्यलंकारः ॥ श्लेषसाधर्म्येणोपमायां श्लेषोपमा स्वीकृता । अत्र मत्स्यावतारादीनां रत्याप्तप्रियलाञ्छनत्वादिश्लेषमात्रेण साधर्म्यम् । प्रथमोदाहरणे रत्नावल्यलंकारो व्यङ्ग्यः । उत्तरोदाहरणे वाच्यः । उभयत्र श्लेषस्य संकीर्णत्वम् ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः ॥"

यथा—

चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते! ॥

कुवलयानन्दकारः "अत्र चतुरास्यादिपदैर्वर्णनीयस्य ब्रह्मविष्णुरुद्रात्मता प्रतीयत इति प्रसिद्धसहपाठानां क्रमेण निवेशनं रत्नावली " इति लक्षणं घटयामास ॥ मम तु मतं, उक्तलक्षणे क्रमालंकारस्य चमत्कारः प्रधानभूत इति चन्द्रालोकस्य लक्षणं क्रमपरायणम् । रत्नावलीभूषणस्वरूपाबोधकमित्यसंभवदोषग्रस्तम् ॥ किं च चन्द्रालोकस्योक्तोदाहरणे तादृशविजातीयताया अभावान्न रत्नावल्यलंकारः ॥ न च वाच्यं, ब्रह्मादीनां निराकारब्रह्मणो भिन्नभिन्नस्वरूपतया तेषु सजातीयता विजातीयता चोभयमपि विद्यत इति ॥ यद्यपि रामकृष्णादयोऽवतारास्तस्मादेव विष्णोः प्रादुर्भूताः । तथापि रामचन्द्रस्य सूर्यवंश्यत्वेन कृष्णचन्द्रस्य चन्द्रवंश्यत्वेन विजातीयत्वम् ॥ तथैव मत्स्यकच्छपादीनामपि । ब्रह्मादीनां तु न तथा विजातीयत्वम् ॥ रत्नावल्यलंकारस्वरूपं तु समुच्चयात्क्रमान्मालायाश्च विलक्षणं नामार्थानुसारिमदुक्तव्यवस्थायामेव स्पष्टम् ॥ इति रत्नावलीप्रकरणम् ॥ ४६ ॥

## रूपकम् ॥

रूपशब्दार्थश्चक्षुर्ग्राह्यो गुणः स्वभावो मनोहराकृतिश्च ।

"रूपं चक्षुर्ग्राह्ये गुणे । स्वभावे । मनोहराकृतौ" इति चिन्तामणिः ॥ रूपशब्दात् "इवे प्रतिकृतौ" इति सदृशप्रतिकृतौ कन्प्रत्ययः । प्रतिकृतिस्तृणकाष्ठमृदादिनिर्मिता प्रतिमा। यथा चित्रलिखितस्तृणकाष्ठमृदादिनिर्मितो वाऽश्वोऽश्वक इत्युच्यते ॥ रूपमिव प्रतिकृती रूपकम् ॥ नाटकेऽपि नटीनटौ सीतारामादिसदृशं रूपं धारयन्तीति नाटकस्यापि रूपकमिति नामान्तरम् । "रूपकं नाटके" इति चिन्तामणिः ॥ अत्र नाटकन्यायेन धुरंधरो रूपकालंकारमङ्गीचकार ॥ विधिसृष्टिनाटकं कायिकम् । कविसृष्टेर्वाङ्मयत्वादत्र वाचिकं रूपकम् । वाचिकत्वाच्चेह केवलस्वभावस्यापि रूपकमिष्यते ॥ यथा "नौका मे प्रतिभा-" इति वक्ष्यमाणोदाहरणे "नौका मे प्रतिभा, सुब्रह्मण्यमरुत्" इत्यत्र रूपरहितपवनप्रतिभावस्तुनोः शीलमात्रेण रूपकम् ॥ सर्वतोमुखत्वं प्रतिभायाः स्वभावः । अत्र नौकाप्रेरणरूपः पवनस्य स्वभावो विवक्षितः ॥ केवलगुणस्यार्थाद्वर्णस्य रूपकं न भवति । प्रतिमालंकारे तु मुख्यस्य स्थाने प्रतिनिधिभूतस्यापरवस्तुनः स्थापनम् । न तु रूपकविवक्षा । चतुर्भुजादिस्वरूपस्य विष्णोः स्थाने गोलाकारः शालिग्रामोऽपि स्थाप्यते ॥

**रूपेण सदृशं रूपं क्रियते यत्र कस्यचित् ॥**
**नाटकन्यायतस्तत्र रूपकं बुध्यतां नृप! ॥१॥**

यथा—

यशवन्तयशोवल्ल्या मूलं शेषफणावलिः ॥

तन्तवो दिक्करिरदाः पुष्पं ताराः फलं शशी ॥१॥

यथा वा—

नौका मे प्रतिभाऽस्यं पारगमने साहित्यपाथोनिधेः
श्रीव्यासो भरतश्च भोजप्रमुखाः कर्णधकैवर्तकाः ॥
राणाश्रीफतसिंह! संप्रति परेशेन त्वया प्रेरितः
सुब्रह्मण्यमरुद्बलौ सुखमतः पारं गतोऽस्मि प्रभो! ॥

कर्णं धरतीति कर्णधः । कर्णस्त्वरित्रापरपर्यायो नौकापृष्ठलग्नः कर्णाकारः काष्ठविशेषः । येन वाञ्छितादिगभिमुखं नौका प्रवर्त्यते ॥ जलक्षेपणेन नौकाप्रवर्तकः कैवर्तकः । "खेवटिया" इति लोकभाषा ॥ "कैवर्तकः केशवः" इति भगवद्गीतायाम् ॥ इदमुदाहरणद्वयं परंपरितोपमावत्परंपरितरूपकविषयम् ॥

यथा वा—

दाता दयालुः सरलस्वभावो
दिगन्तसंक्रान्तयशःसमूहः ॥
महेश्वरोऽयं यशवन्तसिंह
आकल्पमेतां धरणीं प्रशास्तु ॥ १ ॥

इदं शुद्धरूपकम् ॥ उक्तोदाहरणानि कविकल्पितरूपकविषयाणि ॥

वास्तवरूपकं यथा—

राधावेषो हरिरितो हरिवेषा च राधिका ॥
अयत्नसुलभं प्राप्तौ विपरीतरतेः सुखम् ॥ १ ॥

अमनोहराकृते रूपकस्योपलक्षणेन संग्रहो भवति ॥

चन्द्रालोके इदं लक्षणम्—

"विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।
रूपकं तत्त्रिधाऽऽधिक्यन्यूनत्वानुभयोक्तिभिः॥१॥"इति॥

क्रमेणोदाहरणानि—

शंभुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ॥
अयमास्ते विना शंभुस्तार्तीयीकं विलोचनम् ॥
अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ॥

इमान्यभेदरूपकोदाहरणानि॥समदृष्टिताऽऽधिक्यम्। तार्तीयीकं विलोचनं विनेति न्यूनत्वम्। तृतीयोदाहरणेऽधिकन्यूनत्वयोरुभयोरप्यभावात्समत्वम् ॥

अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥
साध्वीयमपरा लक्ष्मीरसुधासागरोदिता॥
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥

इमानि ताद्रूप्यरूपकोदाहरणानि ॥ निष्कलङ्कत्वमाधिक्यम्। सुधासागरोदितत्वाभावो न्यूनत्वम्। तृतीयोदाहरणेऽधिकन्यूनत्वयोरुभयोरप्यनुक्तेः समत्वम् ॥ रूपकस्वारस्यं तु

कन्प्रत्ययद्योधितनाटकन्यायेनानुकरणे । न स्वयं नटो राम एवेत्यभेदे । न चायं नटोऽपरो राम इति तद्रूपतायाम् । धुरंधराभिप्रायापरिज्ञानात्प्रथममेतादृशलक्षणनिर्मात्राऽर्वाचीनेन रूपकेत्यत्र स्वार्थे कप्रत्ययो विज्ञातः । यथा दीपशब्दात्स्वार्थे कप्रत्यये दीपकशब्दः । ततश्च रूपमेव रूपकमिति व्युत्पत्त्या रूपकालंकारस्य रूपमात्रं स्वरूपं ज्ञात्वोक्तलक्षणमभिहितम् । तत्तु प्रमादः ॥ पुनश्च रूपकस्याधिकन्यूनसमेतिप्रकारकथनं तु महाप्रमादः ॥ यथावद्रूपकरण एव रूपकस्य श्लाघ्यत्वात् । आधिक्ये न्यूनतायां च प्रत्युत रूपकस्य भ्रंशात् । उपमेयाधिक्यं तु व्यतिरेकालंकारस्य विषयः । वर्णनीयोपमेयस्य न्यूनत्वं च सर्वथाऽनिष्टमेव । "साध्वीयमपरा लक्ष्मीः—" ईदृशोदाहरणेपूपमेयस्य न्यूनत्वप्रतिपादनं त्वेकगुणहानौ शेपगुणदार्ढ्याद्वक्ष्यमाणविशेषोक्त्यलंकारः ॥ अन्यथा तु दूपणम् ॥ अभेदेन रञ्जनं त्वभेदालंकारः । न च रूपकेऽभेदः । ताद्रूप्येण रञ्जनं तु लक्ष्योपमाऽलंकारः । मम तु मतं, उभयमपीदं न रूपकस्वरूपबोधकम् ॥ अर्वाचीनमतोक्तरूपकनाम्न उक्तलक्षणस्य च रूपकस्य साक्षात्स्वरूपाबोधकतयाऽसंभवदोषः ॥ अतिव्याप्तिदोपस्वरूपं तु लक्ष्ये व्याप्तं सदन्यत्रापि व्याप्नोतीति । उक्तलक्षणस्य रूपकाव्याप्तत्वेऽपि रूपकादन्यत्राभेदे लक्ष्योपमायां च व्यापनादुपलक्षणेनातिव्याप्तिदोषोऽपि ॥ एवमन्यलक्षणेष्वपि ज्ञेयम् ॥ इति रूपकप्रकरणम् ॥ ५० ॥

# लेशः ॥

अत्र लेशशब्दार्थः कणः। कणस्त्वंशः। अंशश्च वस्तुन एकदेशः। "लेशः कणे। कणः धान्यांशे। अंशः वस्तुन एकदेशे" इति चिन्तामणिः॥ तण्डुलो धान्यविशेषः। तस्यैकः कणस्तस्यांशः। लेशो लव इत्यनर्थान्तरम्। "लवः लेशे" इति चिन्तामणिः॥ दण्ड्याचार्येणालंकारगणनायां लेशो लवनाम्ना भणितः। "हेतुः सूक्ष्मो लवः क्रमः" इति॥ "भगवद्गीता किंचिदधीता गङ्गाजललवकणिका पीता" इति गोविन्दाष्टके॥

## चमत्कारिणि लेशे तु लेशालंकृतिरिष्यते॥

यथा—

खनिरत्नाश्वनराणां श्रेष्ठानां यो निरामयश्च मरुः॥
तत्र त्यामल्पजलं मरस्य भूरस्य दूरं कूपस्य॥७॥

अत्र मरुदेशस्य गुणसमुदाये एको निर्जलतादोषो लेशरूपः॥

यथा वा—

अद्रीन्क्षालयसि स्म मेघ! पयसा सर्वां महीं चासिचश्चक्रे चाङ्कुरितां दलैः क्षितिरुहःसंछादिता जीविताः॥

मण्डूकाः शिखिनश्च नृत्यविषये संयोजिता नो हता
तृष्णा चातककस्य येन गमिता मासास्त्वदाशा-
वशात् ॥ १ ॥

अत्र मेघस्य परोपकारगुणसमुदाये तादृशचातकं प्रत्येक: कृतघ्नतादोषो लेशरूपः ॥

यथा वा—

निर्दयो निस्त्रपोऽसत्यश्छलधामाथ चञ्चलः ॥
हरिरस्तु तथाप्येष विदग्धो मानमोचने ॥ १ ॥

अत्र नायकदोषसमुदाये एको मानमोचनचातुर्यगुणो लेशरूपः ॥

यथा वा—

उदारत्वेऽद्वितीयोऽपि विवेकरहितो हरः ॥
शङ्खवादनमात्रेण परितोषं समेत्यसौ ॥ १ ॥

अत्र हरस्यानिर्वचनीयोदारत्वस्तुतौ विवेकरहिततारूपो निन्दालेशः ॥ परंपरागतं लेशस्येदमुदाहरणम्—

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ॥
शुक! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥१॥

शुकस्य मधुरभाषणरूपमहागुणे पञ्जरबन्धदोषो लेशरूपः॥ अन्यविहङ्गानां मधुरभाषणाभावरूपमहादोषे स्वच्छन्दचारित्व-

गुणो लेशरूपः ॥ अस्यालंकारस्य स्वारस्यापरिज्ञानादर्वाचीना उक्तोदाहरणे दोषगुणयोर्गुणदोषकल्पनमज्ञासिषुः ॥

चन्द्रालोके इदं लक्षणम्—

" लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ॥ "

इति ॥

तत्र " अखिलेषु " इत्येव चोदाहृतम् ॥ अत्रास्य मतानुसारेण गुणस्य दोषत्वेन दोषस्य च गुणत्वेन कल्पने तु परिणामालंकारः स्यात् ॥ गुणेन दोषो दोषेण च गुणो जात इत्यङ्गीकारे विचित्रालंकारो भवेत् ॥ उक्तलक्षणं स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति लेशप्रकरणम् ॥ ५१ ॥

# लोकोक्तिः ॥

लोकोक्तिस्तु लोकप्रवादः ॥

**यदा प्रसिद्धा लोकोक्तिः काव्यमध्ये प्रदृश्यते ॥**
**तदाऽलंकाररूपत्वं धारयेन्मनुजोत्तम! ॥१॥**

यथा—

**अश्वान् केचिद्गजान् केचिद्ग्रामान् विन्दन्ति केचन ॥**
**मरुपात्सरसः सर्वे जलं पात्रप्रमाणतः ॥ १ ॥**

भाग्याधीनलाभविषये " जलं पात्रप्रमाणतः " इति लोकोक्तिः ॥ अत्रोपमातो लोकोक्तेः प्रधानत्वम् ॥

यथा वा—

न कदाचिदपि प्रियः परः
स्वस्य स्यादिति जानती सती ॥
व्यदधामनुरागकं हरौ
द्योतेऽपां वत दुग्धमक्षिकाम् ॥ १ ॥

जानतः स्खलनविषये "दुग्धमक्षिका" इति लोकोक्तिः ॥ अस्मिन्पद्ये लोकोक्तिर्यथावदुपदिष्टा । अस्या एव लोकोक्तेः "पयोवर्वणा" इत्यनुवादे तु लोकोक्तिस्वारस्याभावः । अत्र सहृदयहृदयमेव साक्षि ॥ "वर्वणा मक्षिका नीला" इत्यमरः ॥

चन्द्रालोके इदं लक्षणम्---

"लोकप्रवादानुकृतिर्लोकोक्तिरिति कथ्यते ॥" इति ॥

अनुकृतिस्त्वनुवादः ॥ साक्षाल्लोकप्रवादरूपाक्षरेषु लोकोक्तेर्यादृशश्चमत्कारस्तादृशोऽनुवादे नानुभूयते । यथेक्षोश्चर्वणे यादृशो रसानुभवस्तादृशः कुट्टितनिष्कासितरसपाने न भवति ॥ वस्तुनः स्वभावस्य यथावद्वर्णने स्वभावोक्त्यलंकार इव काव्ये लोकोक्त्यक्षराणां यथावदुपदेश एव लोकोक्त्यलंकारः ॥ तत्परिवर्तने तु लोकस्योक्तिरेव न भवति ॥ उक्तलक्षणस्यास्मिन्नलंकारेऽसंभवादसंभवदोषः ॥ इति लोकोक्तिप्रकरणम् ॥ ५२ ॥

## वक्रोक्तिः ॥

---

वक्रीकृतोक्तिर्वक्रोक्तिः ॥ परोक्तेर्वक्रीकरण एव चमत्कारात्परोक्तौ रूढिः ॥

उक्तिर्वक्रीकृताऽन्यस्य वक्रोक्तिर्नाम भूषणम् ॥
श्लेषस्वरविकारादिभेदेनेयमनेकधा ॥१॥

क्रमेण यथा—

तूष्णीं चिन्तयसेऽद्य कस्य चरितं राज्ञः किमिन्दोर्नहि
भूभृच्छ्रेष्ठतमस्य किं सुरगिरेर्नो राष्ट्रवर्यस्य भोः ॥
किं देशस्य वरस्य नो मरुपते राजद्गुणानां निधे-
र्दातुः श्रीयशवन्तसिंहनृपतेः कीर्तिं मुदा वर्णये ॥१॥

अत्र वक्तुरुक्तौ राजशब्देन नृपः, भूभृच्छ्रेष्ठतमशब्देन भूपालमुकुटः, राष्ट्रवर्यशब्देन राष्ट्रवरजातीयो राजराजेश्वरयशवन्तसिंहो विवक्षितः ॥ परिहासमाचरता श्रोत्रा श्लेषसामर्थ्यात् राजा चन्द्रः, भूभृच्छ्रेष्ठतमो मेरुः, राष्ट्रवर्यो देशोत्तम इत्यर्थं प्रकल्प्य वक्तुरुक्तिर्वक्रीकृतेति वक्रोक्त्यलंकारः ॥

यथा वा—

कश्चिदस्त्यापदो हीनो द्रोहकृन्मरुभूपतेः ॥
कश्चिद्वा संपदो हीनो हितं कृत्वास्य भूपतेः ॥ १ ॥

राजद्रोहिण उक्तिरियम् ॥ राजराजेश्वरस्य द्रोहं विधाय कश्चिद्विपद्विहीनोऽपि विद्यते । हितं कृत्वा च कश्चित्संपद्धीनोऽपि विद्यते इति ॥ तत्र राजभक्तश्रोत्रा स्वरविकारेण काकुरूपेण वक्रीकृतस्वरेणेयमेवोक्तिर्वक्रीकृता । तथाहि, राजराजेश्वरस्य द्रोहं विधाय किं कश्चिद्विपद्विहीनोऽपि विद्यते?

हितं कृत्वा च किं कश्चित्संपद्धीनो विद्यते? नेत्यर्थः ॥

समानविशेषणेन यथा—

भिक्षार्थी स क यातः सुतनु! वलिमखे ताण्डवं क्वाद्य भद्रे!
मन्ये, वृन्दावनान्ते क नु स मृगशिशुर्नैव जाने वराहम्॥
बाले! कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता
लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः

अत्र वक्त्री लक्ष्मीस्तस्या अप्युक्तिर्न सरला। शिवादिसरलनामान्यनुक्त्वा परिहासार्थं भिक्षार्थीत्यादिनाम्नामन्यप्रकारेणोच्चारणात् ॥ अस्यामुक्तौ तु पर्यायोक्तयलंकारः ॥ अत्र परिहासं कुर्वन्त्या लक्ष्म्योक्तानि "भिक्षार्थी स क यातः, ताण्डवं क्वाद्य" इत्यादीनि शिवविषयाणि विशेषणानि पार्वत्या विष्णुपरतया योजितानीति वक्त्र्या लक्ष्म्या उक्तेर्वक्रीकरणाद्वक्रोक्त्यलंकारः ॥ समानविशेषणे श्लेषाभावस्तु श्लेषप्रकरणे दर्शयिष्यते ॥

चन्द्रालोके इदं लक्षणम्—

"वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम् ॥"

अस्यालंकारस्य स्वरूपं तु परोक्तेर्वक्रीकरणम्। श्लेषेणान्यार्थकल्पनं तु श्लेषालंकारमात्रम्। काकुनाऽन्यार्थकल्पनं व्यङ्ग्यमात्रम् ॥ न ह्यत्रान्यार्थस्य चमत्कारे पर्यवसानम्। किंतु परस्योक्तेर्वक्रीकरणे चमत्कारः। अत्र श्लेषकाकुसमानवि-

शेषणानि तु वक्रोक्तेः साधनरूपाणि। उक्तलक्षणस्य समानविशेषणाविषयवक्रोक्तावव्याप्तिश्च ॥ उक्तलक्षणं साक्षात्स्वरूपाबोधकमव्याप्तिदोषग्रस्तं च ॥ इति वक्रोक्तिप्रकरणम् ॥५३॥

## विकल्पः ॥

विकल्पशब्दोऽनेकार्थः । अत्र "इत्थं वा इत्थं" इत्येवंरूपोऽर्थो विवक्षितः ॥ पूर्वयशवन्तसिंहमहाराजो भाषाभूषणेऽस्येदमेव स्वरूपमाह ॥ वेदे यज्ञविषये "व्रीहिभिर्यजेत, यवैर्वा यजेत" इति विकल्पः ॥

आगता मरुसेनेयं वेष्टयन्तीव सर्वतः ॥
धनं धरां वात्मजां वा संधयेऽर्पय सत्वरम् ॥ १ ॥

राजराजेश्वरशत्रुं प्रति कस्यचिदुक्तिरियम्॥एतदृशलौकिकविकल्पस्य तु चमत्कारशून्यतया नालंकारत्वम् ॥ पक्षद्वये परस्परं विरोधे सति विकल्पस्य चमत्कारप्रदतयाऽलंकारत्वमितीह विरोधे रूढिः ॥ अत्र विरोधे न चमत्कारस्य पर्यवसानम् । किं तु विकल्प एवेति तस्यैवालंकारत्वम् ॥

विकल्प इत्थमित्थं वेति स पक्षद्वये नृप! ॥
विरोधे सत्यलंकारस्वरूपत्वमवाप्नुयात् ॥१॥

यथा—

भो भो रिपवो नमयत शिशंसि वा ...

वा ज्यायाः श्रोत्रं रवेण पूरयत ॥१॥

शत्रोर्वशीकारार्थं संधिविग्रहौ मुख्योपायौ । इह पक्षद्वये विरोधाद्विकल्पस्य चमत्कारप्रदतयाऽलंकारत्वम् ॥ अत्र पर्यायोक्त्या संधिविग्रहयोरुक्तत्वात्पर्यायोक्तेः संकीर्णत्वम् ॥

यथा वा—

त्वरां मा कुरु गृध्र! त्वं धीरो भव मनागिह ॥
निवेशये रिपोर्देहं किं वा देहे ममाधुना ॥ १ ॥

अत्र रणाङ्गणागतमनुष्यमांसाभिलाषिणो गृध्रपक्षिण आतिथ्यं तु रणरचयिता योधो रिपुं हत्वा तं तस्मै समर्पयेत्, रिपुहस्तहतो वा स्वयं समर्पितो भवेदिति ॥ इह पक्षद्वये परस्परं विरोधाद्विकल्पस्य चमत्कारकारितयाऽलंकारत्वम् ॥

यथा वा—

पतत्यविरतं वारि नृत्यन्ति च कलापिनः ॥
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥१॥

अत्र वियोगसंबन्धिदुःसहदुःखापाकारि वस्तुद्वयम् । कान्तः कृतान्तो वा । अत्रोक्तवस्तुद्वयस्य परस्परं विरोधाद्विकल्पस्य चमत्कारकारितयाऽलंकारत्वम् ॥ चन्द्रालोके इदं लक्षणम्—

"विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता ॥" इति ॥

मम मते तु, नेदं विकल्पालंकारस्य स्वरूपम् । उक्तलक्षणानुसारेण तु

इतस्त्वभयसिंहाख्यस्ततः सखुलन्दकः ॥
रणे धूनयतः खड्गौ कोऽत्र जेता न निश्चयः ॥

अत्र तुल्यबलयोर्विरोधो विद्यत इतीह विकल्पालंकारो भाव्यः । न चात्र विकल्पालंकारस्य गन्धोऽप्यस्तीत्युक्तलक्षणं विकल्पालंकारस्य स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति विकल्पप्रकरणम् ॥ ५४ ॥

## विकासः ॥

विकासशब्दार्थः प्रसरणम् । "विकासः विसृत्वरे । विसृत्वरः प्रसारिणि" इति चिन्तामणिः ॥ अर्वाचीना विकासं स्वतन्त्रालंकारमाहुः ॥

वर्णनं तु विकासस्य विकासालंकृतिर्मता ॥
यथा विकसति स्वान्तं कवीनां त्वन्मुखेक्षणात् ।१।

यथा—

सरित्प्रवाहैर्गिरिभिरनिरुद्धा च सागरैः ॥
प्रसरत्यनिशं कीर्तिर्यशवन्तमहीपतेः ॥ १ ॥

यथा वा–

प्रियाऽऽगमनसंबद्धां श्रुत्वा वार्तां मनोहराम् ॥
अट्यत्येषाऽङ्गणे फुल्ला न मान्त्यङ्गानि कञ्चुके ॥

"मरौ पयोहारिवधूजनानाम्-" इत्यादिपर्यायालंकारोदाहरणेषु शुद्धपर्यायं कथयन्कुवलयानन्दकारो विकासपर्यायस्येदमुदाहरणमाह-

" बिम्बोष्ठ एव रागस्ते तन्वि! पूर्वमदृश्यत ॥
अधुना हृदयेऽप्येष मृगशावाक्षि! दृश्यते ॥ १ ॥

"अत्र रागस्य पूर्वाधारापरित्यागेनाधारान्तरसंक्रमणमिति विकासपर्यायः" इति च घटयामास ॥ मम तु मतं, पर्यायस्य स्वरूपं तु पूर्वाधारपरित्यागेनाधारान्तरावलम्बनम् । तदेव लोकभाषाप्रसिद्ध "वदली-वारी" इति भवितुमर्हति ॥ विकासस्तु पूर्वाधारापरित्यागेनाधारान्तरे पुष्पन्यायेन प्रसरणम् ॥ अत एवायं पृथगलंकारः ॥ इति विकासप्रकरणम् ।५५।

## विचित्रम् ॥

---

चित्रशब्दार्थोऽद्भुतयुक्त इति ॥ "चित्रः, अद्भुतयुक्ते" इति चिन्तामणिः ॥ अद्भुतमाश्चर्यमिति पर्यायान्तरम् । अलौकिकत्वार्थं धुरंधरो विशेषार्थकं वीत्युपसर्गं योजयामास ॥

विचित्रं वर्णनं राजन्विचित्रालंकृतिः स्मृता ॥

सा च त्वयि महाराज! दृश्यतेऽनेकधा जनैः ॥

यथा—

नवीनाऽतितरां राजन्! विद्यते भवतो गतिः ॥
मरुभूमिपतित्वेऽपि स्वर्णमुक्ताप्रदोऽनिशम् ॥१॥

दण्डयाचार्यभोजमहाराजौ कार्यकारणसंबन्धिवैचित्र्यतायां चित्रहेतुनामकं हेत्वलंकारप्रकारममन्येताम् ॥ केचनासंगत्यतिशयोक्तिप्रकारानङ्गीचक्रुः । केचिच्च षोढाविभावनाऽलंकारं विशेषोक्त्यलंकारं च मेनिरे ॥ ते चालंकारा वक्ष्यमाणान्तर्भावाकृतौ दर्शयिष्यन्ते ॥ अस्माभिस्तूक्तप्रकाराणामलंकाराणां चास्मिन्विचित्रेऽन्तर्भावो विज्ञातः ॥

यथा वा—

उद्धर्तुं सप्तगोत्राणां कुलमेकोत्तरं शतम् ॥
गयास्वचालितयवपिष्टपिण्डं प्रदीयते ॥ १ ॥

*भोजराजादयोऽत्र महाफलार्थं तुच्छप्रयत्नत्वाच्चित्रहेतुं कथयामासुः ।* चन्द्रालोककारादयोऽत्रासमग्रकारणात्कार्योत्पत्तेर्विभावनाया द्वितीयं प्रकारमाहुः ॥

यथा वा—

सर्वस्मिन्न नतं नु तीर्थनिचये दृष्टो न देशोऽखिलो
नाभ्यस्ताः सकलागमा न च पुनर्हस्तेऽपि मौर्वीकिणः ॥
श्लाघन्ते सरदारसिंहमखिला नास्तीदृशोऽन्यो भुवि ।

सोऽयं श्रीयशवन्तसिंहतनयो जीव्यात्समानां शतम्॥१॥

भोजराजोऽत्र दूरभात्विकार्यस्येदानीं भावाद्विदूरकार्यनामकं चित्रहेतुमाह ॥ चन्द्रालोककारादयस्त्वस्मिंस्थले चपलतया कार्यजनेश्चपलातिशयोक्तिनामकमतिशयोक्तिप्रकारमाहुः ॥

यथा वा—

विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥

अत्र कारणात्कार्यस्य दूरदेशवर्तितया महाराजोऽत्र विदूरकार्यनामकं चित्रहेतुप्रकारमाह ॥ चन्द्रालोककारादयस्तु कार्यकारणयोर्भिन्नदेशतयाऽसंगतेः प्रथमप्रकारमाहुः ॥ महाराजश्चित्रहेतूनसंख्यान्मन्यते ॥ तदुक्तम्—"असंख्याश्चित्रहेतवः" इति ॥

यथा वा—

नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥

उन्नतिलाभाय नमनं विपरीतप्रयत्न इति चित्रहेतुत्वम् ॥ उक्तलक्ष्योदाहरणानुसारेण जयदेवो विचित्रस्येदं लक्षणमाह-

"विचित्रं तत्प्रयत्नश्चेद्विपरीतफलेच्छया ॥" इति ॥

अस्य लक्षणस्यान्यत्राव्यापनादव्याप्तिदोषः ॥ इति विचित्रप्रकरणम् ॥ ५६ ॥

# विधिः ॥

लोकविधिष्वलंकारत्वाभावाद्धुरंधरो मीमांसाशास्त्रप्रसिद्ध-विध्यनुसारेण विध्यलंकारमङ्गीचकार ॥ अत्र विधिशब्दार्थो-ऽज्ञातज्ञापनम् । "अज्ञातज्ञापको वेदभागो विधिरिति मीमांसकाः" इति चिन्तामणिः ॥

अज्ञातज्ञापनं यत्र तत्र विध्याख्यभूषणम् ॥

यथा—

पृथ्वि! स्थैर्यमुपैहि शेष! धरणीं यत्नेन संधारय
युग्मं चैतदथो विधारय विभो! त्वं कूर्म! पृष्ठेऽचलः ॥
भो भो दिग्द्विरदाः प्रमादमपहायेमां धरध्वं धरां
सेनाऽसौ यशवन्तसिंहनृपतेर्यानोन्मुखा वर्तते ॥१॥

अत्र राजराजेश्वरापारसेनाया एकतः प्रयाणात्फणिफणा-रूढपृथिव्या एकतो नमनं पृथिव्यादीनामज्ञातमिति तस्य ज्ञापनम् ॥

यथा वा—

देहोऽयं क्षणभङ्गुरः किमिति नानन्देन संयाप्यते
कालोऽयं विभवेन मा मदमुपैहीशं च मा विस्मर ॥
मा भ्रष्टः कुलमार्गतो भव न चान्योक्तं श्रुतौ त्वं कुरु-

रङ्क त्वं त्यज धातृपाणिलिखितं स्यादन्यथा नैव भोः ॥१॥

अत्र देहस्य क्षणभङ्गुरत्वादिकमजानन्तं प्रति ज्ञापनम् ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"सिद्धस्यैव विधानं यत्तदाहुर्विध्यलंकृतिम् ॥"

यथा—

पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत् ॥

इदं परंपरागतं विध्यलंकारोदाहरणम्। अत्र संगतिस्तु कोकिलं प्रति सम्यग्बुध्यमानः कोकिलमजानन्तं मित्रं बोधयत्ययं कोकिल इति ॥ अत्र "कोकिलः कोकिलो भवेत्" इति सिद्धार्थविधानप्रयोजनं तु कोकिलस्य यादृशी स्तुतिः प्रख्याता तादृशस्त्वयं वसन्तर्तौ कलरवोच्चारणावसरे विदितो भविष्यतीति। धुरंधराभिप्रायापरिज्ञानाच्चन्द्रालोककार उक्तलक्षणमाह। इह प्रयोजनं विना स्वतःसिद्धस्य विधानं तु न भूषणम्। अपि तु दूषणम्। उक्तलक्षणस्य पूर्वोक्तोदाहरणयोरव्याप्तेरव्याप्तिदोषः ॥ इति विधिप्रकरणम् ॥ ५७ ॥

## ॥ विनोक्तिः ॥

विना उक्तिर्विनोक्तिः ॥ कचित्कस्यचिद्विनाभावस्य चमत्कारकारित्वे विनोक्त्यलंकारः ॥

ऽत्तीवाद्भुता वारिहरा विलासात् ॥
समीक्ष्य तां सेङ्गितमन्यनार्यो-
ऽन्योन्यं हसन्ति स्म सहस्ततालम् ॥१॥

नह्यत्र घटं विना वर्णनीयनायिकाया हीनत्वम् । न च रम्यत्वम् ॥ किं तु घटस्य विनाभावः पूर्वानुरागिण्या विह्वलतायां चमत्कारमादधाति ॥ अत्राव्याप्तेः ॥ ईदृशविनाभावस्य प्रतिषेधालंकाराद्विलक्षणत्वं चानुभवसिद्धम् ॥ उक्तलक्षणमव्याप्तिदोषग्रस्तम् ॥ इति विनोक्तिप्रकरणम् ॥ ५८ ॥

## विरोधः ॥

दण्ड्याचार्यः स्वप्रबन्धे विरोधालंकारमाह ॥ वैरं विरोध इति नामान्तरम् । "वैरं विरोधो विद्वेषः" इत्यमरः ॥ प्रीतिविरोधौ तु लोके सर्वत्र दृश्येते इतीह विरोधिसंसर्गे रूढिः ॥ तथा च विरोधिसंसर्गो विरोधालंकार इत्यर्थः ॥

राजन्! विरोधिसंसर्गो विरोधो नाम भूषणम् ॥
यशवन्तेश! ते राज्ये सम्यग्बोधोऽस्य जायते॥१॥

यथा—

सिंहवृषमाखुसर्पं स्मरहरभवने सहेक्ष्यते यद्वत् ॥
तद्वदन्योन्यरिपवो मुदा भजन्ते पदं मरोः पत्युः॥१॥

सिंहवृषभयोरहिमूषकयोश्च स्वाभाविको विरोधः । अत्र भवभवने तेषां संसर्गोऽलौकिकतया काव्यशोभाकरत्वादलंकारः ॥ अत्र भवप्रभावान्न विरोधाभावः । किं तु विरोधफलस्याभावः ॥ तथैव मरुनरेश्वरसभायामन्योन्यं भूपालानां विरोधे ज्ञेयम् ॥

यथा वा—

दिग्वासा यदि तत्किमस्य धनुषा शस्त्रं च किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ॥
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥१॥

अत्र हेतूत्प्रेक्षायाः संकीर्णत्वम् ॥ दिगम्बरत्वधनुर्धारणादेः परस्परमहिमूषकादिवत्स्वाभाविकविरोधो न प्रसिद्धः । किं त्वेतत्संसर्गे विरोधोत्थानेन चमत्कार इतीह विरोधालंकारः ॥ नह्यत्र विचित्रतायामयथायोग्यतायां वा चमत्कारः । न च तत्र पर्यवसानमपि । इत्थं विचित्रविषमयोर्नामार्थानुसारिविरोधस्य च महदन्तरम् ॥ दण्ड्याचार्यो विरोधविषये इदमुदाजहार—

कूजितं राजहंसानां वर्धते मदमञ्जुलम् ॥
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥ १ ॥
प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते ॥

"रागेण पुनराक्रान्तं जायते जगतां मनः ॥२॥"

वृद्धिकारिणः क्षयकर्तृत्वाभावः क्षयकारिणश्च वृद्धिकर्तृत्वाभावो मालिन्यकारिणो रागोत्पादकत्वाभावो रागोत्पादकस्य च मालिन्यकर्तृत्वाभाव इति विरुद्धक्रियाणां शरद्रूपकर्तरि संयोगाद्विरोधस्य चमत्कारकारितया विरोधालंकारः ॥ मम मतेऽप्युपलक्षणेनास्य विरोधे संग्रहो युक्तः ॥ इति विरोधप्रकरणम् ॥५९॥

# विशेषोक्तिः ॥

अयं विशेषोक्तिरलंकारो वामनेन लिखितः । अत्र वीत्युपसर्गो गतार्थे । "वि गते" इति चिन्तामणिः । शेषस्त्ववशेषः । वि गतेन शेषस्योक्तिर्विशेषोक्तिः ॥ अत्रेदं तात्पर्यम्, यद्वस्तु न विद्यते तस्य निषेधमात्रेणावशिष्टानां समस्तवस्तूनां कथनमिति ॥

यस्याभावस्तदुक्त्या हि शेषस्य कथनं नृप! ॥
विशेषोक्तिरलंकारो धुरंधरमते स्मृतः ॥ १ ॥

यथा—

वदन्ति पण्डिताः सर्वे जानाति सकलं जगत् ॥
यशस्वी यशवन्तेशो नकारं नापठत्पुरा ॥ १ ॥

अत्र राजराजेश्वरस्य नकारपठनाभावकथनेन दकारादिसर्वाक्षराणां सचिह्नानां च पठनमुक्तं भवति ॥

वामनाचार्यो विशेषोक्तेरिदं लक्षणमाह—

"एकगुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिः॥" इति ॥

वामनोक्तलक्षणस्य "वदन्ति पण्डिताः-" इत्युदाहरणेऽव्याप्तिः। नात्र गुणहानिः। किं तु दोषरूपनकाराक्षरस्य हानिः। किं चात्र यस्य हानिः, स नकारो दोषरूपः। तेन कथितानि दकाराद्यन्याक्षराणि गुणरूपाणीति न गुणसाम्यमपि ॥ उक्तलक्षणं साक्षात्स्वरूपाबोधकमव्याप्तिदोषग्रस्तं च ॥ इति विशेषोक्तिप्रकरणम् ॥ ६० ॥

# विषमम् ॥

वक्ष्यमाणसमालंकारस्य विपरीतभावेऽयं विषमालंकारः। समशब्दार्थः समानः। "समः समाने। तुल्यार्थे" इति चिन्तामणिः ॥ तत्र समानतया यथायोग्यता विवक्षिता। अत्र वीत्युपसर्गो गतार्थे। तथा च यथायोग्यताया अभावो विषमशब्दार्थः ॥

"अयथायोग्यता यत्र भवेन्मत्स्यमहेश्वर!॥
विषमं भूषणं तत्र विपरीतं समस्य तत् ॥ १ ॥

यथा—

रिपुस्त्रियस्ते यशवन्तभूप!
विलोक्य पान्था इति चिन्तयन्ति ॥
लावण्यसाराङ्गयुता इमाः क्व
क्व दारुणं दुःखमिदं वनोत्थम् ॥ १ ॥

अत्र रिपुरमणीनां सौन्दर्यदुःखयोः संबन्धस्यायथायोग्यता ॥ मम तु मतं, अयथायोग्यानां संबन्धे यादृशश्चमत्कारस्तादृशो यथायोग्यानामसंबन्धेऽपि । यथायोग्यताया अभावस्य स्थलद्वयेऽपि समानत्वात् । अत उपलक्षणेन तस्यापि संग्रहोऽत्र युक्तः ।

यथा—

साधारणतरुबुद्ध्या न मया बद्धस्तवालवालोऽपि ॥
लज्जयसि मामिदानीं चम्पक! भुवनाधिवासिभिः कुसुमैः ॥ १ ॥

अत्र तादृशचम्पकविटपस्योद्गमसमये आलवालजलसेकादिसत्कारपूर्वकमवनं गृहपतेर्यथायोग्यतास्पदम् । तस्य प्रमादेनाविधानमयथायोग्यत्वम् ॥ पूर्वोदाहरणे नायिकाधर्मिणि धर्मद्वयस्यायथायोग्यसंबन्धः । अत्र तु चम्पकगृहपतिधर्मिणोर्मध्ये गृहपतेश्चम्पकविषयेऽयथायोग्यव्यवहारो विषमालंकारः ॥

चन्द्रालोके इमानि लक्षणोदाहरणानि—

“विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः ॥

विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ॥
अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ॥" इति ॥

क्रमेण यथा—

क्वेयं शिरीषमृद्वङ्गी क्व तावन्मदनज्वरः ॥
कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥
भक्ष्याशया हि मञ्जूषां दृष्ट्वाऽऽखुस्तेन भक्षितः ॥

अत्र लोकोक्तेः संकीर्णत्वम् । धुरंधरनामार्थानुसारेणास्यालंकारस्य स्वरूपं सामान्यतयाऽयथायोग्यत्वम् । तत्र चन्द्रालोकस्य प्रथमतृतीयलक्षणे उदाहरणान्तरत्वसाधके । द्वितीयलक्षणं तु विचित्रालंकारस्य विषयः । चन्द्रालोकोक्तप्रथमलक्षणं "साधारणतरुबुद्ध्या—" इत्यस्मिन्नुदाहरणेऽव्याप्तम् ॥ अर्वाचीनाः क्वचित्तु प्रथमः प्रकारः, द्वितीयः प्रकारः, तृतीयः प्रकार इत्येकस्यैवालंकारस्य प्रकारान्मन्यन्ते । यथोपमायाः प्रकारः । तथा ह्युक्तम् "लुप्तोपमाऽष्टधा" इति ॥ क्वचिच्चैकमेवालंकारं प्रथमः, द्वितीयः, तृतीय इति मन्यन्ते । यथा एकं विषमम्, द्वितीयं विषमम्, तृतीयं विषममिति ॥ तथा ह्युक्तं चन्द्रालोककारिकायाम् "अपरं विषमं मतम्" इति । उक्तसिद्धान्तं स्फुटीकुर्वन्विमर्शिनीकारः "एकमित्याद्यभिदधता ग्रन्थकृता विषमाणां भिन्नत्वमुक्तम् । न प्रकारप्रकारित्वम् । सामान्यलक्षणस्यासंभवात्" इत्याह ॥ मम तु मतं; अर्वाचीनानामयं प्रमादः । कुत इति चेत्समस्तालंका-

राणां तत्तन्नामानि सामान्यलक्षणानि सन्त्येवेति तत्तद्विशेषाणां नामसु लयात्ते तत्तदलंकारप्रकारा एव भवेयुः ॥ एकार्थवाचका एकनामानोऽलंकाराः पृथङ् न भवेयुः । सर्वथा विलक्षणत्वाभावात् ॥ किं च सर्वस्वकारादयो व्याजस्तुतेः "व्याजरूपा स्तुतिः, व्याजेन वा स्तुतिः" इत्यर्थद्वयं विधाय व्याजस्तुतिनामकमलंकारद्वयमाहुः । तदेतत्समीचीनम् । स्तुत्या निन्दा तु व्याजरूपा स्तुतिः, निन्दया स्तुतिश्च व्याजेन स्तुतिरित्यनयोः स्वरूपस्य सर्वथा विलक्षणत्वात् ॥ मम तु मतं, इदमुभयमप्याभासालंकारस्य पृथक्प्रकाररूपम् ॥ तदेतत्सर्वमन्तर्भावाकृतौ प्रतिपादयिष्यामः॥इति विषमप्रकरणम्॥६१॥

## ॥ विषादः ॥

---

"षद्लृ विशरणगत्यवसादनेषु" इत्यस्माद्भावे घञि सादशब्दो निष्पन्नः । सादस्तु दुःखम् । तदुक्तम् "शरीरसादादसमग्रभूषणा--" इति रघुकाव्ये । हर्षदुःखयोरत्यन्तं लौकिकत्वादलौकिकत्वार्थं धुरंधरेण हर्षेण सह प्रकृष्टार्थकं प्रोपसर्गं प्रयुज्य प्रहर्षणालंकारः स्वीकृतः । तथेहाप्यलौकिकत्वार्थं धुरंधरेण सादशब्देन सहातिशयार्थको वीत्युपसर्गो योजितः । "वि विशेषे । विशेषः, अतिशये" इति चिन्तामणिः ॥ "सदिरप्रतेः ॥ ८ । ३ । ६६" इति मूर्धन्यादेशः । विषाद इति समुदितशब्दार्थस्त्वतिशयेन दुःखमिति ॥ अतिशयदुःखस्य लोकोत्तरतया कचिच्चमत्कारकारित्वे विषादालंकारः॥

विषादनामालंकारः स्यात्सादोऽतिशयेन चेत् ॥
प्रहर्षणाख्यालंकारप्रतिस्पर्द्धी नृपास्त्यसौ ॥१॥

यथा—

एकं कान्तगले निधाय रमणी हस्तं द्वितीयेन सा
सीधुं पाययति प्रसन्नहृदया संचिन्तयन्तौ स्थितौ ॥
कृत्यं केलिकलानुषङ्गि रसिकौ तौ दंपती तत्क्षणं
प्राप्ताः श्रीयशवन्तसिंहसुभटा बद्ध्वाऽनयंस्तं रिपुम्॥१॥

यथा वा—

प्रावृड्विलासेक्षणकौतुकान्विता
राधाऽऽरुरोहाचलतुल्यहर्म्यम् ॥
संकेतकुञ्जं यमुनातटे पत-
द्दृष्ट्वाऽश्रुपूर्णे नयने अभूताम् ॥ १ ॥

पूर्वोदाहरणे वाञ्छिताद्विरुद्धार्थस्य प्राप्तिः। अत्र त्वकस्मा-द्दुःखप्राप्तिः । मेघमालावलोकनकौतुकाविष्टचित्ताया राधि-काया हर्म्यारोहणसमये ईषदपि संकेतकुञ्जसंबन्धिवार्ताया अभावात् । वाञ्छितार्थाद्विरुद्धलाभे दुःखातिशय इवाकस्मा-दागतविपत्तावपि दुःखातिशयः ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् ॥

यथा—

दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥

अत्रालौकिकत्वार्थमतिशयार्थकव्युपसर्गप्रयोगाद्यथाकथंचिद्दुःखातिशयस्य चमत्कारकारित्वे विषादालंकारो भवतीति वेदितव्यम् ॥ चन्द्रालोककारो लभ्योदाहरणानुसारेणोक्तनियमं चकार । तस्य तु बहुधाऽव्याप्तिः । "प्रावृड्विलासेक्षण–" इत्यत्र राधिकायाः संकेतसंबन्धिवाञ्छादेरभावः । वर्षर्तुविलासं विलोकयन्त्याः संकेतकुञ्जपतननिरीक्षणेनाकस्माद्दुःखातिशयोत्पादः।तत्र पूर्वोदाहरणवच्चमत्कारोऽनुभवसिद्धः। इहोक्तलक्षणस्याव्याप्तिः ॥ इति विषादप्रकरणम् ॥ ६२ ॥

## ॥ व्यतिरेकः ॥

---

अत्र वीत्युपसर्गो विशेषार्थकः । विशेषस्त्वितरव्यावर्तकोऽसाधारणधर्मः । "विशेषः, इतरव्यावर्तकेऽसाधारणधर्मे" इति चिन्तामणिः। अतिरेकस्तु पृथग्भावः। "अतिरेकः पृथग्भावे" इति चिन्तामणिः ॥ व्यतिरेक इति समुदितशब्दार्थस्त्वितरव्यावर्तकेनासाधारणधर्मेण पृथग्भाव इति ॥ भोजराजोऽस्य व्यतिरेको भेद इति नामद्वयमाह ॥

केनचिद्धि विशेषेणातिरेको यत्र दृश्यते ॥
तत्र जानीहि राजेन्द्र! व्यतिरेकाख्यभूषणम् ॥ १ ॥

यथा–

सुखभोगे शोभायां प्रभुतायां चैव वैभवेऽपारे ॥

मरुराजः सुरपतिना सदृशः किं त्वेष सर्वदा दाता ॥१॥

अत्र केवलमुपमेयराजराजेश्वरस्याधिकतया शक्राद्भेदः प्रदर्शितः ॥

यथा वा—

शशिना समं मुखं ते परं तु चन्द्रः कलङ्कमाधत्ते ॥

अत्र केवलं शशिन उपमानस्य न्यूनतया नायिकामुखस्य चन्द्राद्भेदो दर्शितः ॥ पूर्वोदाहरणे सुखभोगादिसाधर्म्यं वाच्यम् । अस्मिन्नुदाहरणे आह्लादकारितादिसाधर्म्यं प्रसिद्धिलभ्यत्वात्प्रतीयमानम् ॥

यथा वा—

अपारसंपत्पदमत्युदारः
सुरेन्द्रतुल्यो यशवन्तसिंहः ॥
पुरंदरस्तु त्रिदशाधिनाथो
राज्ञां सहस्रं परिसेवतेऽमुम् ॥ १ ॥

अत्र त्रिदशशब्दे श्लेषः । त्र्यधिकास्त्रिरावृत्ता दश त्रिदशाः । त्रयस्त्रिंशदित्यर्थः । देवाश्च । अत्र राजराजेश्वरोपमेयविषये सहस्रभूपसेवितत्वमाधिक्यं शक्रोपमानविषये च त्रिदशाधिपतित्वमेवेति न्यूनत्वं चोक्त्वा राजराजेश्वरे शक्राद्भेदः प्रदर्शितः ॥ इमानि सर्वाण्यप्युदाहरणान्तराणि ॥ अर्वाचीनाः प्रथमोदाहरणे उपमेयाधिक्यपर्यवसायी, द्वितीयोदाहरणे उपमानन्यूनत्वपर्यवसायी, तृतीयोदाहरणे चोभयप-

र्यवसायीति कथयन्ति। तत्र तु न काचिद्धानिर्लाभो वा। परं तु चतुर्थमनुभयपर्यवसायीत्युक्त्वा

दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य ॥
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ १ ॥

इत्युदाहरन्ति। आकारात्स्वरूपाद्भेदः। आकारस्वराच्च भेदः। कृपणेऽकारस्वरः। कृपाणे आकारस्वरः। अत्रोपमेयाधिक्योपमानन्यूनत्वयोरभावे भेददर्शनादनुभयपर्यवसायित्वम्॥ मम तु मतं, अत्र व्यतिरेकस्याभास इत्याभासस्य प्रकारान्तरत्वमुदाहरणान्तरत्वं वा बोध्यम्। अस्य व्यतिरेकगणनायामसंभवात्॥

चन्द्रालोके इदं लक्षणम्—

"व्यतिरेको विशेषश्चेदुपमानोपमेययोः॥" इति॥

धुरंधरनामार्थानुसारेण तु वस्तुमात्राद्भेदो व्यतिरेकालंकारः। न तूपमानोपमेययोरेव नियमः॥

यथा—

दिव्योत्तरीयभृति कौस्तुभरत्नभाजि
देवे परे दधतु लुब्धधियोऽनुबन्धम्॥
रूपं दिगम्बरमखण्डनृमुण्डचूडं
भावत्कमेव तु वतेश मम स्पृहायै॥ १॥

अत्र हरिहरावुभावपि निराकारपरब्रह्मणः साकारस्वरूपम्। केनचिद्विषयवासनाविरक्तभक्तेन तयोर्भेदः प्रदर्शितः॥

यथा वा—

कलिन्दजाया महिमा वाचामविषयः खलु॥
गङ्गा यदङ्घ्रिपानीयं तस्य राज्ञीयमुच्यते॥ १॥

अत्र गङ्गायमुनारूपतीर्थयोर्भेदो दर्शितः॥ इत्यादिस्थलेषु चन्द्रालोकलक्षणमव्याप्तम्॥ इति व्यतिरेकप्रकरणम्॥६३॥

# व्याघातः॥

हिंसार्थाद्धन्धातोर्भावे घञि घातशब्दो निष्पन्नः। "हन् हिंसागत्योः॥" उपसर्गयोगेन धात्वर्थः क्वचिदन्योऽपि भवतीतीहाङ्पूर्व आघातशब्द आघट्टनार्थकः। "धक्का—टक्कर" इति लोकभाषा॥ "आघात आघट्टनायाम्" इति चिन्तामणिः। उक्तेऽर्थे माघकाव्ये आघट्टनाशब्दस्य प्रयोगो दृश्यते—"रथाङ्गिराघट्टनया नभस्वतः।" इति॥ मल्लिनाथः "आघट्टनया आघातेन" इति व्याचख्यौ॥ अत्र व्युपसर्गौ विशेषार्थकः। व्याघात इति समुदितशब्दार्थस्त्वाघातविशेष इति॥

भूपाघातविशेषो वै व्याघातालंकृतिर्मता॥
दृश्यते तव नागेषु दुर्गभंगविधायिषु॥ १॥

यथा—

यूयं प्रिया भीरव इत्थमुक्त्वा
कथं नु मुच्यन्त इहैव नाथाः! ॥
वनं सहास्मान्नयतेति दारा
वदन्त्यरीणां यशवन्तसिंह! ॥ १ ॥

वनं पलायमाने राजराजेश्वरशत्रुभिः स्वप्रियाणां भवन एव स्थितौ, यूयमस्माकं प्रियतरा इति भवद्वनवासदुःखं द्रष्टुमशक्यम्, भीरव इति सिंहादिसेवितवनेऽत्यन्तं भीतिमवाप्स्यथेति निमित्ते उक्ते। तत्स्त्रीभिश्च वयं कातरा अत एव शून्यगृहे एकाकिन्यो भीतिमवाप्स्यामः, यदि वयं प्रियास्तर्ह्येकाकिन्यः कथं परित्यज्यन्त इति युक्त्योक्तनिमित्तयोर्व्याघातः कृत इतीह व्याघातालंकारः। परंपरागते इमे उदाहरणे—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ॥
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥१॥

महादेवो दृष्टिमात्रेण स्मरं ददाह। स्त्रियो दृष्टिपातमात्रेण तं जीवयित्वा महादेवसामर्थ्यस्य व्याघातं कुर्वन्ति स्म ॥

यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥.

कुसुमायुधेन सुमनसामनिर्वचनीयंजगत्प्रियतायास्तैरेव सुमनोभिर्जगत्पीडयित्वा व्याघातो विहितः ॥ परंपरागतधुरंधरोक्तोदाहरणाभिप्रायं नामार्थस्वारस्यं चाजानाना अर्वाची-

नाः प्रमादेन "प्रिया भीरवः-" इत्यत्र शत्रुभिः स्वनारीणां गृहावस्थानरूपकार्यार्थमुक्तवचनरूपा क्रिया सौकर्येण निबद्धा तथापि सैव क्रिया शत्रुनारीभिर्गृहावस्थानरूपकार्यस्य विरोधिनी विहितेत्यज्ञासिषुः। "दृशा दग्धम्-" इत्यत्र दृष्टिस्तथाकारिणी स्मरदाहकारिणी, सैव नारीभिरन्यथाकारिणी स्मरजीवयित्री विहितेति ज्ञातवन्तः॥ "यैर्जगत्प्रीयते-" इत्यत्र च सुमनांसि तथाकारीणि जगतः प्रीत्युत्पादकानि, तान्येव स्मरेणान्यथाकारीणि जगतः पीडाकराणि विहितानीत्यजानन्। तत एव च व्याघातनाम्नि व्याङुपसर्गावपि धात्वर्थ एव मत्वेत्थं नामसंगतिमकार्षुः। "प्रिया भीरवः" इत्यत्र क्रियाया घातो हननम्। "दृशा दग्धम्" इत्यत्र "यैर्जगत्" इत्यत्र च साधनस्य घात इति॥

चन्द्रालोककार इमे लक्षणे प्राह—

"स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्॥
सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी॥" इति॥

मम तु मतं, उक्तलक्षणलक्षितव्याघाते कार्यकारणभावस्य वैचित्र्यम्। तस्य विचित्रालंकारेऽन्तर्भावः। क्रियाविचित्रताया अपि विचित्र एवान्तर्भावः॥ अत्रान्यथाकारितायां विवक्षा चेत्परिणामालंकारः॥

यथा वा-

सायंकालान्नटसुविदुषा रञ्जितो लोकवृन्दः
प्रातर्यावद्रुचिरचरितैर्हावभावादिभिश्च॥

आलोकात्ते सुमुखि! वदनेन्दोर्यथा कौतुकं त-
ज्जातं यस्मात्सकलपरिषत्त्वन्मुखासक्तदृष्टिः ॥ १ ॥

अत्र नटसंबन्धिनाटकनिरीक्षणकुतूहले प्रातरागतनायिकासौन्दर्येण व्याघातः कृतः ॥

यथा वा—

कुर्वे भृकुटिमाबध्य कृच्छ्रेण कठिनं मनः ॥
तथापि माधवे दृष्टे दृङ्मे भवति हासयुक् ॥

अत्र श्रीकृष्णस्य दर्शनानन्देन राधिकामानस्य व्याघातो विहितः ॥ अनयोरुदाहरणयोरुक्तलक्षणयोरव्याप्तिः ॥ उक्तलक्षणयोः साक्षात्स्वरूपाबोधकत्वमव्याप्त्यतिव्याप्तिदोषग्रस्तत्वं च ज्ञेयम् ॥ इति व्याघातप्रकरणम् ॥ ६४ ॥

## शृङ्खला ॥

---

शृङ्खला तु परंपरा । "सांकल, जंजीर" इति लोकभाषा ॥ "शृङ्खला परंपरायाम्" इति चिन्तामणिः ॥ लोकशृङ्खलायां परंपरया पूर्ववलयेनापरवलयस्य संयोगः ॥ उक्तन्यायेन परंपरयाऽर्थसंयोगे धुरंधरः शृङ्खलालंकारं स्वीचकार ॥

अर्थानां शृङ्खला राजन्! शृङ्खलाऽलंकृतिर्मता ॥
मातङ्गबन्धनन्यायेनामन्यत धुरंधरः ॥ १ ॥

यथा—

नयने श्रुतिविश्रान्ते श्रुती च बाह्वोस्तटावलम्बिन्यौ॥
बाहू च जानुदीर्घौ श्रीमद्यशवन्तभूपस्य ॥ १ ॥

अत्र राजराजेश्वरस्य नयनाद्यवयवानां परंपरया शृङ्खलान्यायेन निबन्धनाच्छृङ्खलाऽलंकारः ॥ अत्र स्वभावोक्तेः संकीर्णत्वम् ॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ॥
न षट्पदोऽसौ कलगुञ्जितो न यो
न गुञ्जितं तन्न जहार यन्मनः ॥ १ ॥

रसना कटिमेखलेतिपर्यायान्तरम्। तस्यामपि शृङ्खलान्यायेन परंपरयैकवलयेनापरवलयस्य संयोगोऽस्तीति कश्चिद्रसोपयोगितयेममलंकारं रसनानाम्ना प्राह। अमुमेवालंकारमेकावलीतिनाम्ना वदंश्चन्द्रालोककार इदं लक्षणमाह ॥
"गृहीतमुक्तरीत्यार्थश्रेणिरेकावली मता ॥". इति ॥

धुरंधरेण दीपकन्यायविशिष्टोऽलंकारो दीपकनाम्ना कथितः। तथायमप्यलंकारः शृङ्खलान्यायविशिष्टत्वाच्छृङ्खलानाम्ना भणितः ॥ शृङ्खलायाः स्वरूपे परंपरया प्रथमवलयस्य वलयान्तरेण संयोगस्य प्राधान्यम्। न तु पङ्क्तेः ॥ अर्वाचीना अस्मिन्वर्णने आवलिं मत्वा परंपरयाऽर्थसंयोगविशेषतयैकीभूतेयमावलिरित्यभिप्रेत्यैकावलीति नाम निर्दिशन्ति स्म ॥ परंतु तादृशरचनायामावल्या न प्राधान्यम्। किं तु शृङ्खलाया एव प्राधान्यम् ॥ किं चात्रार्वाचीनाः "गृहीतमुक्तरीत्या".

इति ह्रभणुः । तस्याप्यस्मिन्वर्णने न स्वारस्यम् ॥ अपि च रसनापि शृङ्खलाकारेति केनचिदस्यालंकारस्य रसनेति नाम निर्दिष्टम् । परं तु तन्न स्वरूपात्मकम् । किं तु तटस्थात्मकम्॥ रसति शब्दं करोतीति रसना ॥ ननु त्वयैव रसनोपमा कथं कथितेति चेत्तत्र तूपमायाः प्राधान्यम् । अत्र तु शृङ्खलायाः प्राधान्यमिति तस्या एव साक्षात्स्वरूपप्रतिपादनमावश्यकम्॥ अर्वाचीनाः "नयने श्रुतिविश्रान्ते" इत्युदाहरणे स्थापनम्, "न तज्जलम्" इत्युदाहरणेऽपोहोऽर्थान्निषेध इति भेदमाहुः । तत्तूदाहरणान्तरमात्रम् । चन्द्रालोककारस्यैकावलीतिनामाप्रधानतया कविसंप्रदायविरुद्धदोषविशिष्टम् । लक्षणं चासंभवदोषग्रस्तम् ॥ इति शृङ्खलाप्रकरणम् ॥ ६५ ॥

## ॥ श्लेषः

. श्लिष्यते इति श्लेषः॥ "श्लिष आलिङ्गने।" भावे घञ् । अत्र शब्दार्थयोः श्लेषे रूढिः ॥ तथा च परस्परं शब्दानामर्थानां चाऽऽलिङ्गनं श्लेषालंकार इत्यर्थः ॥ जतुकाष्ठन्यायेन शब्दद्वय-
शब्दश्लेषः । एकवृन्तगतफलद्वयन्यायेनैकशब्द-
॥ अत्र द्वयेतिदिग्दर्शनम् ॥ तेन
ग्रहः ॥

ङ्गनं श्लेष उच्यते ॥

हरसे रम्याम्भोजश्रियं ददासि श्रियं कुवलयाय ॥
कस्माद्व्यतिक्रमस्ते रविकुलयशवन्तभूपेश! ॥ १ ॥

"रम्याम्भोजश्रियम्" इत्यत्र शब्दद्वयं विवक्षितम्। "रम्यां भोजश्रियम्" इत्येकः। अस्यार्थस्तु मनोहरां भोजमहाराजस्य श्रियं शोभामिति ॥ "रम्य-अम्भोज-श्रियम्" इति द्वितीयः ॥ अस्यार्थो मनोहरकमलशोभामिति ॥ "कुवलयाय" इत्यत्रापि शब्दद्वयं विवक्षितम्। "कुवलयम्" इत्येकः। अस्यार्थः समुदायशक्त्या चन्द्रविकासिकमलमिति। "कुवलयम्" इति द्वितीयः। अस्यार्थोऽवयवशक्त्या भूमण्डलमिति ॥ उक्तस्थलद्वये जतुसंलग्नकाष्ठद्वयन्यायेन शब्दालिङ्गनं प्रतीयत इति शब्दश्लेषः ॥ राजराजेश्वरः सूर्यवंश्यः सन् सूर्यविकासिकमलानां श्रियं हरति, चन्द्रविकासिकमलेभ्यश्च श्रियं ददातीतीह श्रवणमात्रेण क्षणं विरोधो भासते, तथापि विचारदशायां श्लेपसामर्थ्येन राजराजेश्वरो भोजमहाराजस्य शोभामादधानः स्वात्मना भूमण्डलं शोभयतीत्याभासालंकारः प्रतीयत इति तत्संकीर्णत्वम् ॥ अत्र रम्यश्रीशब्दयोस्तु न श्लेपः ॥ किं तु साधर्म्यम्। रम्यपदं च समानविशेषणरूपम्। एतादृशसाधर्म्यं चानुगामीत्युच्यते॥

यथा वा—

एष ते विद्रुमच्छायो मरुमार्ग इवाधरः ॥
कस्य नो कुरुते तन्वि! पिपासाकुलितं मनः ॥१॥

"विद्रुमच्छाय:"इत्यत्र शब्दद्वयं विवक्षितम्। "विद्रुमच्छायः"इ-त्येकः। अस्यार्थः समुदायशक्त्या प्रवालकान्तिरिति॥ "वि-द्रुमच्छायः"इति द्वितीयः॥अस्यार्थोऽवयवशक्त्या विगतद्रुमच्छाय इति ॥ अत्रापि पूर्ववच्छब्दश्लेषः ॥ छायाशब्दस्यार्थद्वयं विवक्षितम् ॥ प्रवालपक्षे कान्तिरिति । "छाया कांतौ" इति चिन्तामणिः ॥ मरुमार्गपक्षे आतपाभाव इति ॥ अत्रैकवृन्तगतफलद्वयन्यायेनार्थद्वयस्यैकशब्दगतत्वादर्थश्लेषः ॥ पातुमिच्छा पिपासा । अयं शब्दः पक्षद्वये समानविशेषणरूपः॥ न तु श्लेषरूपः । अत्रोक्तश्लेषः साधर्म्यरूपः । ग्रन्थकारैः श्लेषसाधर्म्यादिनाप्युपमाप्रकारा उक्ताः ॥

अर्थश्लेषो यथा—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ॥
राजा हरति लोकस्य हृदयं मृदुलैः करैः ॥ १ ॥

अत्र चन्द्रभूपविषयः श्लेषः ॥ चन्द्रपक्षे, उदयाचलमारूढः। द्युतिमान् । रक्तवर्णबिम्बः । राजा चन्द्रः। मृदुलैः सुखस्पर्शिभिः करैः किरणैर्जगन्मनोहारी ॥ भूपपक्षे, उदयमभ्युदयं प्राप्तः। तेजोविशिष्टः । रक्तमण्डलः, अनुरक्तदेशः । "मण्डलं देशे"इति चिन्तामणिः॥ राजा नृपतिः । मृदुलैः सुखग्राह्यैः करै राजदेयद्रव्यैर्जगन्मनोहर्ता ॥ अत्रार्थद्वयस्यैकशब्दगतत्वादर्थश्लेषः ॥

चन्द्रालोके इदं लक्षणम्—

"नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रयः॥" इति॥

अस्यालंकारस्य स्वरूपमालिङ्गनम् । चन्द्रालोकलक्षणे तत्स्वारस्यालाभः । शब्दश्लेषे उक्तलक्षणस्याव्याप्तिश्च । किं च वर्ण्यश्लेषः, अवर्ण्यश्लेषः, वर्ण्यावर्ण्यश्लेष इति प्रकारा उक्ताः । तेप्युदाहरणान्तरमात्रम् ॥ "असावुदयमारूढः—" इत्यत्र चन्द्रभूपावुभावपि वर्ण्यौ । "असौ राजा" इत्यङ्गुल्या निर्देशात् ॥ पूर्णिमायामुदितश्चन्द्रस्तन्नगरनृपश्चोभावपि कवेर्वर्णनीयाविति वर्ण्यश्लेषः ॥ "दृढतरनिबद्धमुष्टेः—" इत्यत्र कृपणकृपाणयोरुभयोरप्यप्रस्तुतत्वादवर्ण्यश्लेषः ॥ "एष ते विद्रुमच्छायः—" इत्यत्र नायिकाधरस्य वर्णनीयतया मरुमार्गस्य चावर्णनीयतया वर्ण्यावर्ण्यश्लेषः ॥ काव्यप्रकाशगतकारिकाकारः शब्दश्लेषं शब्दालंकारं मन्यते । केचनोभयमपि शब्दालंकारं मन्यन्ते । चन्द्रालोककारस्तूभयमप्यर्थालंकारं स्वीकरोति ॥ तदेवोक्तं कुवलयानन्दकारेण "उभयमपि शब्दालंकार इत्यन्ये । उभयमप्यर्थालंकार इति स्वाभिप्रायः" इति ॥ मम मतेऽपि चन्द्रालोकमतं समीचीनम् । कुत इति चेत्, श्रवणसुखदः शब्दालंकारः । चित्तसुखदोऽर्थालंकारः । न चोक्तशब्दश्लेषोऽनुप्रासवच्छ्रवणसुखकरः । किं त्वर्थविचारेणैव चित्तसुखकरः ॥ सभङ्गश्लेषः शब्दालंकारः, अभङ्गश्लेषस्त्वर्थालंकार इति केचित् ॥ मम तु मतं, सभङ्गाभङ्गतायां न मनागपि चमत्कारः ॥ चन्द्रालोकलक्षणं साक्षात्स्वरूपाबोधकमव्याप्तिदोषग्रस्तं च ॥ इति श्लेषप्रकरणम् ॥ ६६ ॥

## ॥ संकोचः ॥

केनचिद्धुरंधरेण संकोचालंकार उक्तः ॥ विकासालंकारस्य विपरीतभावेऽयं संकोचालंकारः ॥

संकोचस्तु भवेद्यत्र संकोचस्तत्र भूषणम् ॥
विकासस्य प्रतिद्वन्द्वी धुरंधरमते स्मृतः ॥ १ ॥

यथा—

श्रीयशवन्तधराधिप! तेजःसूर्योदयेन कुवलयवत् ॥
संकोचमाप्नुवन्ति हि शनैः शनैस्ते द्विषां कुवलयानि ।१।

यथा वा—

प्रविष्टा स्वतनौ सम्यक् संस्थिता गह्वरे वने ।
दृष्ट्वा ज्येष्ठस्य मध्यान्हे छायां छायापि वाञ्छति ॥१॥

स्वतनौ प्रवेशोऽपि संकोचः । कुवलयानन्दकार इमं संकोचालंकारं संकोचपर्यायेतिपर्यायस्य प्रकारं मत्वेदमुदाजहार—

प्रायश्चरित्वा वसुधामशेषां
छायासु विश्राम्य ततस्तरूणाम् ॥
प्रौढिं गते संप्रति तिग्मभानौ
शैत्यं शनैरन्तरपामयासीत् ॥ १ ॥

मम तु मतं, संकोचपर्याययोश्चमत्कारस्य संकीर्णता न भवतीति। क्वचित्पर्यायचमत्कारस्य प्रधानत्वे पर्यायालंकारो भविष्यति। क्वचिच्च संकोचरूपचमत्कारस्य प्रधानत्वे संकोचालंकारो भविष्यति ॥ उक्तपर्यायोदाहरणे न संकोचस्य चमत्कारः ॥ इति संकोचप्रकरणम् ॥ ६७ ॥

## संदेहः ॥

---

इदं वा इदं वेत्यनिर्णयबुद्धिः संदेहः ॥ संदेहः संशय इति पर्यायान्तरम् ॥ जयदेवोऽप्यस्यालंकारस्य नामैव लक्षणमाह ॥

**इदं वा किम्विदं वेति नृपानिर्णयधीरिह ॥**
**संदेहालंकृतिर्ज्ञेया धुरंधरमतानुगैः ॥ १ ॥**

यथा—

करे कृपाणं मरुनायकस्य
विलोकयन्तः कवयो वदन्ति ॥
विपक्षलक्ष्म्याः किमियं सुवेणी
किं वा प्रतापानलधूमराजिः ॥१ ॥

अत्र वस्तुनः संदेहः ॥

यथा वा—

मरुस्थलेन्द्राश्वगताागतानि
दृष्ट्वा जना हस्तु परामृशन्ति ॥

चेष्टा समेयं किमु चञ्चलाया
अलातचक्रस्य कटाक्षकस्य वा ॥ १ ॥

अयं क्रियासंदेहः । राजराजेश्वरहयेन गतागतरूपा क्रिया केन सदृशी कृतेति। अनेन दिशादर्शनेनान्यविधसंदेहेऽप्यलंकारत्वं बोध्यम् ॥ इति संदेहप्रकरणम् ॥ ६८ ॥

## संभावना ॥

संभावनैव लोके संभव इत्युच्यते ॥ संभावना तु योग्यता। "संभावना योग्यतायाम्" इति चिन्तामणिः ॥

तत्र संभावना प्रोक्ता संभवो यत्र वर्ण्यते ॥

यथा–

यशवन्तधराधीश! रविवंशमहामणे! ॥
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥१॥

अत्र शेषो वक्ता चेद्राजराजेश्वरस्याखिलगुणकथनस्य संभवः ॥ शेषस्य सहस्रं फणाः । सर्पा द्विजिह्वा इति तस्य रसनानां द्विसाहस्रम् । कविश्च सः । तन्निर्मितव्याकरणमहाभाष्यं सुप्रसिद्धम् ॥

यथा वा–

चकोराः कुर्वीरन् व्रतयुतमिदं चन्द्रवदनं

यदा दन्तज्योतिस्तडिदिव न भीतिं प्रकटयेत् ॥
द्विरेफा द्राक्षाया द्युतिविजयिनीं यौवनविभां
लिहीरंश्चेदस्या न तनुरमला चम्पकरुचिः ॥१॥

वर्णनीयनायिकायाश्चम्पकवर्णत्वाद्यभावे भ्रमरादीनां लेह-क्रियादेः संभवः ॥ अर्वाचीना धुरंधरस्वीकृतोत्प्रेक्षालंकारस्य स्वरूपं संभावनामजानन् । तदेवोक्तमुत्प्रेक्षालक्षणे चन्द्रालोककारेण—

"संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना" इति ॥

धुरंधरोऽस्यालंकारस्य कण्ठरवेण संभावनेतिनामाह ॥ अतोऽर्वाचीनाः संभावनात उत्प्रेक्षाया व्यावृत्तये वस्तुहेतुफलात्मना संभावनोत्प्रेक्षालंकारः । तदन्यरूपा संभावना संभावनालंकार इत्याहुः ॥

चन्द्रालोके इदं लक्षणम्—

"संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ॥" इति ॥

ऊहो विमर्शात्मकस्तर्कः । विमर्शस्तु विचारः । "ऊहः विमर्शात्मकतर्के । विमर्शः विचारे" इति चिन्तामणिः ॥

यथा—

यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥

अस्मिन्परंपरागतोदाहरणे तेषां लक्षणसंगतिस्तु, वर्णनीयनृपस्य समस्तगुणकथनसिद्ध्यर्थं शेषो वक्ता चेत्समस्तगुणान्वक्तुं शक्नुयादिति तर्कः ॥ मम तु मतं, वस्तुहेतुफला-

त्मना संभावना तूत्प्रेक्षा, उक्तविधा च संभावना संभावनाऽलंकार इत्युक्तवैलक्षण्ये प्रकारान्तरत्वयोग्यतापि नास्तीति कथं वाऽलंकारान्तरत्वयोग्यत्वम्। एतत्तूदाहरणान्तरमात्रम् ॥ उत्प्रेक्षायाः स्वरूपं संभावना न भवतीत्युत्प्रेक्षाप्रकरणे प्रागभिहितम्। अस्यालंकारस्य स्वरूपं योग्यता। न तु विमर्शात्मकस्तर्कः ॥ इदं लक्षणं स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥ इति संभावनाप्रकरणम् ॥ ६९ ॥

# संस्कारः ॥

---

संस्कारो वासना। "संस्कारः वासनायाम्" इति चिन्तामणिः ॥ अत्र वासनाशब्देन कस्तूर्यादिसुगन्धिद्रव्यापगमेऽपि तत्संसर्गात्तद्भाण्डे कस्तूर्यादेः पूर्ववासनावृत्तित्वं विवक्षितम् ॥ उक्तलोकन्यायानुसारेण भावानां संस्कारे धुरंधरेण संस्कारालंकारोऽङ्गीकृतः ॥ अयमलंकारोऽलंकारोदाहरणे उक्तः ॥

संस्कारस्तु महाराज! संस्कारालंकृतिर्मता ॥

यथा—

दानाभावप्रसङ्गेऽपि यशवन्तमुखाब्जतः ॥
देहि देहीति वचनमाविर्भवति सर्वदा ॥ १ ॥

राजराजेश्वरस्य सततं दानेन देहि देहीति शब्दोच्चारणस्यात्यन्तमभ्यासात्तत्संस्कारेणाऽन्यप्रसङ्गेऽपि देहीति वचनं मुखान्निःसरति ॥

यथा वा—

यद्यपि गेहे गेहे निन्दा जाता तथापि नो गेहे।
क्षणमपि तिष्ठति बुद्ध्वाप्यथाप्यबुद्ध्वा तदेव गृहमेति

अस्योपपत्तेः परमप्रियपरकीयाया गृहगमनात्यन्ताभ्यासात्संस्कारेणानिच्छायामप्यन्यत्र गच्छतस्तस्या एव गृहे गमनम् ॥ इति संस्कारप्रकरणम् ॥ ७० ॥

# समः ॥

समशब्दार्थः समानः, तुल्य इति ॥ अत्र समानतया यथायोग्यता विवक्षिता ॥

यथायोग्यत्वमुर्वीश! यत्र तत्र समः स्मृतः ॥
तं च सर्वप्रकारेणाददात्तुभ्यं जगत्पतिः ॥ १ ॥

यथा—

ज्योत्स्ना चन्द्रमसं यद्वद्वत्सं सुरतरङ्गिणी ॥
तद्वत्त्वामाश्रिता कीर्तिर्यशवन्तनरेश्वर! ॥ १ ॥

अत्र ज्योत्स्नादिप्रशस्तवस्तूनां चन्द्रादिप्रशस्तवस्त्वाश्रयादाश्रयाश्रयिभावसंबन्धो यथायोग्य इति समालंकारः ॥ अयं स्तुतिपर्यवसायी ॥

निन्दापर्यवसायी यथा—

भ्राता हलधरस्य त्वं राधा च वृषभानुजा ॥

स्नेहवृद्धिः कथं न स्याद्रामित्याहुर्व्रजाङ्गनाः ॥१॥

हलं धरतीति हलधरो बलदेवः, वृषभश्च । वृषभानोर्जाता राधा, वृषस्यानुजा स्वसा गौश्च ॥ अत्र परिहासे राधाकृष्णयोर्हलधरवृषभानुजाशब्दश्लेषेण पशुत्वप्रतीतिं कारयित्वा यथायोग्यसंयोगसंबन्धः प्रतिपादितः ॥ मम तु मतं, संबन्धोऽनेकविध इति यथायोग्यत्वमनेकधा भवतीति ॥

यथा वा—

आभीर्या हि मनो नवोद्धृतसमं दुग्धोपमं यौवनं(*)
दध्ना(†) तुल्यतमा रतिः प्रियतमे स्नेहस्रवे लोचने ॥
चन्द्रस्तक्रनिभो मुखस्य पुरतः सर्वाङ्गहृद्यं वपुः
सैषा रञ्जयते कथं न रुचिरा कृष्णं कलाकोविदम् ॥१॥

मन आदीनां मृदुत्वविषये किसलयाद्यौपम्यस्य विद्यमानत्वेऽप्याभीरीसंबन्धिदधिदुग्धनवनीताद्यौपम्यकथनमाभीरीविषये यथायोग्यम् ॥

यथा वा—

भोःकूँपान्वयमांडण!(‡)नोरसि लग्ना कदापि परमहिला
समराङ्गणे न पृष्ठं विलोकयामासुररयस्ते ॥ १ ॥

पृष्ठवक्षःस्थलयोरवयवयोः सहकथनं प्रसिद्धम् । उक्तपद्ये तयोः सहकथनरूपयथायोग्यतात्वात्समालंकारः ॥

यथा वा—

(*) दुग्धवद्यौवनस्योद्गम । उफाण इति लोकभाषा । (†) दधिवद्रतिगाढता ।
(‡) नामविशेष ॥

न्तरत्वम् ॥ उक्तलक्षणानां “ आभीर्या हि मनः ” इत्याद्युदाहरणेष्वव्याप्तिः ॥ इति समप्रकरणम् ॥ ७१ ॥

## समाधिः ॥

---

समाधिशब्दार्थः समर्थनम् । दृढीकरणमिति यावत् ॥ “ समाधिः समर्थने ” इति चिन्तामणिः ॥ लोकेऽपि हि हर्म्याणां समर्थनाय सुधालेपः, कपाटानां च समर्थनाय तैलसेको विधीयते । सुधया पाषाणयोजने सुधा हर्म्यस्य कारणम् । तत्सिद्ध्यनन्तरं हर्म्यस्य समर्थनाय सुधया लेपे तु सुधाया न कारणत्वम् । उक्तलोकव्यवहारानुसारेण समर्थने धुरंधरः समाध्यलंकारमङ्गीचकार ॥

**समाधिर्मरुभूपाल! समाधिर्भूषणं भवेत् ॥**

यथा—

**प्राणी यत्र जलं विना म्रियत इत्याख्यायतेऽयं मरु-**
**र्योगी चापि शशाप(*)दुर्गरचनाकालेऽतिसंकोपितः॥**

---

(*) रावयोधासिंहेन यस्मिन्गिरौ योधपुरे दुर्गं निरमायि, तत्र निर्झरे चिडियानाथनामको योगी तप आचरंस्तत्प्रदेशाद्गन्तुमादिष्टः शशाप । भवतां दुर्गरचनाश्रयोऽयं निर्झरः शोषमाप्स्यति । द्वितीये तृतीये च हायनेऽस्मिन्पुरे जलकष्टं भविष्यतीति । स च विक्रमार्कस्य पञ्चदशोत्तरपञ्चदशशततमसंवत्सरादारभ्य पञ्चचत्वारिंशदधिकैकोनविंशतिशततमसंवत्सरं यावत्त्रिंशदधिकचतुःशतशरत्पर्यन्तं चरितार्थः शापोऽधुना यशवन्तसिंहमहाराजेन सरांसि विरचय्य स्वप्रयत्नादपास्तः ॥

प्राचां निर्जलताविमार्जनकृती राज्ञां वृथैवाभव-
द्दोषोऽसौ यशवन्तसिंह! भवता मृष्टो विधाय ह्रदान्॥

अत्र मरुस्थलस्य स्वतः सिद्धा तादृशनिर्जलता चिडियानाथयोगिशापेन समर्थिता ॥ तत एव त्रिशदुत्तरचतुःशतवर्षपर्यन्तं न निवृत्ता ॥

यथा वा—

मातङ्गः पुनरुन्मत्तः समुद्रश्च तरङ्गितः ॥
गजसिंहो मरुपतिर्दिल्लीट्प्रोत्साहनं पुनः ॥ १ ॥

अत्र गजस्य बलवत्त्वं स्वाभाविकम् । कदाचिदन्यगजेन युध्यमानस्य कातरतया बलहानिश्चेत्तस्य बलवत्त्वं मदेन समर्थितम् ॥ समुद्रस्य भयंकरत्वं स्वाभाविकम् । कदाचिदभ्यासवतो भयंकरत्वाभावे तद्भयंकरता तरङ्गैः समर्थिता ॥ मरुधराधीशो गजसिंहो महान्वीरो बभूव । कदाचिदप्रीत्या दिल्लीशकार्यानङ्गीकारं कुर्याच्चेद्दिल्लीशप्रोत्साहनेन तस्य वीरत्वं समर्थितम् ॥

यथा वा—

रे रे विश्वासघातिन्! चल झटिति गृहं चेत्प्रियादर्शनं ते-
ऽभीष्टं दैवादिदानीं गतिरजनि नवैवेन्दयतां तत्र गत्वा॥
कामस्तावत्सुतीक्ष्णैरतिशयितमसावाशुगैर्विध्यतीमां
मेघेनात्तश्च चापः कथय कथमियं धारयेत्प्राणमद्य ।१।

अत्र मेघेन धनुरादाय विरहिणीमरणं समर्थितम् ॥ परंपरागतं धुरंधरस्येदमुदाहरणम्—

उत्कण्ठिता च तरुणी जगामास्तं च भानुमान् ॥

परकीयाया उपपतिमिलनोत्कण्ठा सूर्यास्तमनेन समर्थिता ॥ धुरंधराभिप्रायमजानाना अर्वाचीना अत्र कारणान्तरयोगं ज्ञात्वा समाधिनामार्थं "सम्यगाधिः समाधिः" इति ज्ञातवन्तः ।.आधिस्तु गर्भाधानम् । "आधिः, आधानम् । आधानं गर्भाधाने" इति चिन्तामणिः ॥ एतेऽत्र समाधिशब्देनैकस्मिन्कारणे कारणान्तरं गर्भरूपमित्यज्ञासिषुः ॥ उक्तसिद्धान्तानुसारेण चन्द्रालोककार इदं लक्षणमाह—

"समाधिः कार्यसौकर्यं कारणान्तरसंनिधेः ॥" इति ॥

चन्द्रालोककारेण "उत्कण्ठिता-" इत्येव चोदाहृतम् । चन्द्रालोककारादीनां मतं तु "कारणान्तरयोगतः कार्यसौकर्यं समाध्यलंकारः"इति ॥ मम तु मतं, केनचित्प्रकारेण वस्तुनः समर्थनं समाध्यलंकारः । कारणान्तरयोगतः कार्यसौकर्यं तु हेत्वलंकारप्रकारभूतायाः कारणमालायाः प्रकारः ॥ अनेककारणानां संयोगेन समकक्षतयैककार्यकर्तृत्वचमत्कारापेक्षयाऽनेककारणसंयोगजनितकार्यसौकर्यचमत्कारस्य सर्वथा विलक्षणत्वाभावात् ॥ ननु वस्तुनः समर्थनमपि केनचिद्धेतुनैव भवतीति समाधेः कथं हेतुतः पृथग्भाव इति चेच्छृणु । कार्यकारणभावसंबन्धे चमत्कारस्य प्राधान्ये कारणनिष्ठमिति तदेव हेत्वलंकारत्वेनाङ्गीकृतम् । न तु कार्यम् । अत्र तु कार्य-

रूपसमर्थने चमत्कारस्य प्राधान्यात्समर्थनस्य समाध्यलंकारत्वेनाङ्गीकारः ॥ अयं विषयः सूक्ष्मया दृष्ट्याऽवधारणीयः ॥ इदं लक्षणं स्वरूपाबोधकतयाऽसंभवदोषग्रस्तम् ॥

इति समाधिप्रकरणम् ॥ ७२ ॥

## समासोक्तिः ॥

समासः संक्षेपः । "समासः संक्षेपे" इति चिन्तामणिः ॥ अत्र संक्षेपशब्दार्थस्त्वल्पेन बह्वभिधानम् । "संक्षेपः स्तोकेन भूयसोऽभिधाने" इति चिन्तामणिः ॥ तथा च स्तोकेन बहुकथनरूपोक्तिः समासोक्तिः ॥ लोकेऽपि हि स्तोकेन बहुकथनं श्लाघनीयं भवति । उक्तलोकव्यवहारानुसारेण धुरंधरः समासोक्त्यलंकारमङ्गीचकार ॥

यस्यां तु रचनायां स्यात्समासेनोक्तिरीश्वर! ॥
समासोक्तिरलंकारस्तत्र धुर्यमते मतः ॥

यथा—

यशवन्त! न शक्तोऽहमनन्तान् भवतो गुणान् ॥
वक्तुमेतावदेवालं त्वत्समस्त्वमसि प्रभो! ॥ १ ॥

अत्र राजराजेश्वरस्यानन्तगुणाः "त्वत्समस्त्वमसि" एतावन्मात्रेण कथिताः ॥

यथा वा—

हे प्राणेशहरे! ते तस्या विरहव्यथां तु किं वच्मि ॥

विरहज्वालाऽऽलीढा मरणं सा मन्यते भद्रम् ॥ १ ॥

अत्र वियोगिन्या अनिर्वचनीयवियोगदशाः "मरणं सा मन्यते भद्रम्" एतावन्मात्रेण कथिताः ॥

यथा वा—

खदिरस्तेऽरिनारीणां वितनोति कुचक्षतम् ॥
केशान् गृह्णाति वासांसि हरते विपिने नृप! ॥१॥

अत्र खदिरवृक्षे कामुकव्यवहारारोपो विवक्षितः ॥ स चात्रोपमाद्वारा रूपकद्वारा वा क्रियते चेत् "कामुकवत् खदिरो नखाग्रेणेव कण्टकाग्रेण कुचक्षतं विदधाति, करेणेव शाखया केशान् गृह्णाति, हठेनेव निबिडत्वेन वसनमपहरति" इत्येतावद्बहुतं कथनीयं स्यात् । तच्चोक्तरीत्या खदिरस्य पुल्लिङ्गतया समानविशेषणैश्च स्तोकेनोक्तम् ॥

यथा वा—

प्रसारयिष्यति करं कलानाथोऽम्बरे ततः ॥
वारुणी दधती रागं संकेतयति शर्वरीम् ॥ १ ॥

कलानाथश्चन्द्रः, कामकलाकोविदश्च ॥ सायंकालेऽरुणत्वमापद्यमाना वरुणदिगिदानीं रात्रिर्भविष्यतीति सूचयत्येव। अत्र चन्द्रबिम्बप्रतीच्योर्जारव्यवहारारोपो विवक्षितः ॥ स च रूपकद्वारोपमाद्वारा वा क्रियते चेत् "उपपतिरूपश्चन्द्रः प्रत्यक्षीभवतीति हस्तरूपकिरणान् वस्त्ररूपाकाशे प्रसारयिष्यतीति हेतुनाऽनुरागरूपं रक्तवर्णं धरन्ती परकीयारूपा पश्चिमदिशा

चन्द्रबिम्बरूपमुपपतिं प्रति रात्रिः प्रतीक्ष्यतामिति रात्रिसंकेतं करोति" इत्येतावद्बहुलतरं कथनीयं स्यात् । तच्चोक्तरीत्या चन्द्रस्य पुल्लिङ्गतया दिशः स्त्रीलिङ्गतया श्लिष्टशब्दैश्च स्तोकेनोक्तम् ॥ अत्र श्लिष्टशब्दानां पृथक्पृथगर्थकल्पना न बुद्धिविषया। किं तूभयार्थचमत्कारस्य श्रुतिमात्रेणैवैकरूपतयाऽवगमः ॥ अयमपि संक्षेपस्य चमत्कारोऽनुभवसिद्धः ॥ अयं सूक्ष्मया बुद्ध्याऽवधारणीयः ॥

धुरंधराभिप्रायापरिज्ञानादर्वाचीना अप्रस्तुतेन प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसालंकारः, प्रस्तुतेनाप्रस्तुतस्य गम्यत्वे समासोक्त्यलंकार इति सिद्धान्तयामासुः ॥ चन्द्रालोके इदं लक्षणम्——

"समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्" इति।

अर्वाचीनैरुच्यते, प्रस्तुतेऽप्रस्तुतस्य स्फुरणं संक्षेपादिति समासोक्तिः ॥ मम तु मतं, अयमेषां प्रमादः । कुत इति चेदुक्तकथनेनैषामयमभिप्रायः । अप्रस्तुतप्रशंसायां वाच्यार्थस्याप्रस्तुतत्वेन तत्र पर्यवसानाभावात्प्रस्तुतार्थस्य न संक्षेपरूपता । अत्र तु वाच्यार्थस्य प्रस्तुतत्वेन तत्र पर्यवसानमित्यप्रस्तुतार्थस्य संक्षेपरूपतेति । तन्न समीचीनम् । व्यङ्ग्ये गम्यत्वमर्थात्प्रतीतिमात्रमिति तत्सूक्ष्मरूपम् । न तु संक्षेपरूपम् । स्तोकेन भूयसोऽभिधानं नेति भावः। समासोक्तिनामस्थापकधुरंधरः कण्ठरवेण समासोक्तिरित्याह । उक्तिस्तु वाच्यार्थस्य विषयः । न तु व्यङ्ग्यस्य । अस्य मतेन तु सर्वत्रापि व्यङ्ग्यस्थले समासोक्त्यलंकारप्राप्त्या व्यङ्ग्योच्छेदप्रसङ्गः ॥ अप्रस्तु-

तेन 'प्रस्तुतस्य गम्यत्वमित्यप्रस्तुतप्रशंसायाः स्वरूपमपि न भवति। तत्स्वरूपं त्वप्रस्तुतप्रशंसाप्रकरणे द्रष्टव्यम्॥ नामार्थविरुद्धलक्षणनिर्माणं चासंभवदोष इतीदं लक्षणमसंभवदोषग्रस्तम्॥ इति समासोक्तिप्रकरणम्॥७३॥

## ॥ समुच्चयः ॥

समुच्चयशब्दार्थः समूहः। "समुच्चयः राशौ" इति चिन्तामणिः॥ खले धान्यराशौ धान्यकणानां समूहो भवति। तथेहाप्येकधर्मिणां समुच्चये रूढिः॥

"समुच्चयाख्योऽलंकार एकधर्मिसमुच्चयः॥

यथा—

यशवन्तनृपो दाता, मरुदेशो निरामयः॥
जन्म चारणवंशेऽर्थ्यं भाग्याल्लब्धं मुरारिणा॥ १॥

अत्र भाग्यान्मम मुरारिदानस्योत्तमवस्तुलाभसमुच्चयः॥

यथा वा—

शशी दिवसधूसरो गलितयौवना कामिनी.
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः॥
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे॥१॥

अत्र भर्तृहरिमहाराजेन मनसः शल्यभूतवस्तूनां समुच्चयः कृतः ॥

चन्द्रालोककारः समुच्चयद्वयं मन्वान इमानि लक्षणोदाहरणान्याह—

ब्रहूनां युगपद्भावभाजां गुम्फः समुच्चयः ॥

यथा—

नश्यन्ति पश्चात्पश्यन्ति त्रस्यन्ति च भवद्द्विषः ॥

अत्र शत्रुविषयास्थैर्यग्रीवाभङ्गुरेक्षणभयानां बहूनां युगपद्भाविनां निबन्धनम् ॥ मम तु मतं, उदाहरणान्तरमेतत् ॥ द्वितीयस्येदं लक्षणम्—

"अहंप्रथमिकाभाजामेककार्यान्वयेऽपि सः ॥" इति ॥

अहमहमिकास्वरूपं तु बहूनामेककार्यकारित्वेऽहं प्रथमं कुर्यामहं प्रथमं कुर्यामिति ॥ यथा खले पततां कपोतानां गणोऽहं पूर्वमहं पूर्वमिति पतति ॥

यथा—

कुलं रूपं वयो विद्या धनं च मदयन्त्यमुम् ॥

अत्राहंप्रथमिकाभाजां समुच्चयस्तूदाहरणान्तरमात्रम् । न त्वलंकारान्तरम् ॥ ग्रन्थकारा इमं कारणमालाख्यमुपमाप्रकारं मन्यन्ते ॥ तत्समीचीनम् ॥

यथा वा—

अहमहमिकया चित्तं चक्षुश्चातुर्यमेति संद्वाद्विम् ॥
प्रोत्साहनेन कामस्येति मया मन्यते राजन्! ॥१॥

मम तु मतं, अर्वाचीनानां नियमितसमुच्चयावेव न समुच्चयालंकारः। किं तु यथाकथंचिदेकधर्मिवस्तुमात्रस्य समुच्चये समुच्चयालंकारः॥ मदुक्तोदाहरणद्वयेऽप्युक्तलक्षणयोरव्याप्तिः॥ अस्योक्तलक्षणद्वयमपि स्वरूपाबोधकमव्याप्तिदोषग्रस्तं च ॥ इति समुच्चयप्रकरणम् ॥ ७४ ॥

## ॥ सहोक्तिः ॥

सहभावस्योक्तिः सहोक्तिः ॥

उक्तिस्तु सहभावस्य सहोक्तिर्भूषणं भवेत् ॥
अलंकारोऽत्र न सह शिष्येण गुरुरागतः ॥१॥

रमणीयः सहभाव एव सहोक्त्यलंकारः ॥ न तु "सह शिष्येणागतो गुरुः" इत्यरमणीयसहभावोऽपि ॥ अनेन दिग्दर्शनेन सर्वेष्वप्यलंकारेषु रमणीयत्व एवालंकारत्वमिति ज्ञेयम् ॥

यथा--

यशवन्तयशः प्राप्तं समुद्रं शत्रुभिः सह ॥
श्रीरायातारिधरया सह लोको वदत्ययम् ॥ १ ॥

चन्द्रालोके इदं लक्षणम् ॥

" सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः ॥" इति ॥

इदं लक्षणं नामार्थानुसारि ॥ इति सहोक्तिप्रकरणम् ॥७५॥

## सारः ॥

---

सारशब्दार्थः श्रेष्ठः । " सारः श्रेष्ठे " इति चिन्तामणिः ॥ वस्तुनः श्रेष्ठोऽशः सार इति लोके प्रसिद्धः॥ तस्मिन्निह रूढिः ॥

भूपते! वस्तुनः सारः सारालंकृतिरिष्यते ॥
त्वमेनां सुष्ठु जानीषे श्लाघन्ते सर्वमानवाः ॥१॥

यथा--

भक्ष्यपानादिजसुखं सर्वैरत्रानुभूयते ॥
सुरक्षां नृपतासारं मनुते मरुभूपतिः ॥ १ ॥

अत्र राज्यवस्तुनि प्रजापालनं सारः ॥

यथा वा--

अस्मिन्नपारे संसारे सारभूतं कवेर्वचः ॥
यशवन्तमहाराजः श्लाघते यन्मुहुर्मुहुः १ ॥ ॥

अत्र संसारवस्तुनि कविरचना सारभूता ॥ सारशब्दार्थो गमनमपि । सरणं सारः । "सृ गतौ" इत्यस्माद्धातो घञ्-

अर्वाचीनाः कचित्तादृशोदाहरणलाभेन भ्रान्ताः सारशब्दार्थं गमनं ज्ञातवन्तः ॥ तदनुसारेण चन्द्रालोके इदं लक्षणम्—

" उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते " इति ॥

उत्तरोत्तरमुत्कर्षः सार इति कथनेन चन्द्रालोककारस्याप्ययमेवाशयः, सर्वस्मात्पर उत्तरोत्तरमुत्कर्षः सार इति ॥ काव्यप्रकाशकारेण च—

" उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥"

इत्युक्त्वा स एवाभिप्रायः स्पष्टीकृतः ॥ चन्द्रालोके इदमुदाहरणम्—

मधुरं मधु तस्माच्च सुधा तस्याः कवेर्वचः ॥

अस्य मतेऽत्र मधुरतायाः सरणं गमनमुत्तरोत्तरमुत्कर्षमाप्नुवत्कविवाण्यां परावधिसाररूपं सत्सारालंकारः ॥ मम तु मतं, नात्रायं सारशब्दार्थः । न चेदं सारस्वरूपमपि । धातूनामनेकार्थत्वान्मदुक्तो लोकप्रसिद्धः श्रेष्ठांश एवात्र सारशब्दार्थः ॥ इदं लक्षणं सारालंकारस्वरूपे न संभवतीत्यसंभवदोषग्रस्तम् ॥ इति सारप्रकरणम् ॥ ७६ ॥

## सूक्ष्मः ॥

सूक्ष्मशब्दार्थ इन्द्रियागोचर इति ॥ "सूक्ष्मः, इन्द्रियागोचरे " इति चिन्तामणिः ॥

इह स्वरूपं सूक्ष्मस्येन्द्रियागोचरता नृप! ॥
तादृशं वर्णनं यत्र तत्र सूक्ष्माख्यभूषणम् ॥१॥

यथा—

यशवन्तमहाराजमन्त्रो न परतन्त्रकः ॥
अत एवाखिलालक्ष्यः परब्रह्मेव सर्वदा ॥ १ ॥

अत्र राजराजेश्वरस्य मन्त्रोऽन्यश्रवणमनोनयनागोचरत्वात्सूक्ष्मः। स च रमणीयतयाऽलंकारः ॥

यथा वा—

गङ्गासूर्यसुतान्तरे निगमगीर्बोध्या सरस्वत्यलं
चान्द्री चापि कलाऽम्बरे प्रतिपदः शास्त्रेण संज्ञायते ॥
यद्वत्त्वानुमितिप्रबोध्यमधिप! बूह्मास्ति तद्वद्धिया
कामिन्या अनुमीयते कटिरियं यच्चक्षुषोऽगोचरा ॥१॥

अत्र सरस्वत्यादेर्नेत्रेन्द्रियागोचरत्वेन चमत्कारकारितया सूक्ष्मालंकारः ॥ अल्पालंकारे त्वल्पत्वमिह त्विन्द्रियागोचरत्वमिति महद्वैलक्षण्यम् ॥

यथा वा—

रविप्रणामव्याजेनाप्रार्थयत्तां कृताञ्जलिः ॥
सा च नीलनिचोलेन स्वचूडामणिमावृणोत् ॥ १ ॥

कवेरुक्तिरियम् ॥ अत्र दंपत्योः साभिप्रायचेष्टायां नायकनिष्ठसमागमेच्छाया नायिकानिष्ठरात्रिसंकेतसूचनस्य च

सूक्ष्मरूपत्वात्सूक्ष्मालंकारः ॥ एतादृशसूक्ष्मताया अन्यलक्ष्यत्वेऽपि न काचिद्धानिः ॥ यथा मिलितालंकारे उन्मीलितत्वेऽपि न हानिः ॥

चन्द्रालोके इदं लक्षणोदाहरणम्—

"सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितम् ॥

यथा—

मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् ॥

अस्मिन्नुदाहरणेऽस्य लक्षणसंगतिस्त्वेवम् । सखायं प्रति नायकस्योक्तिरियम् ॥ मयि तद्दिशि पश्यति तया सीमन्तमणिः केशैर्गोपितः ॥ अत्रायं भावः, नायकस्य तादृशदृष्ट्या समागमेच्छां विज्ञाय नायिकया सूर्यास्तसमयः संकेतत्वेन सूचित इति ॥ मम तु मतं, अत्रोभयोरपि साभिप्राया सूक्ष्मरूपा चेष्टा पृथक्पृथक् सूक्ष्मालंकारद्वयमिति ॥ ईदृशोदाहरणभ्रमेणार्वाचीनानामुक्तलक्षणनिर्माणं प्रमादमूलम् ॥ उक्तलक्षणस्य पूर्वोदाहरणेष्वन्येष्वपि चाव्याप्तेः ॥ पूर्वोक्तोदाहरणद्वये न काचिच्चेष्टोपलभ्यते। किं चैकस्यैव स्वसंबन्धिसूक्ष्मचेष्टायामपि सूक्ष्मालंकारो दृश्यते ॥ परस्य सूक्ष्मचेष्टां विज्ञाय तं प्रति बोधयितुं सूक्ष्मचेष्टाकरणस्यास्मिन्नलंकारे न मनागप्युपयोगः ॥ इदं लक्षणमव्याप्तिदोषग्रस्तम् ॥ इति सूक्ष्मप्रकरणम् ॥ ७७ ॥

## स्मृतिः ॥

स्मृतिशब्दार्थस्तु चिरानुभूतस्यार्थस्य स्मरणशक्तिरिति ॥

" स्मृतिः चिरानुभूतार्थस्मरणशक्तौ " इति चिन्तामणिः ॥ चन्द्रालोककारोऽपि स्मृत्यलंकारस्य नामैव लक्षणमाह ॥

चिरानुभूतस्यार्थस्य स्मरणं भूषणं स्मृतिः ॥
यशवन्तमहाराज! सा चानेकविधा मता ॥१॥

यथा–

विद्यावृद्धिकरं भव्यमत्युदारं मनोहरम् ॥
त्वां वीक्ष्य मरुभूपाल! भोजं स्मरति विश्वकम् ॥१॥

अत्र भोजमहाराजसधर्माणं राजराजेश्वरं समीक्ष्य श्रवणद्वारा चिरानुभूतस्य भोजराजस्य स्मृतिः ॥

यथा वा–

पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥

अत्र नायिकामुखसदृशपद्मदर्शनाद्दृष्टिद्वारा चिरानुभूतस्य नायिकामुखस्य स्मृतिः ॥ काव्यप्रकाशकारादयस्तु सदृशवस्तुदर्शनजन्या स्मृतिः स्मृत्यलंकार इत्याहुः ॥ भोजमहाराजादयश्च केनचित्प्रकारेण स्मृतौ सत्यां स्मृत्यलंकार इति वदन्ति ॥ भोजराजेन सहास्माकमैकमत्यम् ॥

यथा–

गतं तमो विस्मृतिरूपमात्मनः ॥

विस्मृत्यपगमस्तु स्मृतिरेव ॥ अत्र निर्निमित्तस्मृतिः ॥

यथा वा–

मेघाचितं वियद्दृष्ट्वा स्मृतिमारूढवान् प्रियः ॥

अत्र सदृशदर्शनं विनोद्दीपनेन स्मृतिः ॥

यथा वा–

दिल्लीपुरसभामध्ये यो दृष्टो मरुभूपतिः ॥
सोऽयं राठोडवंशीयो यशवन्तनरेश्वरः ॥ १ ॥

अत्र समयान्तरावलोकितराजराजेश्वरस्य पुनर्दर्शनेन दिल्लीपुरसभादृष्टोऽयमेव राजराजेश्वर इत्यभिज्ञानम् । तच्च प्रत्यभिज्ञानरूपा स्मृतिः ॥

यथा वा–

स्वप्नेऽहं प्रगता तटं रविसुताया यत्र कृष्णो नट-
स्तास्ते तत्र ममाञ्चलं स धृतवान् भावस्मिते दर्शयन् ॥
तावद्गोरव आगतः श्रुतिपथं मन्थस्य चापि क्षणा-
द्बोधे नैव घनं वनं न च हरिर्नो वा तटं यामुनम् ॥१॥

अत्र प्रथमानुभूतकृष्णसंबन्धी स्वप्नः स्मृतिरूप एव ॥ अस्याप्युपलक्षणेन स्मृतौ संग्रहः ॥

यथा वा—

अज्ञैरभक्तैर्व्रजवासिनो जनान्
क्षारोदकूपैर्यमुनां महानदीम् ॥
अर्कादिवृक्षैश्च तमालपादपान्
पिकध्वनिं काकरवैः स्मराम्यहम् ॥ १ ॥

अत्र वैधर्म्यदर्शनेन स्मृतिः ॥ स्मृतिः संचारिभावोऽपि ॥ रसस्यावयवरूपत्वे स्मृतेः संचारित्वम् । अन्यत्रालंकारत्वमिति विवेकः ॥

यथा—

सौमित्रे! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते! चन्द्रोऽयमुन्मीलति ॥
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि! हा कुरङ्गनयने! चन्द्रानने! जानकि! ॥१॥

अत्र जानक्यालम्बनविभावः । चन्द्र उद्दीपनविभावः । "क्वासि प्रेयसि!" इत्यादि रामचन्द्रवचनमनुभावः ॥ अत्र "चन्द्रोऽयमुन्मीलति" इत्युक्त्या चन्द्रसदृशजानकीमुखस्य "धत्ते कुरङ्गं यतः" इत्युक्त्या च मृगनयनसदृशजानकीनेत्रयोः स्मृतिः संचारिरूपा ॥ जानकीविषया रामचन्द्रस्य रतिः स्थायिभावः ॥ इत्थमिह विभावानुभावसंचारिभावसंयोगाद्विप्रलम्भशृङ्गाररसनिष्पत्त्या स्मृतेः संचारित्वम् ॥ संचारितायाश्चमत्कारस्य प्राधान्यात् ॥ इति स्मृतिप्रकरणम् ॥ ७८ ॥

## ॥ स्वभावोक्तिः ॥



स्वभावस्तु सहजो धर्मविशेषः । "स्वभावः सहजधर्मविशेषे" इति चिन्तामणिः ॥ सहजः सहजन्मा । तादृशस्वभावस्योक्तिः कथनं स्वभावोक्तिः । स्वभावोक्तिरिति कथनाभि-

प्रायस्तु क्रियाऽऽकृत्यादिसहजन्मधर्मणां यथावदुक्तिः। न तु कविप्रतिभोत्थापितोक्तिरिति ॥

उक्तिर्वस्तुस्वभावस्य स्वभावोक्तिरलंकृतिः ॥
यथा यथार्थता राजन्! चित्रस्य स्यान्मनोहरा॥ १॥

यथा–

प्रसन्नास्यो विशालाक्ष आजानुभुज उज्ज्वलः ॥
मरुपालोऽस्ति मरुपो यशवन्तनरेश्वरः ॥

अत्र राजराजेश्वरस्याकृतेर्वर्णस्य च स्वभावोक्तिः ॥

यथा वा–

जायन्ते खलु तारका हतरुचो मार्तण्डतेजोऽरुण-
मुल्लासः कमलव्रजस्य मुनिराड्वेदध्वनिश्चोच्चकैः ।
निद्राभङ्गमुपैति विश्वमलयो दीनानुरक्ताः शुचा
हीनः कोकगणस्तदा कविजनस्त्वां स्तौति वख्ते-
शा! भोः ॥ १ ॥

इदं पद्यं योधपुरराज्यप्रथमश्रेणीकसामन्ताऽऽउवाग्रामाधिपतिचाम्पावतठक्कुरवख्तावरसिंहविषयं कविराजवाङ्कीदासकथितम् ॥ अत्र प्रातःकालस्य स्वभावोक्तिर्यथार्थतया चमत्कारमावहतीत्यलंकारः ॥

यथा वा–

अगाधाः सरितोऽनन्ता विशालास्तरवस्तथा ॥

कूजन्ति कोकिला मत्ता गौडदेशे महीपते! ॥१॥

देशस्य स्वभावोक्तिरियम् ॥

चन्द्रालोके इदं लक्षणम्—

स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् ॥

इदं लक्षणं नामार्थानुसारि ॥ इति स्वभावोक्तिप्रकरणम् ॥ ७९ ॥

## ॥ हेतुः ॥

हेतुः कारणमिति पर्यायान्तरम् ॥ हिनोति व्याप्नोति कार्यमिति हेतुः ॥ कार्योत्पादको हेतुरितिभावः ॥ स च द्विविधः ॥ कारको ज्ञापकश्च ॥ उत्पादकत्वं कारकत्वम्। यथाग्निर्धूमस्य कारकहेतुः । धूमस्योत्पादकत्वात् ॥ बोधयितृत्वं ज्ञापकत्वम् । यथाग्नेर्धूमः ॥ धूमोऽग्नेरुद्भवतीत्यग्नेः कार्यम्। तथाप्यग्निं ज्ञापयतीति धूमोऽग्नेर्ज्ञापकहेतुः ॥

हेतुर्हेतुरलंकारो धुरंधरमते भवेत्॥
कारको ज्ञापकश्चेति स द्विधा भूप! भण्यते ॥१॥

क्रमेण यथा—

सर्वे वर्णाश्रमा नीतिवशान्मरुपतेर्मरौ ॥
स्वधर्मनिरताः सन्ति रामराज्ये यथा पुरा ॥

अत्र चतुर्णां वर्णाश्रमाणां स्वस्वमर्यादायां प्रवृत्तौ राजराजेश्वरः कारकहेतुः ॥

संयुध्यमानान्करिमल्लसंघान्
मिथस्तुरङ्गान् भ्रमिमादधानान् ॥
दृष्ट्वा नृपाभान्कविराजपूगान्
विज्ञायते श्रीयशवन्तराज्यम् ॥ १ ॥

अत्र बाष्पशकटाधिरूढपथिकानां यशवन्तसिंहराज्यज्ञापने मल्लयुद्धादिकं ज्ञापकहेतुः ॥ अत्र ज्ञापकहेतूनां मालात्वात्कारणमालेयम् ॥ माला तु बहूनामलंकाराणां प्रकारत्वमापद्यते । यथा मालोपमा, रूपकमालेत्यादि ॥

यथा वा—

श्रीमत्सज्जनभूप! दानमखिलैस्ते पूजनीयं परं
नादास्येऽहमयाचको मरुपतेर्नायं च दोषो मम ॥
मन्तव्यो भवदीयपूर्वपुरुषा धर्मस्य कार्ये सदा
राणास्त्राणपरा बभूवुरिति ते प्रार्थी मुरारिः कविः ॥१॥

अस्माभिः कस्यचिद्व्रतभङ्गो न विधेय इति मेदपाटेश्वरमहाराणासज्जनसिंहं प्रति ज्ञापने भवत्पूर्वपुरुषाः सदैव धर्मत्राणपरा आसन्नित्यर्थो ज्ञापकहेतुः ॥

चन्द्रालोके इमानि लक्षणोदाहरणानि—

हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ॥

हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते ॥ १ ॥

क्रमेण यथा—

असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥
लक्ष्मीविलासा विदुषां विलासा वेङ्कटप्रभोः ॥

मम तु मतं, कार्येण सह हेतोः कथनमिति तु हेत्वलंकारस्य स्वरूपं न भवति । किं तु कारणात्कार्योत्पत्तिरिति हेतुस्वरूपम् ॥ किं च द्वितीयलक्षणोदाहरणयोर्हेतुतायाश्चमत्कारस्य न प्राधान्यम् । किं त्वभेदचमत्कारस्येत्ययमभेदालंकारस्य विषयः ॥ प्रथमलक्षणं साक्षात्स्वरूपावोधकम् । द्वितीयमपि तथेत्युभयमप्यसंभवदोषग्रस्तम् ॥ इति हेतुप्रकरणम् ॥ ८० ॥

उपमा[1]ऽतद्गुण[2]श्चातिश[3]योक्त्यतुल्य[4]योगिते ॥
अ[5]धिकं चानव[6]सराऽनु[7]ज्ञाऽन्योन्य[8]ानि भूपते! ॥१॥
अप[9]न्हुतिरथापू[10]र्वरूपं चाप्रत्य[11]नीककम् ॥
अप्रस्तु[12]तप्रशंसा स्यादभे[13]दश्चाल्प[14]भूषणम् ॥ २ ॥
अव[15]ज्ञाऽवस[16]राऽऽक्षेपा[17]ऽऽभास[18]श्चाप्युत्त[19]रं ततः ॥
उत्प्रेक्षा[20] च नृपो[21]दात्तमुदाह[22]रणमेव च ॥ ३ ॥
उल्ले[23]खैकाव्य[24]र्थापत्ती क्रम[25]श्चापि च तद्गु[26]णः ॥
यशवन्तमहाराज! ततः स्यात्तुल्ययोगिता[27] ॥ ४ ॥
दीप[28]कं चैव दृष्टा[29]न्तो महाराज! निद[30]र्शना ॥
नियम[31]श्च निरु[32]क्तिश्च तथा प[33]रिकरो मतः ॥ ५ ॥

परिणामस्ततो राजन्परिसंख्या ततः परम् ॥
पर्यायश्चैव पर्यायोक्तिर्भूषा पिहितं तथा ॥ ६ ॥
पूर्वरूपानन्तरं च प्रतिमा प्रत्यनीककम् ॥
प्रहर्षणं भाविकं चालंकारो मरुभूपते! ॥ ७ ॥
भ्रान्तिर्मिथ्याध्यवसितिर्मीलितं मिषमेव च ॥
मुद्रा रत्नावली भूप! रूपकं लेश एव च ॥ ८ ॥
लोकोक्तिश्चैव वक्रोक्तिर्विकल्पश्च ततः स्मृतः ॥
विकासश्च विचित्रं च विध्यलंकार एव च ॥ ९ ॥
विनोक्तिश्च विरोधो वै विशेषोक्तिस्ततः परम् ॥
विषमं च विषादो वै व्यतिरेकस्ततो नृप! ॥ १० ॥
व्याघातः शृङ्खला श्लेषः संकोचः संशयस्तथा ॥
संभावनं च संस्कारः समालंकार एव च ॥ ११ ॥
समाधिश्च समासोक्तिः समुच्चय उदाहृतः ॥
सहोक्तिसारसूक्ष्माख्याः स्मृतिश्चापि ततः परम्॥१२॥
स्वभावोक्तिश्च हेतुश्चेत्यशीतिर्भूषणानि वै ॥
एष्वन्तर्भावमायान्तीतरे मरुमहीपते! ॥ १३ ॥
नामैवैषां लक्षणमेतान्नाम्नैव वेद दक्षोऽसौ ॥
यशवन्तभूषणेतिप्रबन्धसारो हि भूप! नामार्थः ॥१४॥
तादृशभूषणनाम्नां कण्ठे कण्ठीं दधाति यो मनुजः ॥
भूमण्डलस्य स स्याद्भूषणभूतो बुधैः सुसंमान्यः॥१५॥
विद्यार्थिनो हि पूर्वं लोकन्यायादवेत्य नामार्थान् ॥

पश्चादुदाहृतीर्वै विलोक्य सन्त्वत्र कृतकृत्याः ॥१६॥
अधुना कोऽपि न कथयेत्सुगमा एतेऽखिला हि नामार्थाः ॥
ज्ञाताः किमिति न पूर्वं सिता(*) यदाऽऽसन् भ्रमाख्यजालेन ॥१७॥
वेदादिभिश्च बहुलैः साधनसंघैः प्रपञ्चमिथ्यात्वे ॥
निर्णीते नृप! वेदादेर्व्यर्थत्वं कथं वदेन्मनुजः ॥१८॥
अन्यदीयामुपकृतिं महाराजोत्तमा जनाः ॥
न विस्मरन्ति स्वाभाव्यात्कार्यसिद्धौ कदाचन ॥१९॥

शोभाकरा चातिविलक्षणा च
स्पष्टा च लभ्येत चमत्कृतिश्चेत् ॥
तदेच्छया भूमिप! भिन्नभूषा
संमान्यतामुक्तविभूषणेभ्यः ॥ २० ॥

उक्तालंकारमध्येऽपि वदेत्कश्चित्सयुक्तिकम् ॥
अन्तर्भावं भूषणस्य माननीयं हि तन्नृप! ॥ २१ ॥

---

बहव आचार्यास्तु द्विविधमेवालंकारं मन्यन्ते । शब्दस्य शोभाकरः शब्दालंकारः । अर्थस्य शोभाकरोऽर्थालंकारः । यद्वा शब्दरूपेण काव्यशोभाकरः शब्दालंकारः । अर्थरूपेण काव्यशोभाकरोऽर्थालंकार इति ॥ कतिचनाचार्या उभयालंकाररूपं तृतीयं प्रकारं मन्यन्ते ॥ भगवान्वेदव्यास उभयालंकारस्येदं स्वरूपमाह—

---

(*) सिता बद्धाः ॥ षिञ् बन्धने क्तः ॥

"शब्दार्थयोरलंकारो द्वावलंकुरुते समम् ॥
एकत्र निहितो हारः स्तनग्रीवामिव स्त्रियाः ॥१॥"
इति ॥

भगवता वेदव्यासेन समासोक्तिपर्यायोक्तिप्रभृतयोऽलंकारा उभयालंकारत्वेन स्वीकृताः । समासोक्तौ संक्षेपेऽलंकारत्वम् । अर्थे संक्षेपे कृते शब्दस्यापि संक्षेपो भवतीति संक्षेपः शब्दार्थयुगलस्य युगपच्छोभाकरत्वादुभयालंकाररूपः ॥ पर्यायोक्तौ तु पर्यायेऽलंकारत्वम् । अर्थपर्याये कृते शब्दस्यापि पर्यायो भवतीति पर्यायः शब्दार्थयुगलस्य युगपच्छोभाकरत्वादुभयालंकाररूपः ॥ भोजमहाराज उभयालंकारविषये इदमाह—

"शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते ॥
विशिष्टोऽर्थः कवीनां स उभयालंक्रिया मता॥ १ ॥"
इति ॥

महाराजेनोपमारूपकादयश्चतुर्विंशतिरलंकारा उभयालंकारत्वेन स्वीकृताः ॥ तस्यायमभिप्रायः, उपमायामुपमानोपमेयसाधर्म्यारूपार्थस्य विषयः । उपमावाचका इवादिशब्दाः शब्दस्य विषयः । उक्तशब्दार्थयुगलेनोपमा प्रतीयत इत्युपमाया उभयालंकारता । रूपके "मुखमेव चन्द्रः" इत्यादावभेदवाचक एवशब्दः, संदेहे संदेहवाचकाः किमादिशब्दाः, उत्प्रेक्षायां चोत्प्रेक्षाद्योतका मन्ये इत्यादयः शब्दा अर्थेन सह संबद्धा रूपकसंदेहोत्प्रेक्षारूपालंकाराणां प्रतीत्याधायका इत्युक्तालंकाराणामुभयालंकारता ॥ एवमन्येष्वपि ज्ञेयम् ॥ काव्य-

प्रकाशगतकारिकाकारस्यायं सिद्धान्तः, पदपरिवर्तनं सहते-ऽसावर्थस्य विषयः। पदपरिवर्तनं न सहतेऽसौ शब्दस्य विषयः। उभयोर्मिश्रितत्वे उभयालंकार इति॥ अयं केवलं पुनरुक्तवदाभासमेवोभयालंकारं मन्यते। तत्र पुनरुक्तवदाभासस्येदं लक्षणम्–

"पुनरुक्तवदाभासो विभिन्नाकारशब्दगा॥
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम्॥" इति॥

शब्दपुनरुक्तवदाभासो यथा—

चकासत्यङ्गनारामाः॥

अत्र "अङ्गने गृहाङ्गणे आरामा येषां ते" इति विग्रहः॥ अङ्गना-रामेतिशब्दयुगलस्य स्त्रीवाचित्वाच्छ्रवणमात्रेण पुनरुक्तेर्भानेऽपि, अङ्गनस्थानेऽजिरेति, आरामस्थाने चोपवनेति पदपरिवर्तने पुनरुक्तिर्निवर्तते इतीह पुनरुक्तवदाभासालंकारः शब्दरूपः॥

शब्दार्थपुनरुक्तवदाभासो यथा—

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः॥
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः॥ १॥

सिंहवर्णनमिदम्॥ अत्र तनुवपुःशब्दयोः शरीरार्थकतया, करिकुञ्जरशब्दयोर्गजार्थकतया, रुधिररक्तशब्दयोः शोणितार्थकतया, तेजोधाममहःशब्दानां तेजोऽर्थकतया, इन्द्रह-

रिजिष्णुशब्दानां च देवेन्द्रार्थकतया श्रुतिमात्रेण पौनरुक्तयाभासः। तत्र तनु-कुञ्जर-रक्त-धाम-हरि-जिष्णुशब्दाः पदपरिवर्तनं न सहन्त इति शब्दविपयत्वम् । वपुः-करि-रुधिर-इन्द्रशब्दाः पदपरिवर्तनं सहन्त इत्यर्थविपयत्वम्। उभयोर्मिश्रणादुभयालंकारोऽयम् । मम तु मतं, त्रयाणामप्युभयालंकारलक्षणानि श्रुतिमात्रेणैव सयुक्तिकानि भासन्ते इति लक्षणाभासरूपाणि। उदाहरणेष्वघटनात् ॥ काव्यस्य शरीरं शब्दार्थोभयात्मकम्। तत्र शब्दरूपेण शोभाकरः शब्दालंकारः। अर्थरूपेण शोभाकरोऽर्थालंकारः।शब्दोऽर्थस्य शोभाकरो न भवति, अर्थश्च शब्दस्य शोभाकरो न भवतीति कथं वा शब्दार्थोभयमिश्रणादुभयालंकारत्वसंभवः ॥ शब्दमात्रेण चमत्कृतिमत्त्वं शब्दालंकारत्वम्। यथा "पुच्छोच्छालन-" इत्यत्रार्थविचारं विना श्रवणमात्रेण शब्दालंकारानुप्रासस्य श्रवणचमत्कारकारित्वम् । उपमाद्यलंकारेषु चार्थविचारेण चित्तस्य चमत्कृतिमत्त्वम्। भगवान्वेदव्यासः समासोक्त्यादीनुभयालंकारानाह। परं तु ते केवलमर्थस्यैव शोभाकराः। न तु शब्दस्यापि ॥ भोजमहाराज उपमादीनुभयालंकारान्कथयति। परं तूपमाद्यलंकारस्वरूपमिवादिशब्दैर्न प्रतीयते। किं तु विदुपामर्थविचारेणैव प्रतीयते ॥ काव्यप्रकाशकारेण पदपरिवर्तनासहत्वं शब्दस्य विपयः, पदपरिवर्तनसहत्वमर्थस्य विपय इति व्यवस्थापितम्। तत्तु प्रमादः ॥ "श्रोत्रग्राह्यो गुणः शब्दश्चित्तग्राह्योऽर्थ इष्यते॥" इति शब्दार्थयोः सामान्यलक्षणस्य विद्यमानत्वात् ॥ शब्दालंकारार्थालंकारलक्षणं

त्वस्माभिः प्रागादिष्टम् ॥ पदपरिवर्तनसहत्वासहत्वेतिव्यव-स्था तु शब्दार्थदोषविषया । तस्या अलंकारेषु नोपयोगः ॥

यथा—

गङ्गाधारोपरि पारदप्रवाहः पयस्तरङ्गिण्याम् ॥
पूरोऽमृतस्य हिमभुवि घनसारस्य प्रसार आविमलः ॥१॥
स्फटिकशिलायां हीरकहारः सितचन्दनः सरस्वत्याः ॥
अङ्के च चन्द्रिकायां शारद्यां राजतो वितानश्च ॥२॥
श्रीरघुराजसुशब्दो भवत इदानीं बघेलकुलकीर्तेः ॥
उपरि जजागारायं कविरजवेशो जगावेतत् ॥ ३ ॥

कुलकम्

चिन्तामणिकोपकारेण यशसः पर्यायः सुख्यातिरित्युक्तः । तेनैव दिग्दर्शनेनात्र सुशब्दसुखशब्दौ यशसः पर्यायत्वेनोक्तौ ॥ मरुधराधीशतख्तसिंहश्यालकरीवांनरेश्वररघुराजविषया तन्महापात्रभट्टाजवेशरचनेयम् ॥ अत एवास्माभिरत्र परिहासः कृतः॥अत्र रीवांनरेश्वरकुलकीर्तेः स्त्रीत्वेन रीवांनरेश्वर-रघुराजसुशब्दस्य च पुंस्त्वेन संयोगवर्णने जुगुप्साऽश्लीलदोषः । अत्र कीर्तिसुशब्दयोः स्थाने श्लाघासुखेति पदपरिवर्तनेऽपि जुगुप्साऽश्लीलदोषस्यानिवृत्तेरत्र पदपरिवर्तनसहनार्थस्यायमश्लीलदोषः ॥ उक्तसंयोगवर्णने " जजागार " इति शब्दस्य व्रीडाद्योतकतयाऽश्लीलदोषः ॥ अत्र जजागारेतिस्थले प्रचकाशेतिपदपरिवर्तने व्रीडाऽश्लीलदोषस्य निवृत्तेरत्र पद-

परिवर्तनस्यासहनाच्छब्दस्यायमश्लीलदोषः ॥ किं च "वघेलकुलकीर्तेरुपरि" इत्यत्रोपरिशब्दस्य स्थाने ऊर्ध्वमित्यादिपदपरिवर्तनेऽपि व्रीडाऽश्लीलदोषस्यानिवृत्तेरर्थस्यायमश्लीलदोषः ॥ काव्यप्रकाशस्य "चकासत्यङ्गनारामाः" इत्युदाहरणे शब्दपुनरावृत्तेरभावान्न मनागपि श्रवणसुखकारिता । न चात्र शब्दपुरस्कारेण पुनरुक्तेराभासोऽपि । अर्थमूलकत्वात् ॥ तथैव "तनुवपुः" इत्युदाहरणेऽपि तनुवपुरित्यादिशब्दानां पुनरावृत्तेरभावान्न श्रवणसुखकारिता । न च शब्दपुरस्कारेण पुनरुक्तेराभासोऽपि। अर्थमूलकत्वात् । उक्तोदाहरणे करिकुञ्जरेत्यत्र ककाररकारयोः पुनरावृत्तिरनुप्रासाख्यः शब्दालंकारः । स च वास्तवो न त्वाभासरूपः । अत्र करिकुञ्जरेतिवाक्यरूपकाव्यस्यार्थस्य पुनरुक्तेराभासः पृथक्शोभाकरः, वर्णानां पुनरावृत्तिश्च पृथक् शोभाकरेति द्वयोरेकरूपतया शोभाकरत्वाभावान्नोभयालंकारः ॥ किं त्वाभासानुप्रासयोरेकवाचकानुप्रवेशसंकरः ॥ अलंकारद्वयमिश्रणे संसृष्टिसंकरावित्येते । तयोः स्वरूपमन्तर्भावाकृतौ सविस्तरं वक्ष्यामः ॥ क्वचित्काव्ये न केवलं दूषणोद्धारमात्रम् । किं तु तस्मात्परत्र दूषणाभासस्य चमत्कारश्चेत्तत्राभासालंकारस्य दूषणाभासाख्यः प्रकारो भविष्यति ॥

यथा—

यशवन्तमहाराजसेनेयं समुपस्थिता ॥
देहि स्वामिन्महाबुद्धे! वारणं वा रणं द्रुतम् ॥ १ ॥

अत्र श्रवणमात्रेण "वारणं वारणं" इति पुनरुक्तिदोषो भासते । परं त्वर्थविचारे कृते वारणं गजं, वा रणं देहीत्यभङ्गसभङ्गश्लिष्टपदज्ञाने दूषणोद्धारपूर्वकं तस्मात्परत्राभासालंकारस्य चमत्कारोऽनुभूयते । मम तु मतं, उक्तरीत्या त्रयाणामपि महाशयानां कल्पनयोभयालंकारो न सिध्यतीति ॥

---

मनुष्यस्य शरीरमस्थिमांसमयम्, तदलंकाराश्च स्वर्णरत्नादिमया इति मनुष्यालंकारा मनुष्यशरीरात्सर्वथा विलक्षणाः । काव्यस्य शरीरं शब्दार्थमयं, तदलंकारा अपि शब्दार्थमयाः । तथाप्यत्रालंकारालंकार्यन्यायः संज्ञाघटीति । क्वचित्त्वेकस्यार्थस्य काव्यशरीरत्वेऽपरस्य काव्यालंकारत्वम् । यथाऽप्रस्तुतप्रशंसाऽलंकारः । तत्र ह्यप्रस्तुतव्यङ्ग्यार्थः प्रस्तुतवाच्यार्थस्य शोभाकरः । क्वचिदेक एवार्थः काव्यस्य शरीरमप्यलंकारश्चापि भवति । यथा पर्यायोक्त्यलंकारः । तत्र हि पर्यायेणोक्तः स एवार्थः काव्यस्य शरीरं शोभाकरतयाऽलंकारोऽपि भवति ॥ इमां व्यवस्थां सूचयत्काव्यप्रकाशगतकारिकावल्यां परंपरागतं धुरंधरस्येदं वचनम् "शब्दचित्रं वाच्यचित्रम्" इति ॥ शब्दचित्रं शब्दालंकारः । अर्थचित्रमर्थालंकारः । अलंकारस्य विषये चित्रमिति कथनाभिप्रायस्तु, काव्यस्य शरीरं शब्दार्थमयम् । तत्र तस्मिन्नेव शब्दे तस्मिन्नेवार्थे वा तत्तच्छब्दार्थरूपं चित्रं क्रियेत चेत्स एव तस्य काव्यस्य शोभाकरोऽर्थादलंकारो भवति । यथा समतलपाषाणस्तम्भः केवलं स्तम्भ एव । तत्रैव चोत्कीर्य पाषाणमयपुष्पवल्ल्यादिरूपेण चित्रं क्रियेत चेत्तदेव

स्तम्भोत्कीर्णचित्रं तस्यैव स्तम्भस्य शोभाकरं भवति ॥

पाषाणस्तम्भ उत्कीर्णं चित्रं तत्स्तम्भभूषणम् ॥
तद्वच्छब्दार्थयोश्चित्रं भूषा शब्दार्थयोर्भवेत् ।१।

यथा–

लाङ्गूलोत्क्षेपसंरम्भान्नैर्मल्यं पयसां निधेः ॥
यो दूरीकृतवान्मत्स्यः स पायाच्छान्तचेतसः ॥ १ ॥

एवंविधकथनेनापि मत्स्यावतारस्य लोकोत्तरपराक्रममहाकायत्वसिद्धिः ॥ तत्रोक्तशब्दानामेव स्थाने

पुच्छोच्छालनसंरम्भात्स्वच्छतां पयसां निधेः ॥
यो दूरीकृतवानच्छः स पायात्स्वच्छचेतसः ॥ १ ॥

इत्यनुप्रासरूपं चित्रं क्रियेत चेत्काव्यशोभाकरं सदलंकारत्वमापद्यते ।

यथा वा—

अतीवायमुदारोऽस्ति यशवन्तनरेश्वरः ॥

अनेनापि कथनेन मरुधराधीशस्य लोकविलक्षणवदान्यतासिद्धिः । तस्मिन्नेवार्थे

आखण्डल इवोदारो मरुभूमेरधीश्वरः ॥

इत्युपमारूपं चित्रं क्रियेत चेत्काव्यशोभाकरं सदलंकारत्वमापद्यते ॥

रमणीयौ तु शब्दार्थौ काव्यं मरुमहीपते! ॥
शब्दस्त्रिधा वाचकश्च लक्षको व्यञ्जकस्तथा ॥१॥
तदर्था नृपते! वाच्यलक्ष्यव्यङ्ग्या इति क्रमात् ॥
अभिधा लक्षणा व्यञ्जनेतिशक्तिस्त्रयं नृप! ॥ २ ॥
केचिद्व्यङ्ग्यं ध्वनिरिति चाक्षेप इति चापरे ॥
केचिच्छक्तिं वृत्तिरिति व्यापार इति चापरे ॥ ३ ॥
जहत्स्वार्थाऽजहत्स्वार्थेति द्विधा लक्षणा मता ॥
तात्पर्यबाधे राजेन्द्रोपलक्षणमिहेष्यते ॥ ४ ॥
दृश्यादृश्यं त्रिलोकीस्थं वस्तु वर्णयते कविः ॥
भावस्तत्र मनोवृत्तिः स चापरिमितो मतः ॥ ५ ॥
दिग्दर्शनार्थं द्वाचत्वारिंशदत्र प्रकीर्तिताः ॥
ते च द्विधा रसोत्पत्तिपर्यन्तं स्थिरभावतः ॥ ६ ॥
रत्यादयो नव स्थायिसंज्ञा मुख्याश्च ते मताः ॥
ग्लान्याद्याः पोषकतया संचरन्तीतरैः सह ॥ ७ ॥
ततः संचारिसंज्ञैषां यशवन्तनरेश्वर! ॥
आस्वादो हि रसो राजन्निह रत्यादयो नव ॥ ८ ॥
स्वादुत्वे रससंज्ञां वै लभन्ते भरतोऽब्रवीत् ॥
भावस्य कारणं भूप! विभाव इति स द्विधा ॥ ९ ॥
आलम्बनाख्यो राजेन्द्र! तथैवोद्दीपनाह्वयः ॥
शृङ्गारालम्बनं रम्यौ स्त्रीपुंसौ मरुनायक! ॥ १० ॥

नायिकायाश्च मुग्धाद्या भेदास्ते तु वयःकृताः ॥
स्वकीयाद्यास्तु प्रकृतिकृता भेदा नराधिप! ॥ ११ ॥
गुप्ताद्याः प्रोषितपतिकाद्या वै मानिनीमुखाः ॥
दशाकृता विभेदाः स्युर्यशवन्तनरेश्वर! ॥ १२ ॥
एते भेदाः स्वकीयादावेवेति नियमो न हि ॥
तथा वयःकृतादीनां बाधो नो नायके नृप! ॥ १३ ॥
शृङ्गारोद्दीपनानि स्युः शशिवर्षादयोऽमिताः ॥
हास्यादिषु रसेष्वेवं ज्ञेयाः श्रीमरुनायक! ॥ १४ ॥
अनुभावस्तु राजेन्द्र! भावबोधकरा क्रिया ॥
हावाश्च सात्त्विकाश्चैव विशेषास्तस्य भूपते! ॥ १५ ॥
अलंकारा मता अत्र युक्तयो मरुभूपते! ॥
ते चानन्ताः संगृहीता एकाशीतौ धुरंधरैः ॥ १६ ॥
माधुर्यौजःप्रसादाख्याः काव्ये राजन्! गुणास्त्रयः ॥
यथा पुंसि क्षमाशौर्यवदान्यत्वमुखा नृप! ॥ १७ ॥
दोषैश्च सदृशा दोषाः क्लिष्टाद्या अरुचेः कराः ॥
दृश्यते विस्तरोऽपारः साहित्यस्य महीपते! ॥ १८ ॥
नामार्थस्य तु विज्ञाने स्वल्पश्च सुगमः स हि ॥
मुक्तो लक्षणजालाद्यः कृतार्थः स कविर्भवेत् ॥ १९ ॥
यस्मिन्स्थले स्थायिभावो रसत्वं लभते नृप! ॥
तदादायात्र नामानि शृङ्गरादीनि बुध्यताम् ॥ २० ॥
धुरंधरस्य सिद्धान्ता मया स्पष्टीकृता अमी ॥

कवीश्वराणां कल्याणं कुर्युस्त्वद्यशसा सह ॥ २१ ॥

इति श्रीमन्मरुमण्डलमुकुटमणि-महाराजाधिराज-राजराजेश्वर जी. सी. एस्. आई. श्रीयशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तभूषणेऽर्थालंकारनिरूपणं नाम चतुर्थाकृतिः समाप्तिमिता ॥ ४ ॥

# अथ भावालंकाराः ॥

रसानन्दस्वरूपो यः सर्वदा राजते प्रभुः ॥
प्रणम्य तं रसवदादिभावालंकृतीर्ब्रुवे ॥ १ ॥

शब्दरूपेण शोभाकरः शब्दालंकारः। अर्थरूपेण शोभाकरोऽर्थालंकारः। तद्भावरूपेण शोभाकरो भावालंकारः। स्थायिसंचारिभावादीनां परस्परं शोभाकरत्वे एकोऽपरस्यालंकारो भवति। केचिद्भावस्य भावाङ्गत्वे केचिच्च भावस्य भावपोषकत्वे रसवदाद्यलंकारान्मन्यन्ते। तदपि शोभाकरतापर्यायणम् ॥ अङ्गमङ्गिनः शोभाकरं भवति। पोषणमपि च शोभाकरणमेव। यद्यपि रसदशायामप्यन्यभावाः स्थायिभावानां पोषका भवन्ति। परं तु तत्रावयवसामग्रीरूपतया पोषणम्। न त्वलंकाररूपतया। अलंकाराणां वियोगस्यापि शक्यत्वात्। मनुष्यैः कदाचिदलंकारा न धार्यन्तेऽपीत्यलंकाराणां नाचलस्थितित्वम्॥ रसदशायां संचार्यादयो भावा अवयववदचलस्थितयः ॥ क्वचित्काव्ये विभावादीनामनुक्तावपि रसदशायामविनाभावसंबन्धात्तेषां सर्वेषां लाभो भवति। विभावादिसर्वसामग्रीमन्तरा प्रायः स्थायिभावस्य रसत्वानापत्तेः॥ भावा अप्यर्थविशेषा एव। परं तु भावालंकाराणामर्थालंकारेभ्यः पृथक्प्रतिपादने मम मते धुरंधरस्यायमाशयः, अर्थालंकारेषु न केवलं वाच्यलक्ष्यव्यङ्ग्यरूपार्थविशेषा एव सामान्यतयाऽलंकारा भवन्ति। किं तु तदर्थनिष्ठयुक्तयोऽलंकारतां

भजन्ते । भावरूपार्थविशेषाश्च युक्तिपार्थक्येन सामान्यतया भावरूपेणैव मिथोऽलंकारत्वमापद्यन्त इति विलक्षणत्वम् ॥

# ॥ रसवत् ॥

स्थायिभावः स्थायिभावस्य तथा संचारिभावस्य शोभाकरश्चेद्रसवदलंकारः ॥ मम तु मतं, धुरंधरोऽत्र स्थायिभावं रसवदित्येतदभिप्रेत्याह । रसस्त्वलंकारोऽलंकार्यो वा न भवति । रसानन्दस्य ब्रह्मानन्दसहोदरत्वात् ॥ तथा च श्रुतिः "रसो वै सः" इति ॥ ब्रह्मानन्दप्राप्तौ ब्रह्ममयैकमनोवृत्तेर्जगतो भानाभाव इव रसानन्दप्राप्तौ रसमयैकमनोवृत्तेरर्थान्तरस्य भानाभावः ॥ अलंकारस्त्वलंकारालंकार्येतिद्वयोः संबंधे भवति । एवं च स्थायिभावो रसदशां प्राप्नोति, रसश्चालंकारत्वं न भजत इति सूचनाय स्थायिभावो रसवदितिपदेनोपदिष्टः ॥ रसवत् रससदृशः । न तु रसः ॥

यथा—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ॥
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ १ ॥

अत्र रतिशोकस्थायिभावयोः परस्परं विरोधितया मिथस्तिरस्कारेणोभयो रसदशानाप्त्या स्थायिमात्रत्वम् । तत्र च रतिस्थायिभावः शोकस्थायिभावस्य शोभाकर इति रसवदलंकारः ॥ क्वचिच्छत्रुरपि मित्रत्वमाचरति ॥ रणाङ्गणे सुभटानामनेके भुजाश्छिन्नपतिता वियन्ते। तत्र भूरिश्रवसो भार्या

सखीं प्रति स्वभर्तृभुजमुक्तरीत्या लक्षयतीतीह युक्तिरूप-स्तूदात्तालंकारः ॥

यथा वा—

क्रुद्धेन्द्रवृष्ट्याकुलगोकुलस्य
संरक्षणायातपवारणाभम् ॥
गोवर्धनं वामकरेण योऽधा-
त्तृप्यन्ति गोपा न हि तं स्तुवन्तः ॥ १ ॥

अत्र कृष्णविषयो गोपानां विस्मयस्थायिभावः कृष्णविषयगोपनिष्ठरतिसंचारिभावस्य शोभाकर इति रसवदलंकारः ॥ अत्र युक्तिरूपो विचित्रालंकारः ॥ इति रसवत्प्रकरणम् ॥१॥

## ॥ प्रेयः ॥

संचारिभावः स्थायिभावस्य तथा संचारिभावस्य शोभाकरश्चेत्प्रेयोऽलंकारः ॥ अतिशयेन प्रियं प्रेयः । " प्रियतरं प्रेयः " इति चिन्तामणिः ॥ मम तु मतं, धुरंधरस्य प्रेय इति नामनिर्देशेऽयमभिप्रायः । भावेषु स्थायिभावो राजा । संचारिणस्तत्परिचारकाः । । अत्र परिचारकोऽपि संचारी राजेवालंकारो भवतीति ॥

यथा—

कदा वाराणस्याममरतटिनीरोधसि वसन्

वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ॥
अये गौरीनाथ! त्रिपुरहर! शंभो! त्रिनयन!
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १ ॥

अत्र चिन्तासंचारिभावो भक्तनिष्ठनिर्वेदस्थायिभावस्य शोभाकरतया प्रेयोऽलंकारः ॥ अत्र युक्तिरूपः स्वभावोक्त्यलंकारः ॥

यथा वा—

गजसिंह! स्याम मुक्ता दानर्णाद्गुणकीर्तनैः ॥
प्रेमर्णात्तु कथं मुक्ता भविष्यामः कबन्धज! ॥ १ ॥

अत्र कवेश्चिन्तासंचारिभावः कविसंबन्धिराजरतिसंचारिभावस्य शोभाकर इति प्रेयोऽलंकारः ॥ अत्र युक्तिरूपः पूर्वार्धेऽन्योन्यालंकारः । उत्तरार्धे च तद्विपरीतोऽनन्योन्यालंकारः ॥ इति प्रेयःप्रकरणम् ॥ २ ॥

## ऊर्जस्वि ॥

---

रसाभासो भावाभासो वा स्थायिभावस्य तथा संचारिभावस्य शोभाकरश्चेदूर्जस्व्यलंकारः ॥ ऊर्जस्तु बलम् । "ऊर्जः बले" इति चिन्तामणिः ॥ मम तु मतं, धुरंधरोऽस्योर्जस्वीतिनामेदमभिप्रेत्याह, आभासमात्रं सत्त्वबलसामर्थ्यात्साक्षादिवालंकारो भवतीति ॥

यथा—

त्वत्प्रत्यर्थिवसुंधरेशतरुणीः संत्रासतः सत्वरं
यान्तीर्वीर! विलुण्ठितुं सरभसं याताः किराता वने॥
तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमा-
स्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि ॥ १ ॥

अत्र लुण्ठनसमये दुःखान्म्लेच्छजातिनिमित्तेन च विमुखारिराजरमणीविषयः शबराणां रतिस्थायिभावोऽनुचिततयाऽऽभासरूपः। स च कविनिष्ठराजरतिभावस्य शोभाकर इत्यूर्जस्व्यलंकारः॥ अत्र युक्तिरूप आभासालंकारः॥

यथा वा—

खातः कथमयं नाथ! कथं वा पूरितोऽम्बुना॥
कथं नोल्लङ्घते सीमां क्षुभितोऽपि महार्णवः॥

अत्र कवेश्चिन्ताभावोऽनुचितत्वाद्भावाभासरूपः। स च जगदीश्वरविषयककविनिष्ठदेवरतिभावस्य शोभाकरतयोर्जस्व्यलंकारः॥ अत्र युक्तिरूप आभासालंकारः॥ अस्योदाहरणेष्वाभासालंकारो नियमेन दृश्यते। क्वचिदन्यालंकारसंकीर्णत्वमपि॥ यथा "त्वत्प्रत्यर्थि—" इत्युदाहरणे हेत्वलंकारः॥ "खातः कथमयम्—" इत्युदाहरणे विचित्रालंकारोऽपि॥ इत्यूर्जस्विप्रकरणम्॥ ३॥

## समाहितम्॥

भावशान्तिः स्थायिभावस्य तथा संचारिभावस्य शोभा-

करा चेत्समाहितालंकारः ॥ समाहितशब्दार्थः समाधिस्थित इति ॥ "समाहितः समाधिस्थे" इति चिन्तामणिः ॥ मम तु मतं, अस्य समाहितेतिनामनिर्देशे धुरंधरस्यायमभिप्रायः। मनुष्ये समाधिस्थे मनसः सर्वा वासनाः शान्तिमापद्येरंस्तथायमलंकारः शान्तिरूप इति ॥

यथा—

अविरलकरवालकम्पनै-
र्भ्रुकुटीतर्जनगर्जनैर्मुहुः ॥
ददृशे तव वैरिणां मदः
स गतः क्वापि तवेक्षणे क्षणात् ॥ १॥

अत्र शान्तिमापद्यमानो वर्णनीयनृपारिगर्वसंचारिभावः कविनिष्ठराजरतिसंचारिभावस्य शोभाकर इति समाहितालंकारः ॥ अत्र युक्तिरूपस्तु कारकहेत्वलंकारः ॥ इति समाहितप्रकरणम् ॥ ४ ॥

# भावोदयः ॥

---

भावस्योदयः स्थायिभावस्य तथा संचारिभावस्य शोभाकरश्चेद्भावोदयालंकारः ॥

यथा—

मधुपानं प्रकुर्वाण एणाक्ष्या सह ते रिपुः ।
दुन्दुभिध्वानमाकर्ण्य भयभीतो भवन्नभूत् ॥ १ ॥

अत्र राजराजेश्वररिपोरुदयमानो भयस्थायिभावः कविनिष्ठराजरतिसंचारिभावस्य शोभाकर इति भावोदयालंकारः ॥ अत्र युक्तिरूपो हेत्वलंकारः ॥ इति भावोदयप्रकरणम् ॥ ५ ॥

## भावसंधिः ॥

भावसंधिः स्थायिभावस्य तथा संचारिभावस्य शोभाकरश्चेद्भावसंध्यलंकारः ॥

यथा—

कान्तान्तरार्तियुक्ता हर्षाढ्या सा पितुर्गृहं गन्तुम् ॥
अधुना दुर्योधनवत्प्राणान्मोच्यत्यसावहो! बाला ।१।

अत्र हर्षविषादयोर्विरुद्धभावयोः संधिर्नायिकानिष्ठपतिविषयरतिस्थायिभावस्य कुटुम्बविषयरतिसंचारिभावस्य च भावशबलतात्मकस्य शोभाकरतया भावसंध्यलंकारः ॥ उपलक्षणेन भावोदयादयोऽलंकार्यत्वेनापि संगृहीता भवन्ति॥ यथाऽतिशयदुःखान्मरणं भवति तथाऽत्यन्तहर्षादपि मृतिर्भवति । अत्र युक्तिरूप उपमाऽलंकारः ॥ दुर्योधनो युगपच्छोकहर्षोत्पत्तेर्मृतिमवाप ॥ इति भावसंधिप्रकरणम् ॥ ६ ॥

# भावशबलता ॥

भावशबलता स्थायिभावस्य तथा संचारिभावस्य शोभाकरा चेद्भावशबलताख्योऽलंकारः ॥

यथा—

वारे सपत्न्या निजवल्लभस्य
श्रुत्वा परस्त्रीगमनं हि तस्याः ॥
रसारसौ रत्यरती प्रसाद-
कोपावभूतां युगपत्तदानीम् ॥ १ ॥

अत्र भावशबलता नायिकानिष्ठसपत्नीविषयासूयाभावस्य शोभाकरतया भावशबलताख्योऽलंकारः ॥ अत्र युक्तिरूपः सहोक्त्यलंकारः ॥ इति भावशबलताप्रकरणम् ॥ ७ ॥

इति श्रीमन्मरुमण्डलमुकुटमणि-महाराजाधिराज-राजराजेश्वर-जी. सी. ऐस्. आई. श्रीयशवन्तसिंहस्याज्ञया कविराजमुरारिदानविरचिते यशवन्तभूषणग्रन्थे रसवदादिभावालंकारनिरूपणं नाम पञ्चमाकृतिः समाप्ता ॥ ५ ॥

## ॥ अथान्तर्भावाकृतिः ॥

नत्वात्मन्यस्य जगतो लयकर्तारमीश्वरम् ॥
येऽन्तर्भवन्त्यलंकारा इतरेषु वदामि तान् ॥१॥
तुच्छे विलक्षणत्वे स्यान्नालंकारान्तरं नृप! ॥
कविश्रेष्ठा विनिन्दन्ति तादृशं ग्रन्थविस्तरम् ॥२॥

चन्द्रालोके शतमलंकारा उक्ताः । तेषु चतुःषष्टिः स्वतन्त्रालंकारा इत्यस्माभिरपि स्वीकृताः ॥ तेषु च स्मृत्याद्यलंकारत्रिकस्य तु चन्द्रालोकेऽपि नामरूपं लक्षणमुक्तम् ॥ अतद्गुणाद्यलंकारचतुष्टयस्य च नामार्थानुसारि लक्षणम् ॥ तदितरसप्तपञ्चाशदलंकाराणां लक्षणानि नामार्थानुसारीणि न सन्तीति दोषग्रस्तानि ॥ तेषां खण्डनं तत्तदलंकारप्रकरणे उक्तम् ॥ इतरग्रन्थकाराणां लक्षणान्यपि प्रायश्चन्द्रालोकलक्षणसमान्येवेति तत्खण्डनेन तेषामपि खण्डनं वेदितव्यम् ॥ क्वचिच्च ग्रन्थे कस्यचिल्लक्षणं चन्द्रालोकविलक्षणं दृश्यते । तस्य खण्डनं त्वस्माभिर्यशवन्तयशोभूषणे लिखितम् ॥ चन्द्रालोकोक्तावशिष्टषट्त्रिंशदलंकाराणां मम मते त्वन्यालंकारेष्वन्तर्भावः । ते इह प्रदर्श्यन्ते ॥ उक्तसंख्यायामितरग्रन्थोक्तद्विपष्ट्यलंकारमेलनेन द्व्यूनशतालंकाराणामन्तर्भावो धुरंधराभिमतैकाशीत्यलंकारेष्वस्माभिर्विहितः । स च यशवन्तयशोभूषणे लिखितः ॥

# ॥ अत्युक्तिः ॥

अतिशब्दार्थो लङ्घनम्। "अति लङ्घने" इति चिन्तामणिः ॥ लोकसीमायां रूढिः ॥ लोकसीमालङ्घनरूपोक्तिरत्युक्तिरित्यर्थः ॥ कश्चिच्छौर्यौदार्यविषयकलोकसीमालङ्घनोदाहरणेष्वतिशयोक्तेरत्युक्तिरिति नामान्तरं लिलेख ॥ ततो भ्रान्ता अर्वाचीनाः शौर्यौदार्यादिविषयकलोकसीमालङ्घनेऽत्युक्तिः, इतरलोकसीमालङ्घने चातिशयोक्तिरिति ज्ञात्वाऽलंकारद्वयं मन्यन्ते स्म ॥ चन्द्रालोककारोऽत्युक्तेरिदं लक्षणमाह—

"अत्युक्तिरद्भुताऽतथ्यशौर्यौदार्यादिवर्णनम् ॥" इति ॥

तदेतत्प्रमादविलसितम् ॥ उक्तविलक्षणतायां अलंकारान्तरत्वयोग्यतात्वाभावादत्युक्तेरतिशयोक्तावन्तर्भावः ॥ लोकसीमालङ्घनरूपवर्णनस्य मिथ्यात्वेऽपि तस्य मिथ्यात्वेन कथनं तु प्रसिद्धिविरुद्धदोषः ॥ अतिशयोक्तिरिति पर्यायोक्त्या कथनं तु रोचकं सदलंकारः ॥

कथनस्यान्तरं च प्रदर्शितं केनचित्कविना—

कव्यक्षराणि सर्वाणि श्रेष्ठान्यन्तरं महत्कथने ॥
खर्परगतं तदेव कज्जलमक्ष्णोस्तदेव कज्जलकर्म ॥१॥

न चातिशयोक्तावाश्चर्यविवक्षा । तत्त्वे तु विचित्रालंकारः स्यात् ॥ इत्यत्युक्तिः ॥ १ ॥

## अनन्वयः ॥

न अन्वयः, अनन्वयः । चन्द्रालोके इदं लक्षणोदाहरणम्—

" उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ॥
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ॥ १ ॥

अर्वाचीना अप्यस्य फलमसादृश्यं मन्यन्ते ॥ तथा च भामहः—

" यत्र तेनैव तस्य स्यादुपमानोपमेयता ॥
असादृश्यविवक्षातो वदन्ति तमनन्वयम् ॥ १ ॥" इति ॥

एतादृशार्थनिषेधानामप्याक्षेपेऽन्तर्भावः ॥ इत्यनन्वयः ॥ ॥ २ ॥

## अनुगुणः ॥

अनुशब्दार्थो दैर्घ्यम् । "अनु आयामे" इति चिन्तामणिः ॥ "आयामो दैर्घ्यम्" इति वैयाकरणसिद्धान्तकौमुद्याम् ॥ दीर्घता तु वृद्धिः ॥ तथा चानुगुणशब्दार्थो गुणवृद्धिरिति ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः ॥

यथा—

नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥

कटाक्षस्य नीलवर्णत्वं स्वीकृतम् । अत्र परगुणसंबन्धे चमत्कारः । स चापूर्वगुणप्राप्तौ पूर्वगुणवृद्धौ च समान इत्युक्तविलक्षणता प्रकारान्तरत्वसाधिका, न त्वलंकारान्तरत्वसाधिकेत्यस्य तद्गुणेऽन्तर्भावः ॥ इत्यनुगुणः ॥ ३ ॥

## अर्थान्तरन्यासः ॥

अर्थान्तरस्य न्यासः स्थापनमर्थान्तरन्यासः ॥ चन्द्रालोके इदं लक्षणम्—

"उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः॥" इति॥

यथा—

गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ॥
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ १ ॥

अत्र सामान्यार्थस्य कृते विशेषार्थस्य न्यासः ॥

यथा वा—

हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥

अत्र विशेषार्थस्य कृते सामान्यार्थस्य न्यासः ॥ इत्थं सामान्यविशेषार्थयोर्न्यासांशे तु नालौकिकत्वम् । लोकवार्तालापे बाहुल्येन दर्शनात् ॥ उक्तलक्षणस्य पूर्वोदाहरणस्य

चोदाहरणालंकारेऽन्तर्भावः॥ उत्तरोदाहरणे च ज्ञापकहेत्वलंकारः॥ महात्मनां किमपि न दुष्करमिति श्रोतुर्ज्ञापने हनूमतः समुद्रतरणस्य ज्ञापकत्वादस्य ज्ञापकहेतावन्तर्भावः॥ पुनश्च कस्यचिद्विशेषार्थस्य कृते सामान्यार्थोदाहरणप्राप्तौ तत्रापरालंकारस्य प्राप्तिर्भविष्यति॥ इत्यर्थान्तरन्यासः॥ ४॥

## असंगतिः॥

न संगतिरसंगतिः॥ चन्द्रालोकेऽसंगतित्रयमुक्तम्॥

"विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः॥
अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा॥
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा॥" इति॥

अत्र विरुद्धं भिन्नदेशत्वमिति कथनात् "सर्पेण पादे दष्टे नेत्रयोर्घूर्णनम्" इत्यत्र कार्यकारणयोर्भिन्नदेशत्वं प्रसिद्धिविरुद्धं नास्तीति नासंगत्यलंकारः॥ चन्द्रालोके प्रथमासंगतेरिदमुदाहरणम्—

विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः॥

अस्य चित्रहेतुनामहेतोः प्रकारतया विचित्रेऽन्तर्भावः॥ द्वितीयासंगतेरिदमुदाहरणम्—

कुञ्जे मुदा जागरितौ निशायां
प्राप्तौ प्रगे स्वं भवनं त्वरातः ॥
ममन्थ नीरं वृषभानुकन्या
तथा मुरारिर्वृषभं दुदोह ॥ १ ॥

उक्तासंगतेरयथायोग्यतया विषमेऽन्तर्भावः ॥ तृतीयासंगतेरिदमुदाहरणम्—

मोहं जगत्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर! देहभाजाम् ।
निःसीमकान्तिरसनीरधिनामुनैव
मोहं प्रवर्धयसि मुग्धविलासिनीनाम् ॥ १ ॥

कृष्णं प्रति गोपीनां परिहासः । मोहशब्दे श्लेषः । मोहोऽज्ञानं स्नेहश्च ॥

भगवदवतारो हि संसारिणां मोहनिरसनायैव भवति ॥ तदेवोक्तं भगवता कृष्णेन भगवद्गीतायाम्—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत! ॥
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥" इति ॥

उक्तासंगतेरप्ययथायोग्यतया विषमेऽन्तर्भावः ॥ इत्यसंगतिः ॥ ५ ॥

# असंभवः ॥

न संभवः, असंभवः ॥ चन्द्रालोके इदं लक्षणम्—

"असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् ॥" इति ॥

यथा—

को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥

अत्र शैलोत्पाटनासंभाव्यत्वाय कृष्णो गोपशिशुक उक्तः ॥ उक्तलक्षणोदाहरणयोर्विचित्रेऽन्तर्भावः ॥ इत्यसंभवः ॥ ६ ॥

# आवृत्तिदीपकम् ॥

दीपकस्यावृत्तिरावृत्तिदीपकम् ॥ चन्द्रालोके इदं लक्षणम्—

"त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ॥" इति ॥

पदस्यार्थस्योभयोर्वाऽऽवृत्तौ त्रिविधमावृत्तिदीपकम् ॥

क्रमेण यथा—

वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥

उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ॥

माद्यन्ति चातकास्तप्ता माद्यन्ति च शिखावलाः ॥

अत्रासंगतिमेवं वाञ्छन्ति । वर्षतीत्यत्रैकमेव वर्षतिशब्दमम्बुदमालाशर्वर्योः समीपे कृत्वा तयोः प्रकाशनम् । घनपक्षे वर्षति वृष्टिं करोति । शर्वरीपक्षे वर्ष इवाचरति वर्षतीति । उन्मीलन्तीत्यत्रैकमेव प्रफुल्लनरूपमर्थं कदम्बकेतकयोः समीपे कृत्वा तयोः प्रकाशनम् । माद्यन्तीत्यत्रैकमेव माद्यन्तीतिशब्दार्थं चातकशिखावलयोः समीपे कृत्वा तयोः प्रकाशनम् ॥

भोजमहाराज इमानि दीपकस्य प्रकारान्मन्यते। तत्तु समीचीनम् । आवृत्तिदीपकस्य मत्स्पष्टीकृते दीपकस्य तृतीयप्रकारेऽन्तर्भावः ॥ नेमानि प्रकारान्तराणि । किंतूदाहरणान्तराणि ॥ इत्यावृत्तिदीपकम् ॥ ७ ॥

# उन्मीलितम्

---

अत्रोदुपसर्गार्थः प्राकट्यम् । उन्मीलितेतिसमुदितशब्दार्थो मीलितवस्तुनः प्रकटीकरणम् ॥ चन्द्रालोके इदं लक्षणम्—

"भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ॥" इति॥

यथा—

हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते ॥

उन्मीलितेऽपि चमत्कारपर्यवसानं तु मिलित एव ॥ उक्तोदाहरणेऽपीयमेव विवक्षा, त्वद्यशसि हिमाद्रिरेषं मिलितो यत्सुराः केवलं शीतलस्पर्शेन तं जानन्तीति ॥

यथा वा—

गुप्तेयं स्वर्णमालस्यां न लक्ष्येत कथंचन ॥
यदि स्वाभाविकस्त्वस्या गन्धो नो लक्षयेदमूम् ॥ १ ॥

भोजमहाराजोऽपि निवृत्तां भ्रान्तिं भ्रान्तिमेव मनुते ॥

यथा—

हसिअं सहत्थतालं सुक्खवडमुपगएहिं पहिएहिं ॥
पत्तप्फलसारिच्छे उड्डीने पूसवद्रम्मि ॥ १ ॥ (*)

एवमुन्मीलितस्यापि मिलितेऽन्तर्भावः ॥ इत्युन्मीलितम् ॥ ८ ॥

## ॥ उपमेयोपमा ॥

---

उपमेयभूतेनोपमा, उपमेयोपमा ॥ चन्द्रालोके इदं लक्षणम्—

(*) संस्कृतम् ॥ हसितं सहस्तताले शुष्कवटमुपगतैः पथिकैः ॥ पत्रफलसदृशे उड्डीने शुकवृन्दे ॥ १ ॥

"पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ॥" इति ॥

यथा—

धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥

केनचित्परस्परोपमाया उदाहरणे तस्या उपमेयोपमेति नामान्तरमलेखि ॥ ततोऽलंकारगणनारसिका अलंकारान्तरं गणयामासुः ॥ नाम्ना लक्षणेनोदाहरणैश्चास्याः परस्परोपमाख्ये उपमाप्रकारेऽन्तर्भावः ॥ अर्वाचीना अनन्वयस्य फलं द्वितीयसदृशव्यवच्छेदमस्याश्च तृतीयसदृशव्यवच्छेदमाहुः ॥ अतोऽपि नालंकारान्तरत्वं वक्तुं शक्यम् ॥ अस्मिन्पर्यवसाने त्वाक्षेपेऽन्तर्भावात् ॥ इत्युपमेयोपमा ॥ ६ ॥

## उल्लासः

उल्लास इत्यत्रोत्पूर्वाल्लसतेर्घञ् ॥ अत्रोदुपसर्गार्थः प्राबल्यम् ॥ लसधात्वर्थ आलिङ्गनम् ॥ "लस श्लेषणक्रीडनयोः ॥" तथा च "उत् प्राबल्येन लस्यते श्लिष्यते इत्युल्लासः ॥" बलात्संबन्धकर्तृत्वमितिभावः ॥ अत्रान्यस्य गुणदोषयोरन्यस्मिन्संबन्धे रूढिः ॥ चन्द्रालोके इदं लक्षणम्—

"एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ॥" इति ॥

क्रमेण यथा—

अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जान्हवी ॥

अत्र साध्व्याः पातिव्रत्यगुणेनान्यस्या गङ्गायाः पावनत्वगुणप्राप्तिः ॥

काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः ॥
निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः ॥ १ ॥

अत्र रिपुरमणीनां वनवासे चरणकोमलतादोषेणान्यस्य ब्रह्मणो विपरीतरचनारूपदोषप्राप्तिः ॥

तद्भाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ॥

अत्र पुरुषविशेषाणां सज्जनतागुणेनान्यस्य धनस्याभाग्यरूपदोषप्राप्तिः ॥

लाभोऽयमेव भूपाल! सेवकानां न चेद्वधः ॥

अत्र राज्ञः क्रूरतादोषेणान्यस्य दासस्य प्राणरक्षागुणप्राप्तिः ॥ गुणेनान्यस्य गुणे, दोषेण चान्यस्य दोषे हेतुताविवक्षा चेद्धेतौ, यथायोग्यताया विवक्षा चेदस्य समेऽन्तर्भावः ॥ गुणेनान्यस्य दोषे, दोषेण चान्यस्य गुणे कार्यकारणवैचित्र्यस्य विवक्षा चेच्चित्रहेतौ, अयथायोग्यताया विवक्षा चेद्विषमेऽन्तर्भावः ॥ इत्युल्लासः ॥ १० ॥

## ॥ कारकदीपकम् ॥

क्रियान्वितत्वं कारकत्वम् । कारकं दीपकरूपं यत्र तत्कारकदीपकम् ॥ प्रायः पदार्थाः षट्कारकमयाः ॥ चन्द्रालोके इदं लक्षणम्—

"क्रमिकैकगतानां तु गुम्फः कारकदीपकम् ॥" इति ॥

क्रमिकाणामर्थात्क्रियाणामेककारकगतानां गुम्फो निबन्धः कारकदीपकं नामालंकारः ॥

यथा—

गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ॥

अत्रैकस्यैव पान्थस्य कर्तृकारकस्यानेकक्रियान्वितत्वादुक्तकारकं दीपकरूपम् ॥ क्रियाया दीपकरूपत्वे, कारकस्य दीपकरूपत्वे, कारकेष्वपि च कर्तृकर्मादीनां वा दीपकरूपत्वे उदाहरणान्तरमात्रम् । न त्वलंकारान्तरम् ॥ अतोऽस्य दीपकेऽन्तर्भावः ॥ इति कारकदीपकम् ॥ ११ ॥

## ॥ कारणमाला ॥

कारणानां माला कारणमाला ॥ चन्द्रालोके इदं लक्षणम्—

काव्योपयोगितया काव्येतिविशेषणम् ॥ काव्यरूपं लिङ्गं चिन्हं काव्यलिङ्गम् । रमणीयं चिन्हमलंकार इति भावः ॥ अलंकारशास्त्रे काव्यलिङ्गस्य पर्यायनाम ज्ञापकहेतुरिति प्रसिद्धम् ॥ परंपरागतमिदमुदाहरणम्—

जितोऽसि मन्दकंदर्प! मच्चित्तेऽस्ति त्रिलोचनः ॥

मया त्वं जितोऽसीति स्मरं प्रति ज्ञापने येन त्वं दृष्टिपातमात्रेण भस्मसात्कृतः सोऽसौ त्रिलोचनो मच्चित्ते वसतीति हेतुर्ज्ञापकः । केनचिदुक्तोदाहरणे ज्ञापकहेतोर्नामान्तरं काव्यलिङ्गं लिखितम् । ततो भ्रान्ता धुरंधराभिप्रायमजानाना अर्वाचीना उक्तोदाहरणे कामजयरूपोऽर्थोऽसाध्यतया समर्थनयोग्य इति मच्चित्तेऽस्ति त्रिलोचन इत्यर्थेन समर्थित इत्यबोधिपुः । लिङ्गशब्दार्थो हेतुमात्रमपि । "लिङ्गं हेतौ" इति चिन्तामणिः ॥ ततश्चात्र लिङ्गशब्दार्थं हेतुमात्रं ज्ञात्वा तथाविधं लक्षणं निर्मितवन्तः ॥ चन्द्रालोके इदं लक्षणम्—

"समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ॥" इति ॥

समर्थनीयस्यार्थस्य समर्थनांशे तु न किंचिदपि चमत्कारः । तत्त्वपुष्टार्थदोषवारणमात्रम् । न च दोषपरिहारोऽलंकारत्वमर्हति ॥ अस्य ज्ञापकहेतावन्तर्भावः ॥ इति काव्यलिङ्गम् ॥१३॥

## ॥ गूढोक्तिः ॥

---

गूढा उक्तिर्गूढोक्तिः ॥ चन्द्रालोके इदं लक्षणम्—

"गुम्फः कारणमाला स्याद्यथा प्राक्प्रान्तकारणैः ॥"

इति ॥

क्रमेण यथा—

नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥

अत्र कारणानि प्रथमं कार्याणि च पश्चात्कथितानि ॥

भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् ॥
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ १ ॥

अत्र कारणानि पश्चात्कार्याणि च प्रथमं कथितानि ॥ तत्तदलंकारसंबन्धिन्यां मालायां तत्तदलंकारस्य प्राधान्यान्माला तत्तदलंकारस्य प्रकारत्वमापद्यते । यथा मालोपमारूपकमालादयः । अत एव कारणमालाया हेत्वलंकारेऽन्तर्भावः ॥ किं च कारणमाला त्वेककार्यस्यानेककारणसद्भावे भवति । न तु कार्यकारणपरंपरायाम् । इदं तु शृङ्खलाया एवोदाहरणान्तरम् । कारणस्य पूर्वपश्चाद्भाव उदाहरणान्तरमात्रम् । न तु प्रकारान्तरम् ॥ एतादृशकारणमालायाः शृङ्खलायामन्तर्भावः ॥ इति कारणमाला ॥ १२ ॥

## ॥ काव्यलिङ्गम् ॥

अत्र लिङ्गशब्दार्थश्चिह्नम् । "लिङ्गं चिन्हे" इति चिन्तामणिः ॥ लिङ्गाल्लिङ्गिज्ञानं भवतीतीह ज्ञापकचिन्हे रूढिः ।

काव्योपयोगितया काव्येतिविशेषणम् ॥ काव्यरूपं लिङ्गं चिन्हं काव्यलिङ्गम्। रमणीयं चिन्हमलंकार इति भावः ॥ अलंकारशास्त्रे काव्यलिङ्गस्य पर्यायनाम ज्ञापकहेतुरिति प्रसिद्धम् ॥ परंपरागतमिदमुदाहरणम्—

जितोऽसि मन्दकंदर्प! मच्चित्तेऽस्ति त्रिलोचनः ॥

मया त्वं जितोऽसीति स्मरं प्रति ज्ञापने येन त्वं दृष्टिपातमात्रेण भस्मसात्कृतः सोऽसौ त्रिलोचनो मच्चित्ते वसतीति हेतुर्ज्ञापकः। केनचिदुक्तोदाहरणे ज्ञापकहेतोर्नामान्तरं काव्यलिङ्गं लिखितम्। ततो भ्रान्ता धुरंधराभिप्रायमजानाना अर्वाचीना उक्तोदाहरणे कामजयरूपोऽर्थोऽसाध्यतया समर्थनयोग्य इति मच्चित्तेऽस्ति त्रिलोचन इत्यर्थेन समर्थित इत्यबोधिषुः। लिङ्गशब्दार्थो हेतुमात्रमपि। "लिङ्गं हेतौ" इति चिन्तामणिः ॥ ततश्चात्र लिङ्गशब्दार्थं हेतुमात्रं ज्ञात्वा तथाविधं लक्षणं निर्मितवन्तः ॥ चन्द्रालोके इदं लक्षणम्—

"समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ॥" इति ॥

समर्थनीयस्यार्थस्य समर्थनांशे तु न किंचिदपि चमत्कारः। तत्त्वपुष्टार्थदोषवारणमात्रम्। न च दोषपरिहारोऽलंकारत्वमर्हति ॥ अस्य ज्ञापकहेतावन्तर्भावः ॥ इति काव्यलिङ्गम् ॥१३॥

## ॥ गूढोक्तिः ॥

गूढा उक्तिर्गूढोक्तिः ॥ चन्द्रालोके इदं लक्षणम्—

"गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते ॥" इति ॥

यथा—

वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥

अत्र परदारान् भुञ्जानं जारं प्रति वक्तव्यं वृषं प्रत्युक्तम् ॥ गूढोक्तिनाम्नस्तु सूक्ष्मेऽन्तर्भावः ॥ लक्षणोदाहरणयोश्च मिषेऽन्तर्भावः ॥ इति गूढोक्तिः ॥ १४ ॥

## ॥ छेकोक्तिः ॥

---

छेकश्चतुरः । तस्योक्तिश्छेकोक्तिः ॥ चन्द्रालोके इदं लक्षणम्—

"छेकोक्तिर्यदि लोकोक्तेः स्यादर्थान्तरगर्भिता ॥" इति ॥

यथा—

भुजङ्ग एव जानाति भुजङ्गचरणं सखे! ॥

सर्पस्य पादौ न दृश्येते । स चातिजवेन सर्पति । तद्विषये "भुजङ्ग एव जानाति भुजङ्गचरणम्" इति लोकोक्तिः ॥ दुग्धे तरन्ती मक्षिका भक्ष्यते चेत्तद्विषये "दुग्धमक्षिका" इति लोकोक्तिः ॥ दुग्धमक्षिकेति स्वतन्त्रलोकोक्तिस्तु न कंचिदपरमर्थं गर्भीकरोतीति साधारणलोकानामियमुक्तिः ॥ इयमेव लोकोक्तिः प्रसङ्ग उच्यते चेत्प्रासङ्गिकवृत्तान्तं गर्भीकरोति ॥

"भुजङ्ग एव जानाति भुजङ्गचरणम्" इतीयं लोकोक्तिः प्रसङ्गं विना स्वातन्त्र्येणोक्ताप्यस्य गूढवृत्तान्तमयमेव जानातीत्यपरमर्थं गर्भीकरोतीति चतुरलोकानामुक्तिरियम् ॥ उक्तलोकोक्तिवैलक्षण्यं नालंकारान्तरत्वार्हम् । किं तु प्रकारान्तरमुदाहरणान्तरं वा । छेकोक्तेर्लोकोक्तावन्तर्भावः ॥ इतिच्छेकोक्तिः ॥ १५ ॥

## ॥ परिकराङ्कुरः ॥

---

परिकरः अङ्कुर इव परिकराङ्कुरः । अत्र धुरंधरस्यायमभिप्रायः, चन्द्ररूपमाभूषणं शिवस्य परिकर इति ॥

सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥

इत्यत्रोक्तपरिकरो विशेषणरूप इति वृक्षवत्स्थूलतया भासते ॥

तापं हरतु मे नाथो भगवाञ्छशिशेखरः ॥

अत्र स एव भूषणरूपः परिकरो विशेष्यरूपोऽर्थान्नामरूप इत्यङ्कुरवत्सूक्ष्मतया भासत इति परिकराङ्कुरनामकोऽयं परिकरस्य प्रकार इति ॥ अत्रोदाहरणद्वये ज्ञापकहेतोः संकीर्णता ॥ चन्द्रालोककारेण साभिप्रायविशेषणे परिकरालंकारोऽङ्गीकृत इति. साभिप्रायविशेष्ये परिकराङ्कुराख्यमलंकारान्तरं स्वीकृतम् ॥ तस्येदं लक्षणोदाहरणम्—

'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ॥" इति ॥

यथा—

चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥

अत्रैषां लक्षणसंगतिस्तु विष्णोश्चतुर्भुज इति विशेष्यरूपं नाम धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां युगपद्दानाभिप्रायेणेति ॥ अत्र चतुर्भुजेतिनाम्नो विशेष्यरूपतयोक्तसाभिप्रायतायाः सूक्ष्मत्वादङ्कुरसदृशत्वम् ॥ मम तु मतं, उक्तसाभिप्रायता ज्ञापकहेतोर्विषयः । विष्णोर्भुजचतुष्टयस्यावयवत्वान्न परिकरत्वम् ॥ वास्तवपरिकराङ्कुरस्य तु परिकरेऽन्तर्भावः ॥ इति परिकराङ्कुरः ॥ १६ ॥

## ॥ परिवृत्तिः ॥

परिवृत्तिः परिवर्तनम् । विनिमय इति यावत् ॥

जग्राहैकं शरं मुक्त्वा कटाक्षान्स रिपुश्रियः ॥

अत्रान्योन्यपरिवर्तनम् । केनचिदुक्तोदाहरणे परिवृत्तिरिति नाम, इदमन्योन्यपरिवर्तनमित्यभिप्रायेण लिखितम् ॥ उक्तोदाहरणे न्यूनाधिकयोः परिवर्तनमपि विवर्त इत्यलंकारगणनारसिका इदमलंकारान्तरमाहुः ॥

चन्द्रालोके इदं लक्षणम्—

"परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ॥" इति ॥

अयं विपर्यस्तत्वन्योन्यालंकारस्योदाहरणान्तरम् ॥ कचित्समवस्तुनोरपि परिवर्तनं भवति । परिवृत्तेरन्योन्येऽन्तर्भावः ॥ इति परिवृत्तिः ॥ १७ ॥

## ॥ प्रतिवस्तूपमा ॥

वस्तु वस्तु प्रति उपमा प्रतिवस्तूपमा ॥ अर्वाचीनाः साधर्म्यमुपमां मन्यन्ते । "साधर्म्यमुपमा भेदे" इति काव्यप्रकाशे ॥ एषां मतेऽनन्वयेऽभेदे सति साधर्म्याङ्गीकाराचतो व्यावृत्तये भेदे इति ॥ उपमोदाहरणेषु प्राय उपमानोपमेयवस्तुनोर्मध्यादेकं वस्तु प्रति साधर्म्यस्य प्रयोगो भवति ॥ यथा—

आखण्डल इवोदारो मरुभूमेरधीश्वरः ॥

अत्रोदारतासाधर्म्यमेकमुपमानं प्रत्युक्तम् ॥ इत्यादि ॥ कस्यचिदुपमायाः ईदृशमुदाहरणम्—

तापेन भ्राजते सूरः शूरश्चापेन राजते ॥

अत्र तापचापयोर्भिन्नपदार्थत्वान्न साधर्म्यकल्पनम् । अत्र साधर्म्यं तु शोभनम् ॥ तच्च चात्रोपमानोपमेयवस्तुद्वयं प्रति प्रयोगो विहितः । पुनरुक्तिवारणार्थं चोपमेयं प्रति "राजते" इति पर्यायान्तरमुक्तम् ॥ ईदृशोपमोदाहरणं केनचिदुपमाप्रकारविवक्षया प्रतिवस्तूपमेति चिन्तितम् । अर्वा-

चीना एनामलंकारान्तरं मेनिरे ॥ चन्द्रालोके इदं लक्षणम्—

"वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता" इति ॥

वाक्ययोरुपमानोपमेयविषयकवाक्ययोः ॥ अलंकारगणनारसिकानां तु महत्साहसम्, यदस्या उपमापल्लवमभिधानं वदन्त एवालंकारान्तरं मन्यन्ते । अस्या उपमाया उदाहरणान्तररूपत्वादुपमायामन्तर्भावः ॥ इति प्रतिवस्तूपमा॥१८॥

## ॥ प्रतिषेधः ॥

---

प्रतिषेधशब्दार्थो निषेधः । प्रतिषेधः निषेधे ॥" इति चिन्तामणिः ॥

न द्यूतमेतत्कितव! क्रीडनं निशितैः शरैः ॥

शकुनिर्द्यूतेन पाण्डवराज्यं जहार । तं प्रति रणाङ्गणे कस्यचिद्वचनमिदम् । ईदृशनिषेधोदाहरणे कश्चिन्निषेधस्य नामान्तरं प्रतिषेधं लिलेख । अलंकारगणनारसिकैन्द्रजालिका अत्र युद्धे द्यूतनिषेधः प्रसिद्धः, युद्धं द्यूतं नास्तीति । तत्र युद्धे द्यूतस्य निषेधाय पुनरिदं कथितम्, नैतद्द्यूतं युद्धमेतत् । एतद्वैलक्षण्यं दर्शयित्वा नामविलक्षणतासाहाय्येनालंकारान्तरमाहुः ॥ चन्द्रालोके इदं लक्षणम्—

"प्रतिषेधः प्रसिद्धस्य निषेधायानुकीर्तनम् ॥"

इति ॥

इत्थं निषेधस्य निषेधकथनमपि लोकप्रथा । यथोक्तनिषेधालंकारे "नाहं वाली सुबाहुः–" इत्युदाहृतम् ॥ उक्तवैलक्षण्येन तूदाहरणान्तरमात्रमेतत् ॥ चन्द्रालोकस्य स्पष्टयिता कुवलयानन्दकारः "निर्ज्ञातो निषेधः स्वतोऽनुपयुक्तत्वात्तव प्रागल्भ्यं द्यूत एव न तु युद्धे व्युत्पत्तिग्रहोऽस्तीत्युपहासरूपमर्थान्तरं गर्भीकरोति तेन चारुतान्वितोऽयं प्रतिषेधनामालंकारः" इति वदति ॥ मम तु मतं, उक्तव्यङ्ग्यस्य चारुतयोक्तनिषेधोदाहरणे चारुताबाहुल्यं खलु, तथाप्युक्तवैभवेन निषेधादपरः प्रतिषेधाख्योऽलंकारो वक्तुमशक्यः ॥ उक्तनाम्ना लक्षणेनोदाहरणैश्चायं निषेध एवेति निषेधेऽस्यान्तर्भावः ॥ इति प्रतिषेधः ॥ १६ ॥

## ॥ प्रतीपम् ॥

प्रतीपशब्दार्थः प्रतिकूल इति ॥ "प्रतीपः प्रतिकूले" इति चिन्तामणिः ॥ परंपरागतविपरीतोपमाया ईदृशमुदाहरणम्–

"त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥"

अत्र शरदृतुप्रसङ्गेनेयं विपरीतोपमा । विपरीतोपमा प्रसङ्गप्राप्ता भवति । न तूपमानप्रातिकूल्येन । धुरंधराभिप्रायमजानाना अर्वाचीना विपरीतोपमायास्तात्पर्यमुपमानप्रातिकूल्येनोपमानस्योपमेयत्वकल्पनम्, उपमानानादरं च तत्फलं मत्वा स्वमतानुसारेण पञ्चविधं प्रतीपं मन्यन्ते ॥

चन्द्रालोके इमानि लक्षणोदाहरणानि—

"प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ॥

तत्रास्य पूर्वोक्तमुदाहरणम् ॥ उक्तोदाहरणे तु विपरीतोपमैव ।

अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ॥

यथा—

अलं गर्वेण ते वक्त्र! कान्त्या चन्द्रोऽपि तादृशः ॥

अत्र सख्या परिहासप्रसङ्गेन विपरीतोपमोक्ता । अत्रोपमेयस्य मुखस्य नानादरः ॥ किं तु निन्दाव्याजेन स्तुतिः ॥ इदमपि विपरीतोपमाया उदाहरणान्तरम् ॥ व्याजनिन्दायाः संकीर्णत्वम् ॥

वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः॥

यथा—

अहमेव गुरुः सुदारुणाना-<br>मिति हालाहल! मा स्म तात! दृप्यः॥<br>ननु सन्ति भवादृशानि भूयो<br>भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ १ ॥

अत्रोपमानहालाहलस्यानादरे न पर्यवसानम् । किं स्वद्वितीयतागर्वान्वितोपमानस्योपमेयोपमेयखलवचनविकरालत्वा-

तिशये पर्यवसानम्। अतोऽत्र व्याजनिन्दारूपो मिथालंकारः। शुद्धोपमायाः संकीर्णत्वम् ॥

वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ॥

यथा—

मुधापवादो मुग्धाक्षि! त्वन्मुखाभं किलाम्बुजम् ॥

यथा वा—

दाने कल्पतरुर्माने कुरुराजो भवत्समः ॥
इति यः प्राह स कविर्मूढोऽस्ति मरुभूपते! ॥ १ ॥

अत्रोपमानस्य तिरस्कारादाक्षेप एव ॥

"प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते ॥

यथा—

दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥

यथा वा—

तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदा यदा ॥
तनोति भानोः परिवेषकैतवा-
त्तदा विधिः कुण्डलनां विधोरपि ॥ १ ॥

अत्राक्षेपे उत्प्रेक्षायाः संकीर्णत्वम्। अर्वाचीना अनादरं

प्रतीपाख्यमलंकारान्तरं मन्यन्ते । अनादरस्य त्वाक्षेपेऽन्तर्भावः । अनादरस्यापि तिरस्काररूपत्वात् । प्रतीपस्य कतिपयोदाहरणानां चान्यालंकारेष्वप्यन्तर्भावः ॥ इति प्रतीपम् ॥२०॥

## ॥ प्रस्तुताङ्कुरः ॥

प्रस्तुतः अङ्कुर इव प्रस्तुताङ्कुरः ॥ चन्द्रालोके इदं लक्षणम्—

प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः ॥

यथा—

किं भृङ्ग! सत्यां मालत्यां केतक्या कण्टकेद्धया ॥

वल्लभेन सहोपवने विहरन्त्या नायिकाया इयमुक्तिः। अत्रोक्तभ्रमरवृत्तान्तोऽपि तत्समये पुरोवर्तितया प्रस्तुतः । नायिकाया निजनायकं प्रति सुखलभ्यस्वकीयां विहाय नाथनानन्द्रादिदुष्प्राप्यपरकीयासेवनं कुतः क्रियत इत्युपदेशोऽपि विवक्षितत्वात्प्रस्तुत इतीह प्रस्तुतेन प्रस्तुतस्य प्रतीतिः ॥ अत्राङ्कुरत्वं तु, अप्रस्तुतप्रशंसायामप्रस्तुतार्थस्य वाच्यत्वात्प्रस्तुतार्थस्य वृक्षवत्स्थूलतया स्फुटं प्रतीतिः, अत्र तु प्रस्तुतार्थस्य वाच्यत्वादपरप्रस्तुतार्थस्य क्षणविलम्बेन सूक्ष्मतयाऽङ्कुरवत्प्रतीतिरित्येवं वाञ्छन्ति । परं तु वृक्षतदङ्कुरयोः प्रकारान्तरत्वाद्वस्त्वन्तराभाव इत्युक्तप्रस्तुताङ्कुरस्य नालंकारान्तरत्वम् ॥ अस्य त्वप्रस्तुतप्रशंसायाः प्रकारत्वादप्रस्तुतप्रशं-

सायामन्तर्भावः ॥ एतच्चाप्रस्तुतप्रशंसायां प्रागुक्तम् ॥ इति प्रस्तुताङ्कुरः ॥ २१ ॥

# प्रौढोक्तिः ॥

प्रौढशब्दार्थोऽत्यन्तं वृद्धिमानिति । "प्रौढः प्रवृद्धे" इति चिन्तामणिः ॥ प्रौढा उक्तिः प्रौढोक्तिः ॥ अतिशयोक्तेः पर्यायोऽयम् । कविसृष्टौ लोकसृष्टेरतिशयितोक्तिर्भवति । परं त्वियं ततोऽपि कविसृष्टितोऽप्यतिशयितोक्तिः ॥ परंपरागतं धुरंधरस्येदमुदाहरणम्—

कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥

पादपे मिष्टक्षारनीरगुणागुणसंपर्को विद्यते । नीरसंचानिधवर्णरूपगुणसंपर्कस्तु न विद्यते । इयमहेतोर्हेतुतोक्तिर्लोकसीमालङ्घनं बोधयन्त्येव पादपे मिष्टक्षारनीरगुणागुणसंपर्को विद्यते इति सामाजिकानामुद्वेगाजनकतया चमत्कारमुत्पादयन्त्यलंकारः ॥

यथा वा—

कैलासेन हरेण गाङ्गपयसा कर्पूरपुञ्जेन वा<br>
साम्यं ते यशसो वदन्ति कवयस्ते वै परं बालिशाः ॥<br>
राकारात्रिसमुद्भवैः सुशरदो हंसैश्च मुक्ताफलैः<br>
क्षीराम्भोधिभवैः समं मरुधराधीश! त्वदीयं यशः ॥१॥

हंसानां शारदराकारात्रिसमुद्भवो मुक्ताफलानां च क्षीरसमुद्रसमुद्भवो न श्वैत्याधिक्यहेतुः । इयमहेतोर्हेतुतोक्तिर्लोकसीमालङ्घनं बोधयन्त्येव बहुधा देशकालजन्मसम्बन्धादेशकालगुणागुणसंपर्को वस्तुनि विद्यत इति सामाजिकानामुद्वेगाजनकतया चमत्कारमुत्पादयन्त्यलंकारः ॥ नात्र हेतूत्प्रेक्षा ।.तादृशरचनाया अभावात् । किंचोत्प्रेक्षायामतिशयोक्तेर्लेशोऽपि न विद्यते ॥ कश्चिदतिशयोक्तेरीदृशोदाहरणेऽतिशयोक्तेर्नामान्तरं प्रौढोक्तिरिति लिलेख । उक्तनाम्न उदाहरणस्य चाभिप्रायमज्ञात्वाऽर्वाचीना .अत्रोत्कर्षाहेतावुत्कर्षस्य हेतुताकल्पनं प्रौढोक्तिरलंकारान्तरमित्यबोधिषुः ॥ चन्द्रालोके इदं लक्षणम्–

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ॥

तत्र "कचाः कलिन्दजा-" इत्येवोदाहरणम् ॥ तत्त्वतिशयोक्तेरेवोदाहरणान्तरम् ॥ प्रौढोक्तेरतिशयोक्तावन्तर्भावः ॥ हठादहेतोर्हेतुताकल्पनांशेऽलंकारोऽङ्गीक्रियेत चेद्धेतावन्तर्भावः ॥ इति प्रौढोक्तिः ॥ २२ ॥

## मालादीपकम् ॥

---

दीपकस्य माला मालादीपकम् ॥ चन्द्रालोके इदं लक्षणम्—

"दीपकैकावलीयोगान्मालादीपकमिष्यते ॥

एषामयमभिप्रायः, एकावलौ पदार्थस्य द्विर्भाव इत्येकावलीदीपकयोगे दीपकस्य माला संपद्यते इति ॥ चन्द्रालोके इदमुदाहरणम्—

"स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥

कुवलयानन्दकार इदमेवं घटयामास। "अत्र स्थितिरिति पदमेकं, स्मरेण तस्या हृदये स्थितिः कृता, हृदयेन त्वयि स्थितिः कृतेत्येवं वाक्यद्वयान्वयि, अतो दीपकम्। गृहीतमुक्तरीतिसद्भावादेकावली चेति दीपकैकावलीयोगः" इति ॥ मम तु मतं, अत्राप्येकावलेः प्राधान्यादेकावल्यर्थाच्छृङ्खलैवालंकारः ॥ न तु दीपकालंकारः। गौणत्वात्। न चात्रालंकारद्वयमिश्रणेन तृतीयचमत्कारोत्थानमपि । यस्यालंकारान्तरत्वेनाङ्गीकारः स्यात्। यदि चात्र हठादुक्तालंकारद्वयस्य संसृष्टिरङ्गीक्रियेत तर्हि नायकान्वयिस्थितिधर्मस्य नायिकाहृदयेऽप्यन्वय इतीहास्मत्स्पष्टीकृतदीपकस्य प्रथमः प्रकारः स्यात्। नात्र दीपकमाला। क्वचिद्दीपकमालोपलब्धिश्चेत्तत्र मालादीपकन्नामकोऽस्मत्स्पष्टीकृतदीपकस्य तृतीयः प्रकारो भविष्यति ॥ माला स्वतन्त्रालंकारो न भवतीति प्राक् सविस्तरमुक्तम् ॥ मालादीपकस्य दीपकेऽन्तर्भावः ॥ इति मालादीपकम् ॥ २३ ॥

## युक्तिः ॥

युक्तिशब्दार्थो नवीनार्थस्य प्राप्तिरिति। "युक्तिः, अपूर्वार्थप्राप्तौ" इतिचिन्तामणिः ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

"युक्तिः परातिसंधानं क्रियया मर्मगुप्तये ॥"

यथा—

त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करेऽलिखत् ॥

जयदेवमतीययुक्तेरस्य लक्षणोदाहरणानुसारेणापन्हुतावन्तर्भावः। गोपनं क्रियया भवतु, वचनेन वा, तत्तूदाहरणान्तरमात्रम् । नत्वलंकारान्तरार्हवैलक्षण्यम् ॥ इति युक्तिः ॥ २४ ॥

## ललितम् ॥

---

ललितशब्दार्थ ईप्सित इति । "ललितं, ईप्सिते" इति चिन्तामणिः ॥ अर्वाचीना ईप्सितस्य प्रतिविम्बकथने रूढिं मत्वाऽलंकारान्तरं स्थापयन्ति ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

"वर्ण्ये स्याद्वर्ण्यवृत्तान्तप्रतिविम्बस्य वर्णनम् ॥
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥"

कलहान्तरितानायिकासख्याः सखीं प्रत्युक्तिरियम् । अत्र नायके गते पश्चात्तापकरणं विफलमिति सख्या वक्तुमिष्टम् । तदमुक्त्वा तत्प्रतिविम्बरूपमुक्तवचनं कथितम् । इयं प्रकारान्तरेणोक्तिरिति पर्यायोक्तावन्तर्भावः ॥ प्रतिविम्बं तु विम्बस्य प्रकारः ॥ यथा चित्रदर्शनं दर्शनस्य प्रकारः ॥ इति ललितम् ॥ २५ ॥

# विकस्वरः ॥

विकस्वरशब्दार्थो विकसनस्वभाव इति ॥ "विकस्वरः विकसनशीले" इति चिन्तामणिः ॥ चन्द्रालोके इदं लक्षणम्-

"यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः ॥" इति ॥

अस्येदृशमुदाहरणम्—

कर्णारुन्तुदमन्तरेण रणितं गाहस्व काक! स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम् ॥
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालतिलके पङ्के न शङ्केत कः ॥ १ ॥

अत्र विकस्वरनाम्नः संगतिस्तु, अर्थान्तरन्यासे तु सामान्यार्थस्य कृते विशेषार्थस्य, तथा विशेषार्थस्य कृते सामान्यार्थस्य न्यासः । अत्र तु विशेषार्थस्य कृते सामान्यार्थं विन्यस्य तदर्थं च पुनर्विशेषार्थस्य न्यासो विकासरूप इति ॥ अस्मिन्नंशे तु तन्मतोक्तार्थान्तरन्यासाद्भिन्नालंकारत्वयोग्यं वैलक्षण्यं नास्तीति तस्यैवायं प्रकारः ॥ यथा भोजराजोऽन्योन्यचूडिकानामकमन्योन्यप्रकारमाह ॥ यदा चार्थान्तरन्यासस्यैवालंकारान्तरत्वयोग्यतायां अभावस्तदा तत्प्रकारस्य तु कथं वालंकारान्तरत्वम् ॥ "कर्णारुन्तुदमन्तरेण-" इत्यत्र प्रथमस्य काकवृत्तान्तरूपविशेषार्थस्य-स्थानमहिमरूपसामान्या-

र्थस्य च न मनागपि चमत्कारः ॥ चमत्कारस्तु नयपालनरेशवृत्तान्तरूपविशेषार्थवृत्तिः ॥ स चोदाहरणालंकारस्य विषयः। इत्थं सामान्यविशेषार्थयोरपि कचिदुदाहरणालंकारे कचिच्च दृष्टान्ताद्यलंकारेष्वन्तर्भावो भवति ॥ इति विकस्वरः ॥२६॥

# विभावना ॥

अत्र वीत्युपसर्गो गतार्थे। "वि गते" इति चिन्तामणिः॥ भावनाशब्दार्थो भवनानुकूलो व्यापारः। विभावनेतिसमुदितशब्दार्थस्तु विगता भावना यस्यां सा विभावना। कार्ये रूढिः। कार्यभवनानुकूलक्रियादेरभाव इति भावः ॥ विभावनायाः सामान्यलक्षणमनुक्त्वा चन्द्रालोककारो विभावनाषट्कमाह ॥ तस्येमानि लक्षणानि—

"विभावना विनापि स्यात्कारणं कार्यजन्म चेत् १ ॥
हेतुनामसमग्रत्वे कार्योत्पत्तिश्च सा मता २ ॥
कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके ३ ॥
अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ४ ॥
विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना ५ ॥
कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना ६ ॥

क्रमेणोदाहरणानि—

अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम् १ ॥

अत्र कारणं विना कार्योत्पत्तिः ॥

अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः २ ॥

अत्र जगज्जयरूपकार्ये शस्त्राणां तीक्ष्णताकठोरताधर्मः कारणम् । तदभावः कारणासमग्रत्वमर्थादपूर्णत्वम् ॥

अहो विचित्रा भवतो गतिर्मरुमहेश्वर ! ॥
कुरुते भवतस्तेजः संतापं छत्रधारिणाम् ३ ॥

अत्र च्छत्रे प्रतिबन्धके सत्यपि राजराजेश्वरतेजसोऽन्यनृपाणां तापनम् । प्रतिबन्धकस्तु वारकः । अत्र तापवारके छत्रे सत्यपि तापकार्यजनिस्तु बाधके सति कार्योत्पत्तिः ॥

यथा वा—

दक्षोऽप्यसौ ते ह्यनुकूलतां गतः
स्वरूपगर्वोऽप्यतिदीनतामितः ॥
अयं घनश्याम उता(*)पि चातको
व्रजेन्दुरप्येष चकोरकस्तव ॥ १ ॥

अत्र दक्षिणत्वादौ प्रतिबन्धके सत्यप्यनुकूलत्वादिवृत्तिरवं प्रतिबन्धके सत्यपि कार्योत्पत्तिः ॥

शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥ ४

वीणानादस्य वीणा कारणम् । शङ्खस्तु वीणानादस्याकारणम् । तथा च शङ्खाद्वीणानादस्योद्भवोऽकारणात्कार्यजन्म ॥

(*) इह उतेत्यव्ययं पादपूरणे ॥ "उत पादपूरणे" इति चिन्तामणिः ॥

त्वन्मुखरविबालातपसंपर्कान्मरुपते! महामान्य! ॥
करकमलान्यन्येषां भूपानां संकुचन्ति वीक्ष्यन्ते ॥१॥

अत्र कमलविकासकर्तृबालातपसंबन्धात्कमलानां संकोचो विरुद्धकारणात्कार्योत्पत्तिः ॥

यशःपयोधिरभवत्करकल्पतरोस्तव ॥

कल्पद्रुमस्य समुद्रः कारणम् । कल्पद्रुमः कार्यम् । कल्पद्रुमात्समुद्रोत्पत्तिस्तु कार्यात्कारणोत्पत्तिः ॥ उक्तस्थलषट्केऽपि कार्योत्पत्तेरानुकूल्यं नास्तीति कार्यकारणभावस्य वैचित्र्याद्धेतोः प्रकारश्चित्रहेतुरलंकारः ॥ चित्रहेतोश्च विचित्रालंकारेऽन्तर्भावः ॥ इति विभावना ॥ २७ ॥

## विरोधाभासः ॥

विरोधस्याभासो विरोधाभासः ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

"आभासत्वे विरोधस्य विरोधाभास इष्यते ॥

यथा—

विनापि तन्वि! हारेण वक्षोजौ तव हारिणौ ॥

अत्र श्लेषमूलो विरोधाभासः । "विनापि हारेण हारिणौ" इत्यत्र श्रुतिमात्रेण क्षणं विरोधे भासमानेऽपि विचारदशायां

मनोहारीत्यर्थस्य लाभे विरोधो निवर्तते । अस्याभासालंकारेऽन्तर्भावः ॥ इति विरोधाभासः ॥ २८ ॥

## विवृतोक्तिः ॥

विवृतशब्दार्थ उद्घाटित इति । "विवृतः, उद्घाटिते" इति चिन्तामणिः ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

"विवृतोक्तिः श्लिष्टगुप्तं कविनाऽऽविष्कृतं यदि ॥

यथा—

वृषापेहि परक्षेत्रादिति वक्ति ससूचनम् ॥

अत्र क्षेत्रशब्दार्थो धान्यादिक्षेत्रं विवाहिता स्त्री च ॥ "क्षेत्रं पत्न्याम्" इति चिन्तामणिः ॥ कस्यचित्कंचित्प्रतीयमुक्तिः । "वृषापेहि परक्षेत्रात्" इत्येतदमुकस्य कथनं हि परकलत्रं भुञ्जानं प्रति सूचनम् । अत्र कस्यचिन्मिषेण सूक्ष्मतया वा कथितस्य वक्रोद्घाटनं कृतम् । तत्र चमत्कारस्तु मिषस्याथवा सूक्ष्मस्यैव ॥ यथोन्मीलिते मिलितस्य, वक्ष्यमाणविशेषके च सामान्यस्यैव चमत्कारोऽङ्गीकृतः । न तून्मीलितविशेषकयोः ॥ मिषं सूक्ष्मता वा श्लेषेण भवतु श्लेषं विना वा भवतु, उक्तवैलक्षण्यमपि नालंकारान्तरत्वसाधकम् । अतोऽस्य मिषे तथा सूक्ष्म एवान्तर्भावः ॥ इति विवृतोक्तिः ॥ २९ ॥

## विशेषः ॥

अत्र विशेषशब्देन वैलक्षण्यरूपमाधिक्यं विवक्षितम् ॥

चन्द्रालोककारो विशेषत्रयमुक्त्वेमानि लक्षणोदाहरणान्याह—

"विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ॥"

यथा—

गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तस्कराः ॥

जयदेवः स्वलक्षणमुक्त्वोदाहरणे एवं घटयामास, "सूर्यस्य प्रसिद्धाधारस्याभावेऽपि तस्कराणामन्यत्रावस्थितिरुक्ता" इति ॥ उक्तविषयस्य त्वस्यैव लक्षणालक्षिते पर्यायेऽन्तर्भावः। नात्र विशेषतायाश्चमत्कारः । अस्य लक्षणे विशेषतायाश्चमत्कारस्तु सर्वथाऽनाधारस्याधेयस्य विवक्षायां स्यात् । तस्य चेदृशमुदाहरणं भवेत्—

निरुपादानसंभारमभित्तावेव तन्वते ॥

नमस्तस्मै जगच्चित्रं कलाश्लाघ्याय शूलिने ॥ १ ॥

एतादृशविषयस्य तु विचित्रेऽन्तर्भावः ॥ द्वितीयस्येदं लक्षणोदाहरणम्—

"विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ॥

यथा—

अन्तर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव मे ॥

यथा वा—

रासक्रीडागतः कृष्णो दृष्टो भ्रमिवशाद्बहिः ॥

गोपाङ्गनाभिः सर्वाभिः सर्वगोपाङ्गनान्तिके ॥ १ ॥

अस्यापि लक्षणोदाहरणस्य विचित्रेऽन्तर्भावः ॥ तृतीयस्येदं लक्षणोदाहरणम्—

"किंचिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ॥

यथा—

त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥

अस्मिन्नुदाहरणे लक्षणघटना त्वेवम्, कवे राजदर्शनं तु साधारणारम्भसाध्यम् । तत्र वाञ्छितार्थप्रदतयाऽसौ नृपः कविकृते कल्पतरुर्जातः । तदेतत्किंचिदारम्भादशक्यवस्त्वन्तरस्य करणम् ॥

यथा वा—

युववल्लवं विदित्वा रतिः कृताऽसौ त्रिलोकपो निसृतः ।
गोपाङ्गना विमुक्ता भवपाशात्तत्परं पदं प्राप्ताः ॥१॥

मोक्षात्सुरतसुखमतीवं किंचित् । तदारम्भान्मोक्षोऽशक्यवस्त्वन्तरस्य करणम् ॥ मम तु मतं, अस्य तृतीयविशेषस्य तूपलक्षणेन

"हेतूनामसमग्रत्वे-कार्योत्पत्तिश्च सा मता ॥"

इति लक्षणलक्षितायां द्वितीयविभावनायामन्तर्भावः ॥

इति विशेषः ॥ ३० ॥

# विशेषकः ॥

अत्र विशेषकशब्दार्थो विशेषत्वाधायको भेद इति ॥ "विशेषकः विशेषाधायके प्रभेदे" इति चिन्तामणिः ॥ चन्द्रालोके, इदं लक्षणोदाहरणम्—

"भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ ॥

यथा—

लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥

अत्रापि सामान्यतायामेव चमत्कारः । न तु विशेषस्फुरणांशे । यथोक्तं प्रागुन्मीलिते ॥ तदेवोक्तं सामान्यालंकारस्य प्रकरणे काव्यप्रकाशकारेणापि—

"वेत्रत्वचा तुल्यरुचां वधूनां
कर्णाग्रतो गण्डतलागतानि ॥
भृङ्गाः सहेलं यदि नापतिष्य-
न्कोऽवेदयिष्यन्नवचम्पकानि ॥ १ ॥

प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते" इति ॥ अस्य वक्ष्यमाणसामान्येऽन्तर्भावः ॥ इति विशेषकः ॥ ३१ ॥

# विशेषोक्तिः ॥

अत्र वीत्युपसर्गो गतार्थकः । शेषशब्दार्थः कार्यम् । शेष-

शब्दो न्यायसूत्रभाष्यकारेण कार्येऽर्थे प्रयुक्तः । तत्र 'शेषवदित्यनुमानप्रभेदमुक्त्वा कार्यात्कारणानुमानस्योदाहरणं दर्शितम् । विशेषोक्तिरितिसमुदितशब्दार्थो वि गतं कार्यं यस्याः, सा चासावुक्तिश्च विशेषोक्तिरिति । कारणे सति कार्याभाव इति भावः ॥ विभावनायाः प्रतिद्वन्द्विभावेऽयमलंकारः । विभावनायां कारणाभावः । इह कार्याभावः ॥ चन्द्रालोके इदं लक्षणम्—

"कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे ॥"

यथा—

हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ॥

अयमपि कार्यकारणवैचित्र्याच्चित्रहेतुः । तस्य च विचित्रेऽन्तर्भावः ॥ इति विशेषोक्तिः ॥ ३२ ॥

## व्याजनिन्दा ॥

---

व्याजेन निन्दा व्याजनिन्दा ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

"निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ॥"

यथा—

विधे! स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः ॥

अत्र शिवेन ब्रह्मण एकमेव मस्तकं छिन्नं न तु पञ्चापी-

ति शिवस्य निन्दा । ब्रह्मणो मस्तकपञ्चकमासीत् । तेष्वेकं शिवेन छिन्नमिति पुराणेषु प्रसिद्धम् ॥ अत्र शिवस्योक्तनिन्दया विषमविपाकस्य संसारस्य स्रष्टुर्ब्रह्मणो निन्दा व्यज्यते । शिवनिन्दाव्याजेन विधिनिन्देतिविषयस्य तु मिषेऽन्तर्भावः ॥ निन्दया निन्दाव्यक्तौ च व्यङ्ग्यत्वं नापयाति । व्यङ्ग्यश्चालंकारो न भवति ॥ इति व्याजनिन्दा ॥ ३३ ॥

## व्याजस्तुतिः ॥

व्याजेन व्याजरूपा वा स्तुतिः व्याजस्तुतिः ॥ चन्द्रालोके इदं लक्षणम्—

"उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ॥"
इति ॥

क्रमेण यथा—

कः स्वर्धुनि! विवेकस्ते पापिनो नयसे दिवम् ॥

गङ्गा सुकृतिवदेव महापातकादि कृतवतोऽपि स्वर्गं नयतीति व्याजरूपया निन्दया तत्प्रभावातिशयस्तुतिः ॥

साधु दूति! पुनः साधु कर्तव्यं किमतः परम् ॥
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि ॥ १ ॥

अत्र दूत्या उक्तस्तुत्या तस्या एव नायकरमणरूपत्रिरवासघातकर्तृत्वेन निन्दा । अस्या नामार्थानुसारेण तु मिषेऽन्त-

भावः । लक्षणानुसारेण च कार्यकारणयोर्विरुद्धतात्मकवैचित्र्येण चित्रहेतावन्तर्भावः ॥ इति व्याजस्तुतिः ॥ ३४ ॥

## व्याजोक्तिः ॥

व्याजेनोक्तिर्व्याजोक्तिः ॥ चन्द्रालोके इदं लक्षणोदाहरणम् —

"व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ॥

यथा—

सखि! पश्य गृहारामपरागैरस्मि धूसरा ॥

अत्र जारकृतभूरतिलग्नधूलिजालस्य परागरूपमन्यहेतुमुक्त्वा गोपनम् । उक्तनाम्नो मिषेऽन्तर्भावः ॥ लक्षणस्य त्वपन्हुतावन्तर्भावः ॥ इति व्याजोक्तिः ॥ ३५ ॥

## सामान्यम् ॥

समानस्य भावः सामान्यम् ॥ चन्द्रालोके इदं लक्षणोदाहरणम्—

"सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते ॥"

यथा—

पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥

मिलितस्यायं प्रकार इत्युक्तं प्राक् । अस्य मिलितेऽन्तर्भावः ॥ इति सामान्यम ॥ ३६ ॥

## ॥ प्रमाणालंकाराः ॥

निरञ्जननिराकारजगदीश्वरादिपदार्थानां यथार्थज्ञानार्थं षट्शास्त्रादिषु भिन्नभिन्नसंख्याकानि प्रत्यक्षादीनि प्रमाणानि स्वीकृतानि ॥ तत्र पौराणिका अष्टौ प्रमाणानि मन्यन्ते । तेषां नामानि शास्त्रीयोदाहरणानि चेह प्रदर्श्यन्ते ॥ प्रमीयतेऽनेनेति प्रमाणम् ॥ प्रमाशब्दार्थो यथार्थज्ञानम् । "प्रमा यथार्थानुभवे" इति चिन्तामणिः ॥

## ॥ प्रत्यक्षप्रमाणम् ॥

प्रतिशब्दार्थः सांमुख्यम् । "प्रति आभिमुख्ये" इति चिन्तामणिः ॥ अक्षशब्दार्थ इन्द्रियम् । "अक्ष इन्द्रियम् " इति शब्दकल्पद्रुमाभिधाने । अक्षं प्रति प्रत्यक्षम् । इन्द्रियद्वारा यथार्थज्ञानं प्रत्यक्षमित्यर्थः ॥ यथा डित्थोऽयम् ॥ पत्रादिरहितः शाखाशून्यः शुष्कवृक्षो डित्थ इत्युच्यते ॥ अत्र चक्षुरिन्द्रियेण डित्थपदार्थस्य ज्ञानम् ॥ श्रवणेन्द्रियादीनामुदाहरणानि स्वयमूह्यानि ॥ १ ॥

## ॥ अनुमानप्रमाणम् ॥

अत्रानुशब्दार्थो लक्षणम् ॥ "अनु लक्षणे" इति चिन्तामणिः ॥ लक्षणं तु चिन्हम् । "चिन्हं लक्ष्म च लक्षणम् ॥" इत्यमरः ॥ मानशब्दार्थो ज्ञानम् ॥ चिन्हद्वारा यथार्थज्ञानमनुमानमित्यर्थः ॥ यथा पर्वतो वन्हिमान् धूमात् ॥ अत्र धूमचिन्हेन वह्नेर्ज्ञानम् ॥ २ ॥

## ॥ उपमानप्रमाणम् ॥

उपमीयते येन तदुपमानम् ॥ अस्येदं लक्षणम् "सादृश्यात्सदृशज्ञानमुपमानम् " इति ॥ यथा गोसदृशो गवयः ॥ अत्र गोसादृश्येन गवयाख्यपशुविशेषस्य ज्ञानम् । अयं गवय इति ॥ ३ ॥

## ॥ शब्दप्रमाणम् ॥

शब्दद्वारा यथार्थज्ञानं शब्दप्रमाणम् ॥ यथा ब्रह्म सत्यम् ॥ उक्तवेदवचनस्य शब्दरूपत्वादिह शब्दाद्ब्रह्मणः सत्यत्वज्ञानम् ॥ ४ ॥

## अर्थापत्तिप्रमाणम् ॥

अर्थापत्तिप्रमाणस्य लक्षणोदाहरणं काव्यार्थापत्त्यलंकारे लिखितम् ॥ ५ ॥

# ॥ अनुपलब्धिप्रमाणम् ॥

अत्र नञ् निषेधार्थकः । उपेत्युपसर्गार्थः सामीप्यम् ॥ लब्धिशब्दार्थो लाभः ॥ अनुपलब्धिरितिसमुदितशब्दार्थस्तु समीपे लाभाभावः ॥ अभाव इति तात्पर्यम् ॥ यस्य वस्तुनोऽभावेन तस्य वस्तुनो ज्ञानं तदनुपलब्धिप्रमाणम् ॥ यथा 'घटाभाववद्भूतलम् ॥ अत्र घटाभावस्य कथनेन घटस्य ज्ञानं भवति । वस्तुनोऽभावस्य कथनेन तस्य वस्तुनो ज्ञानं तु तद्वस्तु विद्यत इति तस्याभावस्योक्तिरिति ॥ अस्मिन्स्थले घटस्य संसर्गो नास्तीति संसर्गाभावः ॥ अभावोऽनेकविधः ॥ ६ ॥

# ॥ संभवप्रमाणम् ॥

संभवतीति संभवः ॥ यत्र संभवेन पदार्थस्य ज्ञानं तत्संभवप्रमाणम् ॥ यथा सहस्रे शतम् ॥ सहस्रे शतस्य संभवाच्छतविषये सहस्रं संभवप्रमाणम् ॥ ७ ॥

# ॥ ऐतिह्यप्रमाणम् ॥

इतिहोचुरित्यनेन प्रकारेण यदुच्यते तदनिर्दिष्टप्रवक्तृकं परंपरागतं वचनमैतिह्यमित्युच्यते ॥ तादृशवचनद्वारा ज्ञानमैतिह्यप्रमाणम् ॥ यथा, इह वटे प्रेतः प्रतिवसति ॥ अत्र परंपरा-

गतोक्तवचनेनास्मिन्वटे प्रेतोऽस्तीति ज्ञानं भवति ॥ ८ ॥

भोजमहाराजकुवलयानन्दकारादयः केचन प्रत्यक्षादीनि प्रमाणान्यलंकारान्मन्यन्ते । मम तु मतं, उक्तप्रमाणानां स्वरूपमात्रेऽलंकारत्वयोग्या काव्योपयोगिता नास्ति । किं तु लोकशास्त्रव्यवहारानुसारेण धुरंधराङ्गीकृताशीलयालंकारोक्तप्रमाणानुसारेणापि धुरंधरोक्ता अलंकारा विद्यन्ते । तथा हि, प्रत्यक्षानुसारेण तु स्वभावोक्तिः ॥ प्रत्यक्षे कश्चिच्चमत्कारश्चेत्स्वभावोक्तेरेव सः ॥ यथा—"जायन्ते खलु तारका इतस्ततः—" इत्यत्र यद्यपि प्रातःकालस्य ज्ञानं श्रवणादयनम्यम् । तथाप्यस्मिन्नंशे न चमत्कारः ॥ किं तु प्रत्यक्षानुभवप्रातःकालस्य यथार्थवर्णने चमत्कारः ॥

यथा वा—

क्रान्तकान्तवदनप्रतिबिम्बे
भग्नबालसहकारसुगन्धौ ॥
स्वादुनि प्रणिहितालिनि शीते
निर्ववार मधुनीन्द्रियवर्गः ॥ ९ ॥

ऐतिह्यस्य शब्दप्रमाणेऽन्तर्भावः स्फुटतरः ॥ एनयो(*)रनुसारेण लोकोक्त्यलंकारः ॥ यथा—

स्रक्चन्दनादीन् रुचिरोपचारान्
कुर्वन्त्य एताः सखि नो निवार्याः ॥
तैः प्राणरक्षा भविता भवत्या
जीवन्नरो भद्रशतानि पश्येत् ॥ १ ॥

अत्र जीवन्नरो भद्रशतानि पश्येदिति ज्ञानांशे न चमत्कारः ॥ किंतु लोकोक्तौ चमत्कारः ॥ अर्थापत्त्यनुसारेण काव्यार्थापत्त्यलंकारः ॥ अनुपलब्धेरनुसारेण विशेषोक्तिरलंकारः ॥ संभवानुसारेण संभावनालंकारः ॥ यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ॥
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥१॥

अस्य वक्तुः समानकोटिकविदुषः कालस्य निरवधिकतया भविष्यत्काले भावित्वस्य योग्यताऽर्थात्संभवः ॥ वर्तमानकाले च भूमेर्विपुलतया तद्विद्यमानत्वस्य योग्यताऽर्थात्संभवः ॥ प्रत्यक्षादेः प्रमाणाष्टकस्य स्वभावोक्त्यादावन्तर्भावः ॥ अलंकाररहस्यापरिज्ञानादलंकारगणनारसिकभोजमहाराजादीनामयं प्रयत्नः पुनरुक्तिदोषरूपः ॥ इति प्रमाणालंकारः ॥

(*) ऐन्द्रैतिह्यप्रमाणयोः ॥

# संसृष्टिसंकरौ ॥

लोके ह्येका कान्ताऽनेकानलंकारान्धारयति । तैश्च तस्याः शोभाया आधिक्यं भवति । तत्र केचित्परस्परसंबन्धरहिता अलंकाराः । यथा हारमेखलाचूडामणिप्रभृतयः । एषां युगलाभावादपरेण संबन्धाभावः । केचित्परस्परसंबन्धसहिता अलंकाराः । यथा कुण्डलकङ्कणनूपुरप्रभृतयः । एषां युगलं भवतीति परस्परं संबन्धः । मम तु मतं, उक्तलोकन्यायेन काव्यरचनाप्यनेकानलंकारान्धारयति । तेन च तस्याः शोभाधिक्यं भवति । तत्रापि केचित्तु परस्परं संबन्धरहिता अलंकाराः ॥ यथा—

देवब्राह्मणवृद्धगोकविजनार्चा पूर्ववत्तानिता
योधामात्यप्रजागणानुगमहादुःखं हृतं स्वप्नवत् ॥
राणाश्रीफतसिंह! भोरुदधरस्त्वं मेदपाटं यथा
मग्नं सज्जनशोकसागर इमं भूगोलकं कोलकः ॥ १ ॥

अस्यां रचनायामुपमानुप्रासयोरर्थालंकारशब्दालंकारयोर्मेलनम् । न कश्चिदेनयोरत्र परस्परं संबन्धः ॥

यथा वा—

"निरीक्ष्य खे पत्रमयं पतङ्गम्-"

इत्यत्रोपमाप्रत्यनीकयोरर्थालंकारयोर्मेलनम् ॥ अत्राप्येनयो-

न कश्चित्परस्परं संबन्धः । तादृशसंबन्धशून्यालंकारमेलनस्य धुरंधरः संसृष्टिरिति नामाह ॥ संसृष्टिशब्दार्थः सङ्ग इति ॥ संसृष्टिः संसर्गे । संसर्गः सङ्गे" इति चिन्तामणिः ॥ अत्रालंकाराणां मेलनं तु सङ्गमात्रम् ॥ कविरचनाविषयकानेकालंकारमेलने कचिदलंकाराणां परस्परं संबन्धोऽपि भवति ॥

यथा—

गङ्गेन्दुभ्यां सितीभूतान् भवभूषाभुजङ्गमान् ॥
यशवन्तयशो ज्ञात्वा स्तुवन्ति युगपत्सुराः ॥ १ ॥

अत्र तद्गुणो भ्रान्तेः कारणम् ॥ एतयोः परस्परं कार्यकारणभावसंबन्धः ॥ तादृशसंबन्धसहितालंकारमेलनस्य धुरंधरः संकर इति नामाह ॥ संकरशब्दार्थो व्यामिश्रत्वम् । "संकरः व्यामिश्रत्वे" इति चिन्तामणिः ॥ अत्र वीत्युपसर्गो विशेषार्थकः । आङुपसर्गार्थः सर्वत इति । मिश्रशब्दार्थो मिलित इति । "मिश्रः संयुक्ते" इति चिन्तामणिः ॥ व्यामिश्रत्वमिति समुदितशब्दार्थस्तु विशेषेण सर्वतो मिश्रणमिति ॥ ग्रन्थकारैः संकरस्य चत्वारः प्रकारा उक्ताः ॥

तरुबीजदिवासूर्याहोरात्रनरसिंहकात् ॥
न्यायाच्चतुर्धा राजेन्द्र! संकरस्तु प्रकीर्तितः ॥ १ ॥

यत्रैकोऽपरस्य कारणं तत्र तरुबीजन्यायेन मिश्रणम् । अयमेवाङ्गाङ्गिभावसंकर इत्युच्यते ॥ अस्योदाहरणं च "गङ्गेन्दुभ्यां सितीभूतान्—" इत्येव ॥ यत्रालंकारद्वयस्य युगपद्भासनं

तत्र दिनसूर्यन्यायेन मिश्रणम् ॥ अयं समप्रधानसंकर इत्युच्यते ॥

यथा—

नाभिं विहाय चलिता भुजङ्ग्यमृतवाञ्छया ॥
नासाभूषां मयूराङ्कां दृष्ट्वाऽगे(*) निश्चलाऽभवत् ॥१॥

अत्रैकस्तु परंपरितरूपकालंकारः। अत्र लुप्तोपमावदेकदेशस्य लोपादेकदेशविवर्तिरूपकमिति मन्यन्ते। नाभ्याः सर्पविलेन, नासाभूषागतकृत्रिममयूरस्य च साक्षान्मयूरेण सह रूपकम्। अत्रानुकार्ययोर्लोपः ॥ रोमराज्या भुजङ्ग्या, अधररसस्यामृतेन, कुचयोश्च पर्वतेन सह रूपकम्। अत्रानुकारिणां लोपः। इत्थमिह परंपरितरूपकम् ॥ यौवनागमे रोमराज्या नाभ्याः प्रारम्भो भवति, भुजङ्गी विलान्निर्गच्छतीति नाभ्या विलरूपत्वम्, भुजङ्गी दुग्धादिमधुररसपानाभिलाषिणी भवति, मयूरस्य भक्ष्यरूपेति मयूराद्बिभेतीत्युक्तबलसमुदायेन रोमराज्यां भुजङ्गीत्वेनोत्प्रेक्षणादुत्प्रेक्षालंकारश्च ॥ एवमिह परंपरितरूपकोत्प्रेक्षयोर्युगपद्भासनात्समप्रधानसंकरः ॥ उक्तोत्प्रेक्षाऽर्वाचीनमतानुसारेण गम्योत्प्रेक्षेति वक्तुं शक्या ॥ किं चात्र वलमालासद्भावाद्दलमालोत्प्रेक्षापि ॥

यत्राहोरात्रन्यायेनालंकारद्वयमिश्रणं तत्र संदेहसंकरः ॥ अहोरात्रन्यायश्च, अन्हि रात्र्यभावः, रात्रौ चान्होऽभावः। तथैकस्मिन्नलंकारे सत्यपरस्याभावः, अपरालंकारे च सति तस्याभाव इति ॥

(*) अगे पर्वते ॥

यथा—

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जन्हुकन्याऽवतीर्णा ॥
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ १ ॥

इन्दुमत्या स्वयंवरेऽजभूपे वृते सर्वे सदस्या अन्यनृपाणां कर्णकटु पूर्वार्धरूपं वाक्यमुच्चैरुच्चारयामासुः। अत्र सदस्यानामिन्दुमत्याऽजो वृत इति कथनमभीष्टम्। तदनुक्त्वा तस्य प्रतिबिम्बरूपमुक्तवचनमभिहितमिति चेत्तदाऽर्वाचीनमतीयो ललितालंकारः। अस्मन्मतीयश्च पर्यायोक्त्यलंकारः। यदि च सदस्यैर्यथायोग्यसंबन्धः समभवदित्यभिप्रेत्योक्तवचनमभिहितं चेत्तदा समालंकारः॥उक्तालंकारद्वये कस्यचित्साधकबाधकताया अभावान्नेदं निर्णीयते किमिह पर्यायोक्त्यलंकारः समालंकारो वेतीह संदेहसंकरः॥

यथा नृसिंहस्यैकस्मिञ्छरीरे नरसिंहात्मकं स्वरूपद्वयम्। तथा यत्रैकस्मिन्वचनेऽलंकारद्वयं तत्र नृसिंहन्यायेन मिश्रणादेकवाचकानुप्रवेशसंकरः॥

यथा—

अमरीकबरीभारभ्रमरीमुखरीकृतम् ॥
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥ १ ॥

अत्रैकस्मिन् भ्रमरीशब्देऽनुप्रासाधिकालंकारयोः सत्वादे-

कवाचकानुप्रवेशसंकरः ॥ इदं पद्यमधिकालंकारप्रकरणे सविस्तरं व्याख्यातम् ॥ अर्वाचीना उक्तसंसृष्टिसंकरविषये संसृष्टिसंकराख्यौ पृथगलंकारौ मन्यन्ते॥काव्यप्रकाशस्योक्तमतं स्पष्टयन्काव्यप्रदीपकारः "अस्ति पुनः कश्चिद्विषयो यत्राङ्गदादिसंबद्धपद्मरागप्रमुखमेलकवल्लोकानामलंकाराणां संवलन एव चमत्कारः। तस्मात्सोऽप्यलंकारः ॥ तत्र द्वयी गतिः। परस्परमनपेक्ष्य व्यवस्थितेः। तदभावाच्च। तत्र प्रथमा संसृष्टिरुच्यते। द्वितीया तु संकरः" इति॥ मम तु मतं, प्रदीपकारप्रदर्शितलोकालंकारन्याये तु रत्नसुवर्णयोर्द्विर्भावो नावतिष्ठते। किं त्वेकीभूतता भवति। तदा च स्वरूपं शोभा खचितकङ्कणेत्यादिनामविशेषाश्च विलक्षणा भवन्ति ॥ उक्तलोकालंकारन्यायेन तु काव्यालंकारेषूपमातन्निषेधरूपाक्षेपालंकारयोर्मिश्रणे तृतीयस्य व्यतिरेकनामकालंकारचमत्कारस्योत्थानम् ॥ किं च

जस्सेअ वणो तस्सेअ वेअणा भणइ जणो तं अलीअम्॥
दंतक्खअं कवोले वहूए वेअणा सवत्तीणम्॥१॥(*)

अत्र सखीकृतपरिहासे यस्याः क्षतं तस्या वेदनाया अभाव इति तु विशेषोक्तिरलंकारः। सपत्न्याश्च क्षतं विना वेदनेति विभावनाऽलंकारः। उक्तालंकारद्वयमिश्रणेऽसंगतिनामकतृतीयालंकारस्योत्थानम् ॥ शुद्धोपमाविपरीतोपमेत्यु-

(*) यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकम्। दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥ इति संस्कृतम्॥

पमायाः प्रकारद्वयमिश्रणे तृतीयस्य परस्परोपमानामकोपमा-प्रकारचमत्कारस्योत्थानम् ॥ न हि तत्रोक्तालंकारयोः प्रकारयोश्च द्विर्भावोऽवतिष्ठते । किं त्वेकीभूतता भवति । अत एव व्यतिरेकासंगतिपरस्परोपमाणां चमत्कारः प्रधानीभूयोक्तालंकारयोः प्रकारयोश्च चमत्कारं तिरोधत्ते । अत्र संसृष्टिसंकरयोस्त्वलंकारमिश्रणे द्विर्भावो विद्यमानः । न त्वेकीभूतता । क्वचित्परस्परकार्यकारणादिसंबन्धमात्रं चेत्तादृशसंबन्धेन त्वेकीभूतता न भवति । यथा पितृपुत्रयोः कार्यकारणभावसंबन्धः । तत्र च तयोर्द्विरूपत्वं प्रत्यक्षम् । अनेकालंकारमिश्रणे कान्ताया अनेकालंकारधारणलोकन्यायो वर्तते । तत्र तेषां स्वरूपं शोभा नामानि च पृथग्भावं भजन्ते ॥ कान्ताया अनेकालंकारमिश्रणे तेषां सर्वेषां मेलनेन न तद्भिन्नतृतीयालंकारनिष्पत्तिः । किं तु तत्रानेकालंकारमेलनेन शोभाधिक्यमात्रम् । तथैव काव्येऽप्यनेकालंकारमिश्रणे काव्यस्य शोभाया आधिक्यमात्रम् । तेषां द्विविधमिश्रणस्यैव संसृष्टिसंकरेत्यभिधानद्वयं । न त्वलंकारविवक्षया धुरंधरैरेतन्नामयुगलमुपदिष्टम् । अत्र मिश्रणेऽलंकारत्वं विवक्ष्यते चेत्सामान्यतया मिश्रणे समुच्चयालंकारः । अङ्गाङ्गिभावसंकरे हेत्वलंकारः । समप्रधानसंकरे सहोक्त्यलंकारः । संदेहसंकरे संदेहालंकारः । एकवाचकानुप्रवेशसंकरे चाधिकालंकारः । संसृष्टिसंकरेतिसंख्यारूपसंज्ञाया लोकव्यवहारेऽन्तर्भावः ॥ इति संसृष्टिसंकरौ ॥

लीयतेऽतिशयोक्तौ प्रौढोक्तिरत्युक्तिरेव च ॥
आक्षेपेऽनन्वयो भूप! प्रतीपप्रतिषेधकौ ॥ १ ॥
तद्गुणेऽतद्गुणश्चोदाहरणादौ विकस्वरः ॥
तथैवार्थान्तरन्यासो राजंस्तत्रैव लीयते ॥ २ ॥
विचित्रेऽसंगतिश्चैव विशेषोक्तिर्विभावना ॥
असंभवश्च चत्वारो लीयन्ते धरणीपते! ॥ ३ ॥
दीपके कारकाऽऽवृत्तिमालादीपककानि(*) च ॥
मिलिते नृप! सामान्यमुन्मीलितविशेषकौ ॥ ४ ॥
उपमेयोपमा चैव प्रतिवस्तूपमा तथा ॥
उपमायाः प्रकारावुल्लासस्तु विषमे समे ॥ ५ ॥
हेतौ लयो भवेत्काव्यलिङ्गकारणमालयोः ॥
गूढोक्तिस्तु मिषे सूक्ष्मे लीयते मरुभूपते! ॥ ६ ॥
छेकोक्तिश्चैव लोकोक्तौ राजन्, परिकराङ्कुरः ॥
प्रकारः स्यात्परिकरालंकारस्य महीपते! ॥ ७ ॥
अन्योन्यस्य प्रकारः स्यात्परिवृत्तिर्नराधिप! ॥
अप्रस्तुतप्रशंसायाः प्रस्तुताङ्कुर एव च ॥ ८ ॥
युक्तिश्चापन्हुतौ पर्यायोक्तौ तु ललितं नृप! ॥
आभासस्य प्रकारः स्याद्विरोधाभासभूषणम् ॥ ९ ॥
विवृतोक्तिर्मिषे सूक्ष्मे विशेषस्तु नराधिप! ॥

(*) द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते : कारकदीपकम्, आवृत्तिदीपकम्, मालादीपकमित्यर्थः

विचित्राधिकयोर्व्याजनिन्दायास्तु मिषे लयः॥१०॥
व्याजस्तुतिर्मिषे चैव विचित्रे लीयते नृप! ॥
व्याजोक्तिस्तु मिषे भूपापन्हुतौ च विलीयते।११॥
प्रत्यक्षादिप्रमाणानि स्वभावोक्त्यादिषु प्रभो! ॥
लीयन्ते भूमिपैतेषां भिन्नतासाहसं वृथा ॥ १२॥
संसृष्टिः संकर इति भूपामिश्रणनामनी ॥
अन्तर्भावोऽनयोर्लोके ज्ञेयो मरुमहेश्वर! ॥ १३ ॥

ननु भवता सर्वालंकाराणां प्रथमोदाहरणं नियमेन राजराजेश्वरयशवन्तसिंहविषयमुपदिष्टमित्यन्तर्भावाकृतौ कुतो न तस्य निर्वाह इति चेच्छृणु । एतेऽलंकारा अस्माभिः पृथङ्नाङ्गीकृता इति ॥

इतिश्रीमन्मरुमण्डलमुकुटमणि- महाराजाधिराज- राजराजेश्वर जी. सी. ऐस. आई. श्रीयशवन्तसिंहस्याज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तभूषणग्रन्थेऽलंकाराणामन्तर्भावनिरूपणं नाम षष्ठाकृतिः संपूर्णा ॥

# अथ सप्तमाकृतिप्रारम्भः ॥

यस्मिन्समाप्तिमाप्नोति जगन्नत्वा तमीश्वरम् ॥
समाप्तेः सप्तमी चैषाऽऽकृतिरद्योच्यते नृप! ॥१॥
अपहर्तुमज्ञताऽघं सुपर्ववाणीत्रिविष्टपाल्लोकात् ॥
नरवाणीक्षोण्यन्तः साहित्यामरनदीं समानेतुम् ॥२॥
पूर्वयशवन्तसिंहो भाषाभूषणविनिर्मितिं कृत्वा ॥
प्रारम्भं प्राणैषीद्रविकुलजातो यथांशुमानादौ(*)॥३॥
पश्चाच्च मानसिंहो(†) दिलीपनृपवच्चकार यत्न-
भरम् ॥
यस्याधुनापि कीर्तिर्विद्वद्वृन्दैः प्रगीयते लोके ॥४॥

---

(*) स्वर्गाद्गङ्गां भुवं समानेतुं राजराजेश्वरपूर्वजोंऽशुमानारम्भमकार्षीत्। तदर्थं तपश्चचारेत्यर्थः। ततश्चांशुमत्पुत्रो दिलीपस्तदर्थं यतते स्म। तत्पुत्रो भगीरथः कृतार्थतामवाप। तत्समये गङ्गा पृथिव्यामवतीर्णेतिभावः ॥

(†) राजराजेश्वरमानसिंहो योधपुरे विद्यायाः प्रचारं बहुलतरं चकार। बहवः प्रख्यातपण्डितास्तत्सभामलंकुर्वन्ति स्म। तद्विषयं कवीन्द्रशंभुदत्तप्रणीतं पद्यमिदम्—

योधो योधपुरं चक्रे बूंजं विजयसिंहराट् ॥
मानश्च काशीं नेपालं लखनेऊपुरं व्यधात् ॥

राजराजेश्वरविजयसिंहो वल्लभाचार्यसांप्रदायिकप्रतिमाप्रतिष्ठापनेन योधपुरं बूजमकार्षीत्। राजराजेश्वरमानसिंहो योधपुरं विद्वद्वृन्देन काशीं, योगिगणेन नेपालनगरं, गानविद्याविशारदजनसमुदायेन च लखनेऊनगरं चकार ॥

यशवन्तयशोभूषणनिबन्धमेतं तु कारयित्वाऽद्य ॥
श्रीयशवन्तनृपालः कृतार्थ आसीद्भगीरथेन समम् ॥५॥
विहितो नीरसं ज्ञात्वा मया व्याकरणे श्रमः ॥
स्वल्पस्ततो देववाणीं शुद्धां वक्तुं न शक्नुयाम् ॥६॥
यशवन्तयशोभूषाऽनुवादं देवतागिरि ॥
सुब्रह्मण्यबुधश्चक्रे यशवन्तनृपाज्ञया ॥ ७ ॥
अस्यानुवादं राजाज्ञामाप्याकार्षीद्बुधोत्तमः ॥
दध्यङ्ङन्वयजो रामकर्णाख्यो बलदेवभूः ॥ ८ ॥
सुरवाणीसंरचिता बहवो ग्रन्था अनूदिता नृगिरि ॥
इह तत्प्रतिलोमत्वं भाग्याद्यशवन्तभूपस्य ॥ ९ ॥
यशवन्तयशोभूषणपूर्तेः समयोऽधुनोच्यते राजन्! ॥
खशराङ्केन्दु१९५०मितेऽब्दे विक्रमराजस्य मासि भाद्रपदे ॥ १० ॥
राकायां सितपक्षे शुभेऽथ सोमस्य वासरे भूप! ॥
शरभूवसुचन्द्रमिते१८१५ शाके वै शालिवाहनाख्यस्य ॥ ११ ॥

गुणनववसुभूवर्षे १८९३ चेसाविसंज्ञेऽधुना प्रवृत्ते च॥
पूर्णः प्रबन्ध एष यावच्चन्द्रार्कमस्तु जगतीह॥ १२॥
कल्पे श्वेतवराहस्य मुनौ वैवस्वतेऽन्तरे ॥
अष्टाविंशे कलावस्मिंञ्शराङ्कनवसागराः ॥ १३ ॥
अधुना शरदोऽतीता मासा अध्यर्धपञ्च च ॥
नानासंवत्सरोल्लेखान्माभूत्कालान्तरे भ्रमः ॥ १४ ॥
यशवन्तनृपालस्य भूपालाः समकालिकाः ॥
उच्यन्ते ग्रन्थकालाप्तौ सहायाः स्युर्हि कर्हिचित् ।१५
गुहिलः श्रीफतैसिंह आस्तेऽद्योदयपत्तने ॥
सवाईमाधवः कूर्मो राजा जयपुरेऽधुना ॥ १६ ॥
फाल्गुनकृष्णे भौमे पूर्णं ग्रन्थं चतुर्दशीघस्रे ॥
आकर्ण्येमं लक्षं प्रादाद्यशवन्तभूपालः ॥ १७ ॥
हाटकभूषणभूषितमिभराजं द्वौ हयौ च तादृक्षौ ॥
मुक्तामालां मणिमयशिरोविभूषां च कुण्डले कटकौ १८
वसनानि खड्गमतुलं यमदंष्ट्राख्यं(*) च शस्त्रमति
मूल्यम् ।

(*) कटारी इति भाषा ।

मुद्राः पञ्चसहस्रं परिजनहेतो(*)र्ददौ महाराजः ।१९।
लक्षप्रदानपूर्त्यै प्रतिवर्षं षट्सहस्रमुद्राप्त्यै ॥
दत्वा ग्रामसमूहं निजनामासौ स्थिरं व्यधत्त नृपः २०
राज्याभिषेकसमयेऽप्येवंरीत्यैव लक्षदानं मे ।
श्रीयशवन्तनृपालः प्रादाद्दाता प्रतिक्षणं भुवने ॥२१॥
तातः पितामहोऽहं पुनः पुनर्मानलक्ष्म संप्राप्ताः ॥
चक्रे यशवन्तनृपः प्रतिप्रणामेन मानपूर्तिं मे ॥२२॥
पदवीं कविराज इति प्राग्दध्रेऽहं च साम्प्रतं मरुराट् ॥
कविराजापदंदानाद्विभवेनाप्यकृत राजरूपं माम् ।२३।
चमरं चरणे स्वर्णं भूपेनालिङ्गनं च संप्रीत्या ॥
दुन्दुभिरथो ध्वजश्च मुद्रा(†) द्वाःपालवेत्रं(‡) च ॥२४॥
गमनागमनोत्थानं सादरलेखश्च राजपत्रेषु (§) ॥
नेदिष्ठमासनं च वितीर्णमेतन्मरुक्षितीन्द्रेण ॥ २५ ॥

---

(*) मम भार्याया भूषणाद्यर्थम् । (†) मोहरछाप इति भाषा।
(‡) छड़ी इति भाषा । (§) लोके "खातरुक्का" इति । तल्लेखश्चैवम् ।

॥ श्रीनाथजी ॥

कविराजाजी मुरारदानजीसूं म्हांरौ जुहार वांचजो । अपरंच

तदुपरि सम्प्रति राज्ञा प्रतिप्रणामस्य रीतिमनुसरता ॥
भूमण्डले स्वकीर्तिर्वितानिता या प्रगीयते लोकैः ।२६।

ग्रन्थकर्तुः कविराजमुरारिदानस्य चित्रम् ॥



यश एव धनं वेत्ति न धरां कनकं च यः ॥
चिरं जीव्यादुदारोऽसौ यशवन्तनरेश्वरः ॥ २७ ॥
आदौ पञ्चाननो ग्रन्थान्बहूनश्रावयद्धि माम् ॥
तिवाडीत्युपटङ्काढ्यो दध्यङ्कुलसमुद्भवः ॥ २८ ॥
सुब्रह्मण्यकथा पूर्वं भणिता मनुजेश्वर! ॥
पुनस्तु कथ्यते नेह पुनरुक्तिर्भवेदिति ॥ २९ ॥
मिश्रेण पूर्णचन्द्रेण ग्रन्थ एष व्यलिख्यत ॥
लम्बोदरेण लिखितं व्यासोक्तं भारतं यथा ॥ ३० ॥
कश्मीरदेशसंभवपण्डितपदवीधरेण विप्रेण ॥
ग्रन्थो दुर्गानिरञ्जननाथेनायं सुमुद्रितः सहितम् ।३१।

संपठ्य पूर्वं यशवन्तभूषण-
मन्यप्रबन्धानिह यः पठेत्कविः ॥
तस्यान्तरं भूरितरं हि चेतसि
लक्ष्येत तस्मादतिमोदवान् भवेत् ॥ ३२ ॥

पत्रं परमपवित्रं सिंहोत्तरपदमनोहराख्यस्य ॥
प्राप्तं यत्र चरित्रं यशवन्तक्ष्मापतेरुदारतरम् ॥ ३३॥
पत्रं प्रसङ्गवशतः प्रेषितमेतच्चिराय तेनैव ॥
मुद्रितमन्ते तदिदं चिरकालं स्मृतिगतं भूयात् ॥ ३४॥

पत्रकोशस्योपरिपृष्ठे ॥

॥७४॥ श्रीकविराजाजी श्रीमुरारिदानजी योग्यम् ॥

मारवाड़ प्रान्ते } पत्रं योधपुरं प्रति.

स्थानं सोजतीगोपुरम्.

योधपुरम्

पत्रकोशस्यापरपृष्ठे ॥



॥ श्रीरामो जयति ॥

श्रीनाथस्य

मदृशामोऽस्त्वपाङ्गः ।
प्रीत्याऽहिकेनः स्वीकार्यः ॥

श्रीयोधपुरशुभस्थाने सर्वोपमासंयुक्तकविराजाजी श्रीमुरारिदानजीसमीपे सरदारदुर्गाद्ठक्कुरमनोहरसिंहस्य प्रणतयो वाच्याः । अत्रत्योदन्तस्तु सुदृष्टेः शुभोस्ति । भवतां सदा शुभमस्तु । भवन्तोऽस्माकं महागौरवास्पदम् । सदैव स्नेहो रक्ष्यते तथा रक्षणीयः । अपरं च भवतां दलं डाकद्वारा समायातम् । यशवन्तयशोभूषणग्रन्थमुद्रणप्रारम्भस्य सूचनाप्रदानादत्यानन्दो जातः । परमेश्वरप्रसादादयं ग्रन्थः शीघ्रं संमुद्रय भवच्छ्रमः साफल्यमियात् । सर्वे च लाभभाजो भवेयुः । केवलमेतावाञ्छोको यत्स्वर्गवासिमहाराजश्रीयशवन्तसिंहसमयेऽस्य ग्रन्थस्य मुद्रणेन भवितव्यं तन्न जातमिति । महाराजस्य मनस्यस्य ग्रन्थस्यातीवोत्साह आसीत् । किमतोऽधिकम्, वयमेतद्ग्रन्थश्रवणार्थं योधपुरमाहूतास्तदैकदा मां बारहठकृष्णसिंहं च संबोध्य महाराज एतदाज्ञापयामास "कविराजेनास्माकमेष ग्रन्थ ईदृशो

निर्मितः, यत्कविराजसमं सुवर्णं तोलयित्वा तेनास्य प्रतिमां विधाय सा सदैव पूज्येत" इति ॥ अनेन वचनेन विदितं भवति, महाराजस्य मनस्यस्य ग्रन्थस्य कियानुत्साह इति । परंतु परमेश्वरेण महाराजशरीरं न रक्षितमिति महाञ्छोकः । तथाप्येतद्ग्रन्थप्रभावात् स्वर्गवासिमहाराजनाम भवन्नाम च जगति सहस्रं समाः स्थास्यति । तदधुना त्वरितं मुद्रापयित्वा प्रसिद्धिमानेयोऽयं ग्रन्थः । मद्गृहं स्वगृहं मत्वा कार्यं लेखनीयम् ॥ संवत् १९५२ आषाढशुक्लपञ्चमी ५ ॥

यं संबोध्य राजराजेश्वरयशवन्तसिंहेनोक्तस्वमनोरथः प्रकटीकृतः सोऽयं ठक्कुरमनोहरसिंहो विद्वान्सकलगुणनिधिर्डोडियाजातीयक्षत्रियो महाराणामेदपाटेश्वरस्य महासामन्तेषु परिगणितः । एतट्ठक्कुरग्रामस्य पूर्वं "लावा" इति नामासीत् । उक्तठक्कुरस्य पूर्वजः सरदारसिंहो दुर्गं प्रासादं च रचयामासेत्यपरं सरदारगढेति नाम प्रसिद्धिमापेदे । राजराजेश्वरः स्वदेशिविदेशिविदुषां मण्डलं विरचय्य यशवन्तयशोभूषणग्रन्थमश्रौषीत् । तत्रोक्तठक्कुरोऽपि समाहूतः । अयं ठक्कुरो राजराजेश्वरस्य संबन्धी च । एतत्पूर्वजसरदारसिंहसुता गुलाबकँवरनाम्नी राजराजेश्वरपूर्वजमहाराजश्रीविजयसिंहेन परिणीता । उक्तपत्रे कृष्णसिंहस्याप्युल्लेखः । सोऽपि ग्रन्थश्रवणार्थं विद्वन्मण्डले समाहूतः । अस्य ग्रामः खेड़ानामकः शाहपुराप्रान्तान्तर्गतः । चारणोऽयं सोदाबारहठजातीयः शाहपुराराजाधिराजस्य प्रतोलीपात्रम् ॥

लीनं काव्यरसे प्रवीणमतुलोदारं नवीनस्थलं

तादृक्‌श्रीयशवन्तभूपतिमृते स्यात्कस्य दृग्गोचरम् ॥
ज्ञात्वा श्रेष्ठतमं यशो मनसि संहृष्टस्तमेनं विना
को वा चारणजातिमत्र हि कलौ संपूजयेदिष्टवत् ।३५।
यशवन्तयशोभूषणनामा ग्रन्थः कृतस्ततो हि मया ॥
विशदीकृतास्तु तत्रालंकारा एव विस्तरतः ॥ ३६ ॥
संगृह्य तस्य सारं स्वल्पो यशवन्तभूषणग्रन्थः ॥
राजाज्ञया कृतोऽयं सुखेन बोधाय काव्यशास्त्रस्य।३७।
सुरवाण्यनुवादस्यास्य मुद्रणेऽभूद्विलम्बनं दैवात् ॥
मुनिमितशरदो ह्यस्मिन्नवकाशे संविमर्शता तु
मया ॥३८॥
व्यङ्ग्यरसाद्यपि विशदं भूषणवच्चात्र विस्तराद्विहितम्॥
तस्मादभवत्सकलं साहित्यस्य स्वरूपमतिरुचिरम् ३९।
भूपतिभाग्यचरित्राण्यन्यान्युक्तानि पूर्वमस्माभिः ॥
तद्वद्दोऽपि फलं गुरु श्रीमद्यशवन्तभाग्यस्य ॥४०॥

इतिश्रीमन्मरुमण्डलमुकुटमणि· महाराजाधिराज-राजराजेश्वर जी. सी. एस्. आई.श्रीयशवन्तसिंहाज्ञया कविराजमुरारिदानविरचिते यशवन्तभूषणग्रन्थे ग्रन्थसमाप्तिसमयग्रन्थप्रत्युपकारवर्णनं नाम सप्तमाकृतिः समाप्ता ॥ ७ ॥

इति यशवन्तभूषणग्रन्थः समाप्तः ॥

# शुद्धिपत्रम्

॥ प्रस्तावनायाम् ॥

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १४ | ("एवमन्येषामपि"<br>अस्योपरि टिप्पणम् ॥) | भागवतादिग्रन्थेषु सन-<br>त्कुमारवराहादिद्वाविंश-<br>त्यवताराणां कथाकथना-<br>त्तेषामवताराणां, महा-<br>भारतादिग्रन्थेषु च कति-<br>पयमहाराजानां प्रसिद्ध-<br>पुरुषाणां च कथाकथना-<br>त्तेषां महाराजानां प्रसि-<br>द्धपुरुषाणां च नामान्य-<br>पि स्थिरत्वं भजन्ते॥ |
| १ | २३ | नामस्थविरयन्ति | नामानि स्थिरयन्ति |
| ३ | २ | सर्वे- | सर्वं |
| ६ | १६ | रसवदाद्यलंकाराः | रसवदादिभावालंकाराः |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | २१ | माशासे ॥ | माशासे॥ सरसकवेर्मर्माणि हि विध्यति राजन्वदद्वयं किं तत् । अबुधश्लाघनमेकं बुधस्य मौनं द्वितीयमवधेहि ॥ १ ॥ |
| ३ | २२ | कविराजा- | कविराजो |

॥ यशवन्तभूषणे ॥

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | १९ | जालोरपुराधीशः | जालोरदुर्गाधीशः |
| १० | ९ | संबुभुजुस्ततः | बुभुजिरे ततः |
| ११ | १२ | जिग्ये बाहुबलास्त्वीये | जिगाय विक्रमात्स्वीये |
| २२ | २० | राजल्लोक | राजँल्लोक |
| २३- उपरि | | राजवंशवर्णनम् | कविवंशवर्णनम् |
| २५-२७-२६-३१ | | " | " |
| २५ | २१ | स्तत | दैवत्व |
| २६ | १३ | मृगया | ऋषिवाक्यैश्चारणवाक्यैः ॥ मृगया |
| २८ | ६ | पासाञ्चक्रुः | पासाञ्चक्रिरे |
| २६ | ४ | विजिग्युः | विजिग्यिरे |
| ३१ | १२ | ऽधितस्थौ | ऽधितष्ठौ |
| ३२ | ९ | प्रासा | प्रासादा |
| ३२ | १४ | इति ॥ | इति ॥ अयमखिलोऽपि वृत्तान्तः संक्षेपेण लिखितः ॥ |
| ३२- उपरि | | राजवंशवर्णनम् | ग्रन्थनिर्माणकारणम् |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३- | १३ | ("विबुध"शब्दोपरि टिप्पणम्) | विबुधाः पण्डिताः ॥ "विबुधः पण्डिते" इति चिन्तामणिः ॥ |
| ३५- | २ | प्रसिद्धम्॥ | प्रसिद्धम् ॥ तथाहि मनुस्मृतौ " सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥" इति ॥ |
| ३५- ३७-३६-४१-४३ | उपरि | राजवंशवर्णनम् " | नामलक्षणविचारः " |
| ३६- | ५ | णमप्रह्वत्वे | णम प्रह्वत्वे |
| ३७- | १६ | गुणः शुण्डे | गुणो हस्ते |
| ३७- | १८ | पृष्ठे चापि च | पृष्ठे भूमिप । |
| " | " | मतङ्गो | गजेन्द्रो |
| ३९- | १२ | कविकृतनाम्नोर्यौ नासंभव गिकत्वान्नासंभव | |
| ३९- | १३ | क्वापि | कविकृतनाम्नो यौगिकत्वाद्योगरूढत्वाद्वा क्वापि |
| ३९- | २१ | शब्देष्व | नामस्व |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ४१ | ४ | रूढत्वम् । तदुक्तं न्यायमुक्तावल्याम् "रूढिज्ञानस्य केवलयौगिकार्थज्ञानप्रतिबन्धकत्वात्" इति ॥ | रूढत्वम् । |
| ४१ | ६ | कुमुदस्यापि । दिवसविकासिकमल एव शिष्टप्रयोगात् । | कुमुदस्यापि । अत्रायं निष्कर्षः, |
| ४१ | ११ | बोध इति निष्कर्षः । | बोधो भवति । दिवसविकासिकमल एव शिष्टप्रयोगात् । न तु कुमुदेऽपि । इदमेव रूढत्वम् । उक्तं हि न्यायमुक्तावल्याम् "रूढिज्ञानस्य केवल यौगिकार्थज्ञानप्रतिबन्धकत्वात्" इति ॥ रूढिज्ञानेन केवलयौगिकार्थज्ञानमवरुध्यते । अन्यपदार्थेषु तस्य प्रवृत्तिर्न भवतीति भावः ॥ |
| ४१ | १४ | नीरशब्दार्थौ | नीरेत्यवयवार्थौ |
| ४३ | १८ | ज्योतिष | ज्यौतिष |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४५- | उपरि | राजवंशवर्णनम् | मरुदेशराज्यपरिवर्तनम् |
| ४५- | १३ | राड्पूभूमिपो | राड्पृक्षितीशो |
| ४७-४९ | उपरि | राजवंशवर्णनम् | प्राचीनग्रन्थकर्तृनामानि |
| ४७- | ७ | विनिर्मिमे | विनिर्ममे |
| ५०- | २२ | च्छद्: | च्छन्दः |
| ५१- | उपरि | राजवंशवर्णनम् | छन्दआदिविचारः |
| ५१- | १७ | अपच्छन्दकं छ | अपच्छन्दश्छ |
| ५२- | ५ | इात | इति |
| ५२- | ७ | याचे | याचे |
| ५२- | १४ | रसोन्मत्ततया | काव्यरसोन्मत्ततया |
| ५४- | १० | तत्र | तत्र प्रायो |
| ६१- | १० | त्वात् । | त्वात् । कान्तया उपदेशो हि हावभावादिसंवलितत्वादतिमनोहरो भवति । |
| ६६- | १७ | संसार | शक्तिः सामर्थ्यम्। संसारे |
| ,, | १६ | अभिधेयार्थो | संकेतितार्थोऽभिधेयार्थो |
| ६७- | १ | नामान्तरम् । | नामान्तरम्। संकेतशक्तिप्रतिपाद्यत्वात्संकेतितार्थइति ॥ |
| ,, | ६ | वाच्यार्थ इति ॥ | वाच्यार्थ इति ॥ वाचकशब्दे वाच्यार्थबोधार्थं संकेतः शक्तिरित्ययं संकेतितार्थोऽप्युच्यते ॥ |

| पृष्ठ. | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६८- | ९ | रूपा | रूपा लक्षकशब्दनिष्ठा |
| ,, | १६ | सिद्धि प्र- | सिद्धिप्र- |
| ७०- | ४ | चाकूचक्य | चाकचक्यं |
| ७१- | ११ | मुख्यतया वाच्यार्थस्य बाधः । | वाच्यार्थस्य बाधो मुख्यः |
| ७३- | ७ | रूढालक्षणा | रूढलक्षणा |
| ७३- | ११ | संभवतीति सप्रयोजनमेव बाधितत्वा कथं लक्षणाया मूलम् । | भवतीति प्रयोजनं विना लक्षणा नोपपद्यते। |
| ७५- | ४ | मतं, | मतं, केनचिद्गुणसंबन्धवत्या लक्षणाया उदाहरणे गुणसंबन्धदर्शनार्थमियं गौणी लक्षणेत्युल्लेखितं ततोभ्रान्ता अर्वाचीना गौणीतिप्रकारममन्यन्त । |
| ७५- | १८ | बुध्यताम् | बुध्यताम् ॥ |
| ,, | १६ | ।। | ॥ |
| ,, | २० | ॥ | ॥१॥ |
| ७६- | २ | शक्तिः | शब्दनिष्ठा शक्तिः |
| ,, | १६ | अन्यार्थस्य | अन्यार्थस्याति |
| ७७- | ६ | साधु | विरक्त |
| ७९- | १५ | प्रदीपकार- | प्रदीपकारः |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७६ | १६ | तस्याः | तस्या- |
| ,, | १८ | भावाच्च | भावात् |
| ८३ | १ | शोभायमान | शोभन |
| ८५ | २० | व्यदेश्यत्वात् । व्य | व्यपदेश्यत्वाद्ध्व |
| ,, | २१ | ध्वनिव्यङ्ग्ययोः प-र्यायनामत्वात् ॥ | ध्वनिस्तु व्यङ्ग्यस्य ना-मान्तरमेव ॥ |
| ८६ | ११ | कैलासक्षीराब्धि | क्षीराब्धिकैलास |
| ८८ | ८ | तीतिधुरंधराशयः | ति । |
| ,, | ६ | विद्यमानत्वात् । | विद्यमानत्वादिति धुरंधराशयः ॥ |
| ९१ | ६ | नर्तयत् | नर्तयत |
| ९२ | १८ | "तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते" इति प्रकाशकारस्य भणने प्रमादः ॥ | अत्राधमपदस्य प्रयोगः प्रकाशकारस्य प्रमाद-मूलः । |
| ,, | २२ | न्यून | न्यून |
| ९६ | ४ | मेरोः | मेरुं |
| ९७ | ८ | दुशासनस्य | दुःशासनस्य |
| ,, | १९ | काकुना | काका |
| १०१ | १० | अगूढा | किं त्वगूढा |
| ,, | १२ | न्यूनत्वादभावाद्वा | न्यूनत्वमभावो वा |

| पृष्ठं | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०२ | १६ | व्यङ्ग्य इहेरितः॥ | व्यङ्ग्यः ॥ |
| ,, | २० | तादृश | वाच्यार्थात्तादृश |
| १०३ | ११ | विकरो | विकारो |
| १०५ | ३ | चतुर्थवरणे | चतुर्थचरणे |
| ,, | १० | वाच्यार्थप्रायत्वं | वाच्यार्थत्वं |
| १११ | १० | दाहरणान्तरम्। | दाहरणान्तरम्। कविसृष्टेर्नियतिकृतानियमरहितत्वेन कविसृष्टौ कविप्रौढोक्तिमात्रसिद्धेतिप्रकारस्य वक्तुमशक्यत्वात्। |
| १२६ | ६ | तत्र मनसोऽप्रवर्तित्वात् | अत्रोऽत्र मनसोऽप्रवर्तित्वम् |
| ,, | ८ | एतेषु | अत एतेषु |
| १२७ | १६ | शरीरस्य | भयाच्छरीरस्य |
| १२८ | ७ | प्रातर्जृम्भायमाण | प्रातर्वै जृम्भमाण |
| १३१ | ७ | भावा | भाव |
| १३२ | १५ | तत्र | कुतः, |
| १४२ | १-३ | तर्कना | तर्कणा |
| १४८ | ६ | धृतिः | संतोषेऽपि धैर्यस्य सद्भावाद्धृतौ संतोषस्यान्तर्भावः ॥ धृतिः |
| १५० | १७ | कीर्तिश्रवणस्य | कीर्त्याः पठनस्य |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १५१- | २० | कीर्तिश्रवणमा | कविकृतयशःपाठ आ- |
| १५२- | ५ | परप्रियः स्वस्य<br>भवेत्कदाचिन्नैवे-<br>ति चित्ते परिबुध्य<br>माना । लोकस्य<br>लज्जामजहां म-<br>याऽहो दिनेऽपि दु-<br>ग्धे खलु मक्षिका-<br>त्ता ॥१॥ | परप्रियो जातु भवेत्स्व-<br>कीयको नैवेति चित्ते प-<br>रिजानती सती ॥ लोकस्य<br>लज्जामजहामहो मया<br>दिनेऽपि जग्धा खलु दुग्ध-<br>मक्षिका ॥१॥ |
| १५५- | ७ | क्षणं | त्रपां |
| ,,- | १६ | पतिकोपमा तु | पतिकादृष्टान्तस्तु |
| ,,- | १६ | प्रभवेऽर्थाद्रङ्कस्य<br>राजत्वदशायां | प्रभवे |
| १५६- | १९ | निद्राच्छेद्रा | निद्राच्छेदा |
| १५८- | ४ | हृदये कृत्वा हस्तं<br>पश्यास्या वेपथुः<br>कीदृक् ॥१॥ | पश्यास्या हृदि हस्तं कृ-<br>त्वा कम्पोऽधुनापि नो<br>नष्टः ॥ १ ॥ |
| १६०- | ६ | वैभाव | वैभवां |
| १६२- | १२ | क्रोधामर्ष | क्रोधादमर्ष |
| ,,- | १४ | इच्युतें | इत्युच्यतें |
| १६३- | ३ | ४ | ४० |
| ,,- | १२ | तुपंत्र | तपत्र |
| ,,- | १४ | च्छत्र | च्छेत्र |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६४- | ३ | तर्कना | तर्कणा |
| ,, | १ | उदयतः। | एषां नामान्येव लक्षणानि। उदयमानस्य |
| ,, | १० | दुदयन् | 'दुदयमानो |
| १६६- | ६ | खातः कथमयं केन | अहो कथमयं खातः |
| १७०- | १३ | रसा | रसो |
| १७१- | २० | आनायिता | अनीता |
| १७४- | १४ | चलैनर्य | चलैर्नय |
| १७५- | १५ | शृङ्गाररसालम्बनीभूतस्त्रीपुंसोर्नायिकानायकसंज्ञाकरणे धुरंधरस्यायमभिप्रायः। नायकशब्दार्थः प्रधानमिति। "नायकः प्रधाने" इति चिन्तामणिः॥ प्रकरणवशाच्छृङ्गाररसस्य लाभः। सामर्थ्यां रूढिः। तथा च शृङ्गाररससामर्थ्यां मुख्यत्वं नायकत्वम्। सा च विभावानु- | रसप्रवर्तकत्वमालम्बनत्वम्। आलम्बनोत्पन्ना एव स्थायिभावा उद्दीपनादिभिरुत्कर्षमापाद्यमाना रसदशामाप्नुवन्तीति। वयोरूपचातुर्यादिसर्वगुणसंपन्ननारीनरयोरेव शृङ्गाररसप्रवर्तकत्वात्तादृशनारीनरयोर्धुरंधरेण नायिकानायकेति |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | भावसंचारिस्था- | संज्ञा कथिता। प्रवर्तक- |
| | | यिभावरूपा। त- | श्च नेतृपदवाच्यः। ने- |
| | | स्यां चालम्बन- | ता नायक इति पर्याया- |
| | | विभावस्य मुख्य- | न्तरम्। "नायकः ने- |
| | | त्वं तु प्रथमं पुरुष- | तरि। नेता प्रवर्तके" इति |
| | | स्य स्त्रीसंबन्धा- | चिन्तामणिः ॥ नायिके- |
| | | त्स्त्रियाश्च पुरुष- | त्यत्र स्त्रीत्वे टाप् ॥ |
| | | संबन्धाद्वा रत्यु- | |
| | | त्पादे उद्दीपनवि- | |
| | | भावादयो मिलि- | |
| | | त्वातमत्यन्तंस्वा- | |
| | | दूकुर्वन्तीति ॥ | |
| १७६- | ३ | प्रकर्षेण | बलेन |
| ,,- | ४ | प्रवृद्धे" | प्रवृद्धे। प्र शक्तौ" |
| ,,- | ६ | न्यामानवतीप्र-<br>भृतयः | न्याः |
| १७७- | १२ | अनुकूलातिरिक्त-<br>प्रकारत्रयस्यो | उक्तप्रकाराणामु |
| ,,- | १५ | ग्रन्थेषु | ग्रन्थेष्वपि |
| १८२- | १४ | हरिणा | हरिणी |
| १८३- | २ | सपन्त्यः | सपत्न्याः |
| १८४- | ६ | रक्ता- | रक्त- |
| ,,- | ७ | अश्रुतादृश | अश्रु तादृश |
| ,,- | ८ | चानुभावः ॥ | चानुभावः ॥ ममतु मत, |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | | दैवहेतुकवियोगस्य शाप-हेतुकवियोगेऽन्तर्भावः ॥ यथा— दर्शनसुखसंभोगैरुन्धन्त्य-श्रूणि मेलनेऽप्यालि ॥ हा हन्त मे विधात्राऽलेखि न भाग्येऽपि संयोगः ॥ १ ॥ अश्रुसात्त्विकशीलायाः स-खीप्रतीयमुक्तिः॥ यथावा- दिष्ट्या चतुष्पथ इमौ स-मितावकस्माल्लब्धे च सं-गतिमिते नयने विशङ्कम्॥ श्लेषोत्सुकौ च परिवादि-कथाविमुक्तौ रत्नापहार-विकलाविव तावभूताम्॥१॥ |
| २४८ | १८ | दशरूपक | भोजमहाराजस्तादृशप्रि-यकृतदुःखस्योपलक्षणेन संग्रहं कृत्वा करिणीकरु-णविषयमिदमुदाहरण-माह ॥ दशरूपक |
| १८५- | ४ | टीकायाम्-"यथा मृतत्वेन निश्चित एव करुणः। तथा जीवितत्वेन 'नि-श्चित एव विप्रल- | टीकाकारो रसतरङ्गिण्या उक्तलेखं रसतरङ्गिणीक-थितशोकस्थायिभावलक्ष-णाभिप्रायेण दशरूपका-नुसारमेवं योजयामास ॥ |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | म्भः ।" इति स्फुटीकृतम् ॥ | "मृते जीवनाशायां तथाविधरत्यां वैक्लव्यस्य गुणीभावेन निरुक्तरत्यनालिङ्गितत्वाभावाद्विप्रलम्भशृङ्गारः । जीवत्यपि मृतत्वनिश्चयदशायां निरुक्तवैक्लव्यस्य तथाविधरत्यनालिङ्गितत्वात्करुणोऽपि निर्वहतीत्याशयेनोत्तरयति" इति ॥ |
| १८७- | ११ | विषादमरणनिर्वेदादयः | विषादनिर्वेदादयः |
| १८९- | १६ | परशु | यदि परशु |
| " | " | कोद्भवाच्चन्द्रादिदर्शनाभावः । तत एव च मुकुरादिनिमित्तं चन्द्रादेरवितरणम् । अन्यथात्व | कानुद्भावः, चन्द्रादयश्च दृष्टिगोचरा भवेयुश्चेद्दर्पणाद्यर्थं स तान् |
| १९०- | ८ | सुरेश्वराज्जलानिधिमैनाकशैलं | हरेर्भयाज्जलनिधिमैनाकशैलो |
| १९२- | १४ | ष्ठ धनादिकं | ष्ठीवनादिकं |
| १९४- | ३ | विदद्ध्वं | विधद्ध्वं |
| १९६- | १२ | च्छ्री कृणस्य | च्छ्रीकृणस्य |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९८- | ११ | विपय | विपये |
| २०३- | ६ | समसितत्वात् | समस्तत्वात् |
| २०४- | २० | भेदस्त्ववश्यं भाव्यः | भेदेन त्ववश्यं भाव्यम् |
| ,, | ,, | शब्दार्थे | शब्द |
| २१२- | १ | सिद्धम् | सिद्धम्। अत्र सधर्मिणामधिकगुणमुपमानमिति विवक्षितत्वात्। |
| २१४- | १६ | वर्पतो | वर्पतो |
| २१८- | ४ | त्युच्यते। | त्युच्यते। अनेन दिग्दर्शनेनान्यत्रापि कल्पनासिद्धालंकारा विज्ञेयाः। |
| ,, | २१ | शकनार्थे | शकुनार्थे |
| २२१- | २० | लोपो वाच्यार्थस्य | लोप इवादेर्वाचकस्य |
| ,, | २२ | श्लाघनीय | श्लाघनीयं |
| २२२- | ५ | उल्लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते। | चमत्कारस्य प्रधानत्वसूचनार्थमुल्लसतीति। |
| २२२- | १६ | निपेधार्थकः। परगुणसंबन्धस्य निपेध इति भावः॥ | विरोधार्थकः। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः पट् प्रकीर्तिताः॥" इति चिन्तामणिः॥ अत्र विरोधशब्दार्थो विपरीतभावः। "वि: |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| | | | रोधः विपरीतार्थे" इति चिन्तामणिः॥ इह परगुण संबन्धो नास्तीति भावः ॥ |
| २२५. | ७ | क्वासि | क्वास्ति |
| " | १४ | क्वचिच्च | कुवलयानन्देऽप्युक्तेरिदमुदाहरणम् । मम मते तु नेदं भूषणम्, किं तु दूषणमेतत् । क्वचिच्च |
| २२६. | ११ | न्ना | पूर्ववन्ना |
| " | १३ | ऽसंबन्धे | ऽसंवन्धे योगस्य |
| " | २० | संबन्धेऽ | संवन्धेऽयोगस्या |
| २३२. | १ | भृश | भृशं |
| २३४. | ५ | अधिकस्यप्रकारद्वयं | अधिकद्वयं |
| " | १३ | नृपयशस आ | नृपगुणगणस्या |
| " | १५ | दाधेयाधिक्य | दाधेयपृथुलत्व |
| " | १६ | धाराधिक्य | धारपृथुलत्व |
| " | १९ | द्राजराजेश्वरयशस आ | नृपगुणगणस्या |
| " | २० | राजराजेश्वरयशसस्ता | नृपगुणगणस्य ता |
| २३६. | ६ | संबन्धिनोऽन्येऽप्यर्था | संबन्धीन्यन्यान्यपि वस्तूनि |
| २४०. | १० | अत्रातरङ्ग | अत्रान्तरङ्ग |
| " | ११ | बहिरङ्गसंख्या | बहिरङ्गसख्या |
| " | १७ | किं त्व | परं त्व |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४१ | २ | ऽन्तर्भावात् ॥ | ऽन्तर्भावात् ॥ गोपने निषेधे च महदन्तरम् ॥ |
| ,, | ६ | यथा— | अत्र चन्द्रालोककारेण च्छन्दोवशादपन्हुतेः 'पर्यायोऽपन्हव इत्युक्तः ॥ यथा—' |
| ,, | ८ | अपन्हूय | अपन्हुत्य |
| २४२ | ६ | एव ॥ ४ ॥ | एव ॥ कल्पितभ्रान्तिपूर्वा यथा "जटा नेयं वेणीकृतकचकलापो न गरलं, गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम्। इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा, पुरारातिभ्रान्त्या कुसुमशर! किं मां प्रहरसि ॥ १ ॥" अत्र स्वयं कुवलयानन्दकारो लिखति "अत्र कल्पितभ्रान्तिर्जटा नेयमित्यादिनिषेधमात्रोन्नेया । पूर्ववत्प्रश्नाभावात्" इति ॥ ४ ॥ |
| २४३ | १६ | अभावः पूर्वरूप- | वैपरीत्यं तु यत्र स्यात्पूर्वस्य यत्र स्यान्मरु--रूपस्य. भूपते!॥ नायक! ॥ |
| २४४ | ३ | संजागृतिं | संजागरं |
| २४६ | १२ | प्रस्तुत | अत्र प्रस्तुत |

| पृष्ठ पंक्ति | | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५२- | १,३ | नर्तयति | नर्तयते |
| २५३- | ३ | प्रमादः । | प्रमादः । पूर्वोदाहरणे उत्प्रेक्षालंकारः । उत्तरोदाहरणे चारिनगरशून्यतायाः पर्यायतया कथनात्पर्यायोक्तिरलंकारः ॥ |
| २५४- | १८ | त्वम् | त्वम् । |
| २५६- | ५ | कामप्रदोधूर्यां | कामप्रदोग्धूर्यां |
| २५८- | ३ | अष्टचत्वारिंशो | अष्टचत्वारिंशद् |
| ,, - | ४ | स्त्वराम | स्वाराम |
| ,, - | १० | कां | किं |
| २६१- | ५ | आक्षेपस्य प्रकार | आक्षेप |
| २६२- | १५ | योग्यतात्वा | योग्यताया अ |
| २६३- | २ | निषेधवचने गोपनस्य | निषेधगोपनस्य |
| ,, - | ६ | अत्रेपच्छन्दस्य | अत्रेपदित्यस्य |
| ,, - | १८ | नरेन्द्रमौले! | मरुभूपाल! |
| २६४- | ५ | कुवलये तानि | कुवलयमेतानि |
| ,, - | १६ | अत्राङ्गना | यमकव्यावृत्तये विभिन्नाकारेति ॥ अत्राङ्गना |
| २६५- | १२ | अत्र | रणाङ्गणे सोऽस्ताहं तनुत्यागी वीरः सूर्यमण्डलं भित्वा परमां गतिमासादयति । तदुक्तम् "द्वाविमौ पुरुषौ लोके सूर्यमण्डल- |

| पृष्ठ : पंक्ति | | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | | भेदिनौ । यो योगेन तनुत्यागी रणे चाभिमुखो हतः ॥ " इति ॥ अत्र |
| २६५- | १२ | शत्रुनिस्कन्दन | शत्रुनिकन्दन |
| २६६- | २ | लंकारस्य प्रकार | लंकार |
| " - | ३ | द्धर | द्धार |
| २६६- | २१ | स्मयित्वा | हसित्वा |
| २७१- | ११ | वर्षायां | वर्षासु |
| २७३- | ६ | उत्कटएककोटिक | उत्कटकोटिक |
| " - | १० | पश्चत् | पश्चात् |
| " - | १३ | यां संदेहे | यामुत्कटकोटिकसंदेहे |
| " - | १८ | ऽनुक्तस्पदा | ऽनुक्तास्पदा |
| २७४- | १४ | कामन- | कामना- |
| २७७- | १५ | चाजाननंश्च | चाजानँश्च |
| २८२- | ४ | ऽजानन्त | ऽबुध्यन्त |
| २८३- | २ | पावती | पार्वती |
| २८४- | ११ | ऽभुञ्जतो | ऽभुञ्जानस्य |
| " - | २० | यशसो | यशसा |
| २८७- | १ | पायाद्वो | पायात्त्वां |
| " - | " | देवःस दैत्यान्तको | श्रीराजराजेश्वरो |
| " - | ७ | नखसिख | शिखनख |
| " - | १६ | तावत्स्थिराः स्युर्हि राजन्तु तावद्धिमशैलशृङ्गाः मपर्वताग्राः | |
| २८८- | ५ | संदश | संदेश |
| २८६- | २ | हरिभक्तपू | हरिभक्तैर्पू |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २८९- | १२ | नामदे रङ्गकार इति तस्य रञ्जयितृत्वम्। कवीरस्तन्तुवाय इति तस्य पटोत्पादकत्वम्। | कवीरस्तन्तुवाय इति तस्य पटोत्पादकत्वम्। नामदे रङ्गकार इति तस्य रङ्कृत्वम्। |
| २९१- | ४ | पूर्वोदाहरणयोः | पूर्वोदाहरणे |
| २९२- | १५ | विद्युद्भिश्च विराजमानैर्वारिदैः | विद्युद्भिर्विराजमानैश्च वारिदैः |
| २९४- | १ | भुञ्जीत निपुणो | भुञ्ज्यात्सुनिपुणो |
| २९६- | २० | हयस्ते कुण्डलीकुर्वन्ककुभां कुण्डलीयति। मेखलीयति मेदिन्याः सृष्टेर्वै कङ्कणीयति॥१॥ | हयस्ते कुण्डलीकुर्वन्ककुभां कुण्डलायते। मेखलायत उर्व्यास्तु सृष्टेर्वै कङ्कणायते॥१॥ |
| २९७- | १ | णिच् | क्यङ् |
| ,, - | ७ | कामोऽपि | स्मरोऽपि |
| ,, - | १० | दोलन्त्याराधिकायां वै हारो दोलति वक्षसि। चित्ते दोलति पञ्चेषुः कृष्णो दोलति नेत्रयोः॥ | दोलायमानराधायाः स्मरो दोलायते हृदि। वक्षे दोलायते हारो दृशोर्दोलायते हरिः॥ |
| ३००- | ३ | यस्मिन्विनिश्चयो | यस्मिंस्तु निश्चयो |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३००- | २१ | प्रयात्सवाच्यां | याति प्रतीत्यां |
| ३०१- | ३ | दर्शितः । | दर्शितः । नात्र शङ्कायां चमत्कारः ॥ |
| ३०२- | १५ | इदमुपदेशस्य | इदं परोपदेशस्य |
| ३०६- | ७ | कलौत्वमेव यश-सां ग्राहकोऽसिच-मापते ॥ | यशवन्त! त्वमेवासि यश-सां ग्राहकः कलौ ॥ |
| " - | १५ | लक्ष्यमाण | वक्ष्यमाण |
| ३११- | १७ | हरणम् । | हरणम् । एतेषां मतेऽत्र परिकरनाम्नः संगतिस्तु शिवस्यतापहरणे शशिशेखरतागान्त्रिकाघन्धरूपेति |
| " - | २० | विशेषणस्याभिप्राये | साभिप्रायविशेषणे |
| ३१५- | २१ | वर्जनपु | वर्जनपू |
| ३२१- | ४ | यथा वा | • |
| ३२२- | १२ | ७३ | ३७ |
| ३२९- | ३ | प्रजां | प्रजा |
| ३३१- | १ | न्यायो दर्शितः । | न्यायस्य दिग्दर्शनं विहितम् । |
| " | २ | तस्मिन्न | तस्मिन्नेवा |
| ३३२- | ४ | यथा— | क्रमेण यथा— |
| " | १२ | यथा वा— | ० |
| " | १८ | भाव्यार्थ | भाव्यर्थ |
| ३३९- | २ | निश्चयः— | निश्चयः । |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३९- | ३ | ऽध्य। | ऽध्य– |
| ३४१- | ६ | मरुभूपाल! भवतश्चरणं मानसं सरः। मनोमरालो ह्यनिशं ममासावभिकाङ्क्षति॥ | तव पन्मानसरोवरं भो यशवन्तनृपाल!। मनोमरालोऽनिशमसौ वाञ्छति मम भूपाल!॥ भूपैरलति शोभते इति भूपालः। नृपालेत्यस्य विशेषणम्॥ |
| ,, - | १६ | श्रवणमत्रेण | श्रवणमात्रेण |
| ३४४- | १ | तिदुषां | विदुषां |
| ३४५- | १० | भोगस्य स्रक्चन्दनादेरनुभोक्ता बलदेवः। | भोगस्याहेः शरीरस्य सेवनकर्ता बलदेवः। शेषावतारत्वात्॥ |
| ३४७- | ६ | धारयन्तीति | धारयत इति |
| ३५१- | १३ | तत्रालपां | तत्रापा |
| ३५६- | ८ | नामां | नामा |
| ,, | १८ | ककुना | काका |
| ३५७- | १६ | कार्मुकाञ्छीघ्रम्। | कार्मुकाण्याशु। |
| ३५८- | ९ | आतिथ्यं तु | आतिथ्यविषये विधिद्वयम् |
| ३५९- | ५ | लंकारो भाव्यः। | लंकारेण भाव्यम्। |
| ,, | ११ | अर्वाचीना विकासंस्वतन्त्रालंकारमाहुः। | कश्चिद्धुरंधरो विकासं स्वतन्त्रालंकारमङ्गीचकार। |
| ३६२- | ३ | त्वस्मिंस्थले | त्वस्मिन्स्थले |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६३- | १७ | मुपेहीशं | मुपेहीशं |
| ३६४- | ८ | मजानन्तं मित्रं | मजानन्मित्रं |
| ,, | १२ | इह | ० |
| ३६६- | १८ | तद्वद्न्योन्यरिपवो | तद्वद्विपवोऽन्योन्यं |
| ३६७- | १५ | विचित्रविषमयोर्नामार्थानुसारि विरोधस्य च | विचित्रविषमविरोधेषु नामार्थानुसारेण |
| ,, | २० | प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते। | ० |
| ३६८- | १ | रागेण पुनराक्रान्तं जायते जगतां मनः। | ० |
| | ३ | भावो मालिन्यकारिणो रागोत्पादकत्वाभावो रागोत्पादकस्य च मालिन्यकर्तृत्वाभाव इति विरुद्धक्रियायां | भाव इति विरुद्धक्रिययोः |
| | ६ | युक्तः ॥ | युक्तः॥ अत्र दण्डिकृतकाव्यादर्शस्य टीकाकारो वदति "संबन्धिभेदेन शब्दयोर्भिन्नत्वाद्विरोधप्रशमनम्"। अस्यायमभिप्रायः, वर्धमानशब्दस्य |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | | हंसैः सह, क्षीयमाणश-ब्दस्य च मयूरैः सह सं-बन्ध इति संबन्धभेदा-द्विरोधस्य परिहार इति। "विरुद्धानां संसर्गस्तत्त्व-तो न संभवतीतीह वि-रोधस्याभास इष्यते।" इति ॥ मम तु मतं, अयं प्रमादः। विरोधपरिहारे ऽत्वलंकारस्यापि परिहा-रात्। विरोधिसंसर्ग ए-वास्यालंकारस्य रमणीः यत्वात्। किं च विरोध-स्याभासेऽलंकारत्वाङ्गी-कारश्चेदयमाभासालंका-रः ॥ |
| ३६८- | १८ | पठत्पुरा | पठद्ध्रुवम् |
| ३७१- | १४ | प्रकारः | प्रकाराः |
| ,,- | २० | इंत्याह ॥ | इत्याह॥ अस्यायमभिप्रा यः, प्रकारप्रकारिभावः सामान्यलक्षणे सत्येवो-पपद्यते। यस्य सामान्य-लक्षणाभावस्तस्य विशे-षाभावः। |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३७५- | १४ | परिसेवते | परिषेवते |
| ३७८- | २ | मुच्यन्त इहैव नाथाः ॥ | मुच्यामह ईं इहेशाः ॥ |
| ३८३- | १५ | शोभामादधानः | शोभां हरमाणः |
| ३८४- | ५ | कातौ | कान्तौ |
| ३९२- | ३ | परिहासे | सखीकृतपरिहासे |
| ,, | १४ | यथायोग्यम्॥ | यथायोग्यम् । अत्रोपमायां यथायोग्यत्वात्समालंकारः ॥ |
| ३९५- | ८ | प्रोत्साहनं | प्रोत्साहितः |
| ,, | २१ | धारयेत्प्राणमद्य॥ | धारयेदद्य साऽसून्॥ |
| ३९७- | २० | प्राणेशहरे। | प्राणेश! हरे! |
| ४०५- | १७ | व्याजेनाप्रार्थय | व्याजेन प्रार्थय |
| ४०६- | २ | ऽपि | ऽपि सूक्ष्मत्वे |
| ४१०- | १ | धर्मणां | धर्माणां |
| ,, | ७ | मरुपो | मरुराड् |
| ४१५- | १० | शोभाकरा | शोभाकरी |
| ४१८- | ४ | उभयोर्मिश्रणाद्दु"तनुवपुः" इत्यस्मिन्नुदाहभयालंकारोऽयम् | रणे "अल्पदेहः" इति पदपरिवर्तने पूर्वपदस्य परिवर्तनासहत्वेनोत्तरपदस्य च परिवर्तनसहत्वेन शब्दार्थोभयविषयमिश्रणात्पुनरुक्तिवदाभासाख्य उभयालंकारोऽयम्। एवं "करि- |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम्. |
|---|---|---|---|
| | | | कुञ्जर-रुधिररक्त-तेजोधा-<br>ममहः- इन्द्रोहरिर्जिष्णुः"<br>एतेष्वप्युदाहरणेषु ज्ञेयम् ॥ |
| ४१८- | ११ | शब्द | श्रवण. |
| ४१६- | ११ | चिन्तामणि | अत्र वाचकलुप्तोपमा ॥<br>चिन्तामणि॰ |
| ४२१- | ३ | दूषणोद्धारपूर्वकं | दूषणोद्धारे सति |
| ४२२- | १० | यो दूरीकृतवान-<br>च्छः स पाया | योऽपाकरोत्समरस्योऽच्छः<br>संपाया |
| ४२६- | १६ | रेम्यः | रेभ्यः |
| ४२७- | १ | विशेषाश्च | विशेषैश्च |
| ,,- | २ | व मिथोऽलंकार-<br>त्वमापद्यन्त | वैकोऽपरस्यालंकारत्वमा-<br>पद्यत |
| ४२८- | ८ | कृष्णविषयो गो-<br>पानां विस्मय | विस्मय |
| ४३२- | २ | भयभीतो भवन्न<br>भूत् | भयाद्बिभ्यदभून्नृपः |
| ४३३- | २ | तथां | तथा |
| ४३३- | ११ | सहोक्त्यलंकारः ॥ | सहोक्त्यलंकारः । अत्र<br>कश्चित् भवता सर्वालं-<br>काराणां प्रथमोदाहरणं<br>राजराजेश्वरयशवन्तसिं-<br>हयशोविषयमुपदिष्टमि- |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| | | | तीह रसवदाद्यलंकारेष्व-<br>पि तस्य नियमस्य निर्वा-<br>हः कुतो न विहित इति<br>वदेच्चेत्तस्येदं समाधानम्।<br>विधिसृष्टो राजा मनु-<br>ष्येषु न गणितः । ईश्व-<br>रकोटिकत्वात् । तदुक्तं<br>भगवद्गीतायां भगवता<br>श्रीकृष्णेन "नराणां च<br>नराधिपः" इति॥ कवि-<br>सृष्टो रस ईश्वरत्वेनोक्तः।<br>"रसो वै सः" इति श्रु-<br>तिः ॥ केनचित्प्रतिभाव-<br>ताप्युक्तम्-"मूर्धाभिषिक्ता<br>महिषी न स्यात्परिजना-<br>स्पदम् । रत्ननिर्मितदेव-<br>स्य नैव स्याद्भूषणाभि<br>धा ॥ १ ॥" इति ॥ स्वे-<br>ष्टदेवतायां रत्नादिमयी<br>मूर्तिर्हृदयादौ संधारिता<br>भूषणवच्छोभाकरी सत्य-<br>पि देवताविशेषोच्चपद-<br>महिमवशान्न शिरोभूष-<br>णकण्ठभूषणादिव्यवहा-<br>रास्पदम् । पट्टराज्यपि |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | | परिवाररूपैव। परं तूक्तोच्चपदमहिमवशात्सा परिवारे न गण्यते। तथैव स्थायिभावो हि रसरूपः। क्वचित्संचारिभावोऽपि रसापेक्षया प्रधानत्वमाप्नोति। रसवदाद्यलंकारेषु च न कोऽपि नवीनोऽर्थोऽलंकारत्वमापद्यते, भावा एवालंकाराः भवन्तीति साहित्यशास्त्रस्य सामग्र्यामीश्वरत्वोच्चपदभाजां रसत्वयोग्यानां भावानामुक्तमहिमवशात्तेषां सर्वथालंकारत्वेनैव गणनमसमीचीनमिति सूचनायास्माभिर्भावालंकारोदाहरणेष्वर्थालंकारोदाहरणक्रमः परित्यक्तः॥ |
| ४३५ | ११ | योग्यतात्वा | योग्यतायां अ |
| ,, | १३ | अतिशयोक्तिरिति | लोकसीमालङ्घनेति |
| ४३९ | १२ | स्नेहश्च ॥ | स्नेहश्च ॥ मोहशब्दस्याऽभिमतार्थकत्वात् स्नेहस्यापि ग्रहणम्। |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४४२- | ६ | मुपगएहिं | मुपागएहिं |
| „ | १० | वद्दम्मि | वन्दम्मि |
| ४४६- | ३ | क्रमेण | अत्र गुम्फार्थो ग्रन्थनं स्पष्टम् ॥ क्रमेणं |
| ४६७- | १२ | निसृतः | निरितः |
| ४७४- | १३ | च्छतविषये | च्छुतार्थे |
| ४७७- | १३ | रुद्धर | रुंदहर |
| ४८०- | ६ | सदस्या | पौरा |
| ४८६- | २ | ।५। | ।५। कुलकम् ॥ |
| „ | ८ | दध्यङ्ङ | दाधीचा |
| „ | १४ | राकायां सितपक्षे भूपेन्द्र! पौर्णमास्यां सुधाशुभेऽथ, सोमस्य करस्याथ वासरे विमले॥ | वासरे भूप! ॥ |
| ४८८- | १ | परिजन | भार्या |
| ४८९- | २ | वितानिना या प्र | वितता या संप्र |
| ४९२- | १० | दयं ग्रन्थः शीघ्रं संमुद्रय | दस्य ग्रन्थस्य शीघ्रं संमुद्रणेन |
| ४९३- | ७ | मानेयोऽय | मानेयोऽयं |